नारदः—

एवं यो वर्तते राजा चातुर्वर्ण्यस्य रक्षणे ।
स विहृत्यैव सुसुखी शक्रस्यैति सलोकताम् ॥ १३०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
॥ २१ ॥ मन्त्रपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये १३०॥ श्लोकाः]

---

## षष्ठोऽध्यायः ॥

उत्तमसभालाभतुष्टेन युधिष्ठिरेण सभाविषयकप्रश्ने कृते नारदस्य इन्द्रादिसभावर्णनप्रतिज्ञानम् ॥ १ ॥

---

वैशम्पायनः—

सम्पूज्याथाभ्यनुज्ञातो महर्षेर्वचनात् परम् ।
प्रत्युवाचानुपूर्व्येण धर्मराजो युधिष्ठिरः ॥ १

युधिष्ठिरः—

भगवान् यन्ममाहैतन्मदर्थं धर्मसंहितम् ।
यथाशक्ति यथान्यायं क्रियतेऽयं विधिर्मया ॥ २

राजभिस्तु तथा कार्यं पुराणज्ञैर्न संशयः ।
यथान्यायोपनीतार्थं कृतं हेतुमदर्थवत् ॥ ३

वयं तु सत्पथं तेषां यातुमिच्छामहे प्रभो ।
न तु शक्यं तथा गन्तुं यथा तैर्नियतात्मभिः ॥ ४

**वैशम्पायनः—**

एवमुक्त्वा स धर्मात्मा वाक्यं तमभिपूज्य च ।
मुहूर्तात् प्राप्तकालं च दृष्ट्वा लोकचरं मुनिम् ॥ ५

नारदं सुस्थमासीनम् उपासीनो युधिष्ठिरः ।
तं तु विश्रान्तमासीनं देवर्षिममितद्युतिम् ॥ ६
अपृच्छद्राजमध्ये तं प्रीतिपूर्वमिदं तथा ॥ ६॥

**युधिष्ठिरः—**

भगवान् सञ्चरँल्लोकान् सदा नानाविधान् बहून् ।
ब्रह्मणा निर्मितान् पूर्वं प्रेक्षमाणो मनोजवः ॥ ७॥

ईदृशी भविता काचिद् दृष्टपूर्वा सभा क्वचित् ।
इतो वा श्रेयसी ब्रह्मंस् तन्ममाचक्ष्व पृच्छतः ॥ ८॥

**वैशम्पायनः—**

तच्छ्रुत्वा नारदस्तस्य धर्मराजस्य भाषितम् ।
पाण्डवं प्रत्युवाचेदं स्मयन् मधुरया गिरा ॥ ९॥

**नारदः—**

मानुषेषु न मे काचिद् दृष्टपूर्वा न च श्रुता ।
सभा मणिमयी राजन् यथेयं तव भारत ॥ १०॥

सभां तु पितृराजस्य वरुणस्य च धीमतः ।
कथयिष्ये तथेन्द्रस्य कैलासनिलयस्य च ॥ ११॥

ब्रह्मणश्च सभां दिव्यां कथयिष्ये गतक्लमाम् ।

यदि ते श्रवणे बुद्धिर् वर्तते भरतर्षभ ॥ १२॥

वैशम्पायनः—

नारदेनैवमुक्तस्तु धर्मराजो युधिष्ठिरः ।
प्राञ्जलिर्भ्रातृभिस्सार्धं तैश्च सर्वैर्नृपैर्वृतः ॥ १३॥

नारदं प्रत्युवाचेदं सभामध्ये [1]व्यवस्थितम् ॥ १४

युधिष्ठिरः—

सभाः कथय तास्सर्वाश् श्रोतुमिच्छामहे वयम् ॥ १४॥

किन्द्रव्यास्तास्सभा ब्रह्मन् किंविस्ताराः किमायताः ।
पितामहं च के तस्यां सभायां पर्युपासते ॥ १५॥

वासवं देवराजं च यमं वैवस्वतं च के ।
वरुणं च कुबेरं च सभायां पर्युपासते ॥ १६॥

एतत् सर्वं यथातत्त्वं देवर्षे वदतस्तव ।
श्रोतुमिच्छाम सहिताः परं कौतूहलं हि नः ॥ १७॥

वैशम्पायनः—

एवमुक्तः पाण्डवेन नारदः प्रत्युवाच तम् ।
क्रमेण राजन् दिव्यास्ताश् श्रूयतामिह नस्सभाः ॥ १८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि षष्ठोऽध्यायः ॥ ६ ॥
॥ २१ ॥ मन्त्रपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये १८॥ श्लोकाः]

---

1. अ—युधिष्ठिरः ।

## ॥ सप्तमोऽध्यायः ॥

इन्द्रसभावर्णनम् ॥ १ ॥

नारदः—

शतक्रतुसभा दिव्या भास्वरा कर्मनिर्मिता ।
स्वयं शक्रेण कौरव्य निर्जितार्कसमप्रभा ॥ १

विस्तीर्णा योजनशतं शतमध्यर्धमायता ।
वैहायसी कामगमा पञ्चयोजनमुच्छ्रिता ॥ २

जराशोकक्लमापेता निरातङ्का शिवा सुखा ।
वेश्मासनवती रम्या दिव्यपादपशोभिता ॥ ३

तस्यां देवेश्वरः पार्थ सभायां परमासने ।
आस्ते शच्या महेन्द्राण्या श्रिया लक्ष्म्या च भारत ॥ ४

बिभ्रद्वपुरनिर्देश्यं किरीटी लोहिताङ्गदः ।
विरजोम्बरश्चित्रमाल्यो ह्रीकीर्तिद्युतिभिस्सह । ५

तस्यामुपासते नित्यं महात्मानं शतक्रतुम् ।
मरुतस्सर्वतो राजन् सर्वे च गृहमेधिनः ॥ ६

सिद्धा देवर्षयश्चैव साध्या देवगणास्तथा ॥ ६॥

एते सानुचरास्सर्वे दिव्यरूपास्स्वलङ्कृताः ।
उपासते महात्मानं देवराजं शतक्रतुम् ॥ ७॥

तथा देवर्षयस्सर्वे पार्थ शक्रमुपासते ।
अमला धूतपाप्मानो दीप्यमाना इवाग्नयः ॥ ८॥
तेजस्विनस्सोमपाश्च विपापा विगतक्लमाः ।
पराशरः पर्वतश्च तथा सावर्णिगालवौ ॥ ९॥
एकतश्च द्वितश्चैव त्रितश्चैव महामुनिः ॥ १०
शङ्खश्च लिखितश्चैव तथा गौरशिरा मुनिः ।
दुर्वासा दीर्घतपसो याज्ञवल्क्योऽथ भालुकिः ॥ ११
उद्दालकश्श्वेतकेतुश् शाण्ड्यश्शाट्यायनस्तथा ।
हविष्मांश्च हविष्मश्च हरिश्चन्द्रश्च पार्थिवः ॥ १२
हृद्यश्चोदरशाण्डिल्यः पाराशर्यगविप्लवौ ।
जाबालिर्वामदेवश्च शक्तिर्गार्ग्यसुवामनौ ॥ १३
वातस्कन्धो विशाखश्च विधाता काल एव च ।
अनन्तदत्तस्त्वष्टा च विश्वकर्मा च तुम्बुरुः ॥ १४
[1]मरुत्तश्च मरीचिश्च स्थाणुश्चात्रिर्महातपाः ।
कक्षीवान् गौतमस्तार्क्ष्यस् तथा वैश्वानरो मुनिः ॥ १५

---

1. क—अयोनिजा योनिजाश्च वायुभक्षा हुताशिनः ।
ईशानं सर्वलोकस्य वज्रिणं समुपासते ॥
सहदेवस्सुनीथश्च वाल्मीकिश्च महातपाः ।
समीकस्सत्यवांश्चैव प्रचेतास्सत्यसङ्गरः ।
मेधातिथिर्वामदेवः पुलस्त्यः पुलहः क्रतुः ॥ [अधिकः पाठः]

षडर्तुकवषो धूम्रो रैभ्यो नलपरावसू ।
स्वस्त्यात्रेयो जरत्कारुः कहोलः काश्यपस्तथा ॥ १६
विभण्डकर्श्यश्रृङ्गौ च उन्मुखो विमुखस्तथा ।
ऋषिः कालकवर्षीयस् सुश्रुतोऽथ हिरण्यदः ॥ १७
संवर्तो वेदहव्यश्च विश्वसेनश्च वीर्यवान् ।
दिव्या आपस्तथौषध्यश् श्रद्धा मेधा सरस्वती ॥ १८
अर्थो धर्मश्च कामश्च विद्युतश्चापि पाण्डव ।
प्राचीदिग्यज्ञवाहाश्च पावकास्सप्तविंशतिः ॥ १९
[1]अग्नीषोमौ तथेन्द्राग्नी मित्रश्च सविताऽर्यमा ।
भगो विश्वे च साध्याश्च शुक्रामन्थी च भारत ॥ २०
यज्ञाश्च दक्षिणाश्चैवं ग्रहास्स्तोभाश्च सर्वशः ।
यज्ञवाहाश्च ये मन्त्रास् सर्वे तस्यामुपासते ॥ २१
तथैवाप्सरसो राजन् रम्भोर्वश्यथ मेनका ।
घृताची पञ्चचूडा च विप्रचित्तिपुरोगमाः ॥ २२
[2]विश्वावसुश्चित्रसेनः पर्वतस्तुम्बुरुस्तथा ।
विद्याधराश्च राजेन्द्र गन्धर्वाश्च मनोरमाः ॥ २३
नृत्यवादित्रगीतैश्च भावैश्च विविधैरपि ।

---

1 ख-ख-अ—अग्निष्टोमः
2. ग-घ-ङ—कोशेषु इदमर्धं न दृश्यते ।

रमयन्ति महात्मानं देवराजं शतक्रतुम् ॥ २४

स्तुतिभिर्मङ्गलैश्चैव स्तुवन्तः कर्मभिस्तथा ।
विक्रमैश्च महात्मानं स्तुवन्तो रमयन्त्युत ॥ २५

जलवाहाश्च मेघाश्च वायवस्स्तनयित्नवः ॥ २५॥

ब्रह्मराजर्षयस्सर्वे तथा देवर्षयोऽप्युत ।
विमानैर्विविधै[1]रम्यैर् भ्राजमानैरिवाग्निभिः ॥ २६॥

स्रग्विणो भूषितास्सर्वे यान्ति चायान्ति चापरे ।
बृहस्पतिश्च शुक्रश्च नित्यमास्तां विशाम्पते ॥ २७॥

एते चान्ये च बहवो विपाप्मानो यतव्रताः ।
विमानैस्सूर्यसङ्काशैस् सोमवत् प्रियदर्शनाः ॥ २८॥

ब्रह्मणो वचनाद्राजन् भृगुस्सप्तर्षयस्तथा ॥ २९

एषा सभा मया दृष्टा दिव्या पुष्करमालिनी ।
शतक्रतोर्महाबाहो याम्यां शृणु ममानघ ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि सप्तमोऽध्यायः ॥ ७ ॥

॥ २१ ॥ मन्त्रपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये ३० श्लोकाः]

---

1. क-घ-ख-अ—रम्ययैः

## ॥ अष्टमोऽध्यायः ॥

यमसभावर्णनम् ॥ १ ॥

नारदः—

कथयिष्ये सभां दिव्यां याम्यां राजन् निबोध मे ।
वैवस्वतस्य चार्थाय विश्वकर्मा चकार याम् ॥ १

तेजस्विनी सभा राजन् बभूव शतयोजना ।
विस्तारायामसम्पन्ना भूयसी चापि पाण्डव ॥ २

अर्कप्रकाशा भ्राजिष्णुस् सर्वतः कामचारिणी ।
नैवातिशीता नात्युष्णा मनसश्च प्रहर्षिणी ॥ ३

न शोको न जरा तस्यां क्षुत्पिपासे न चाप्रियम् ।
न दैन्यं न च कार्पण्यं प्रतिकूलं न चाप्युत ॥ ४

सर्वे कामास्स्थितास्तस्यां ये दिव्या ये च मानुषाः ।
रसवन्तः प्रभूताश्च भक्ष्यभोज्याश्च भारत ॥ ५

पुण्यगन्धास्स्रजस्तत्र नित्यपुष्पफला द्रुमाः ।
रसवन्ति च तोयानि शीतान्युष्णानि चैव हि ॥ ६

वृक्षाश्च विविधास्तत्र नित्यपुष्पा मनोरमाः ।
शीतलानि च तोयानि सुखोष्णानि च भारत ॥ ७

तस्यां राजर्षयः पुण्यास् तथा ब्रह्मर्षयोऽमलाः ।

यमं वैवस्वतं तात प्रहृष्टाः पर्युपासते ॥ ८
ययातिर्नहुषः पूरुर् मान्धाता सोमको नृगः ।
त्रसदस्युश्चैत्ररथः कृतवीर्यश्श्रुतश्रवाः ॥ ९
अरिपुण्ड्रस्सुविप्रश्च कृतवेदः कृताकृतिः ।
प्रतर्दनः शिबिर्मात्स्यः पृथुवक्षा बृहद्रथः ॥ १०
ऐलो मरुत्तः कुशिकस् साङ्काश्यस्साङ्कृतिर्भवः ।
शन्तनुश्च सदश्वोर्मी कार्तवीर्यश्च पार्थिवः ॥ ११
भरतस्तथैलस्सुरथस् सुनीथो निषधो नलः ।
दिवोदासोऽथ सुमना अम्बरीषो भगीरथः ॥ १२
व्यश्वस्सदश्वो वाध्र्यश्वः पञ्चहस्तः पृथुश्रवाः ।
ऋषभो वृषसेनश्च कूपश्च सुमहाबलः ॥ १३
पृषदश्वो वसुमनाः पुरुकुत्सो ध्वजी रथी ।
आर्ष्टिषेणो दिलीपश्च महात्मा चाप्युशीनरः ॥ १४
औशीनरः पुण्डरीको ययातिर्भरतश्शुचिः ।
अंसोऽरिष्टश्च दैवाश्वो दुष्यन्तस्सञ्जयो जयः ॥ १५
भागस्वरिस्सुनीथश्च निषधोऽथ निमी रथी ।
करन्धमो बाह्कश्च सुद्युम्नो बलवान् मधुः ॥ १६
कपोतरोमा तृणकस् सहदेवार्जुनौ तथा ।
रामो दाशरथिश्चैव लक्ष्मणोऽथ प्रतर्दनः ॥ १७

अलर्कः कक्षसेनश्च गयो गौराश्व एव च ।
जामदग्न्यश्च रामश्च नाभागसगरौ तथा ॥ १८

भूरिद्युम्नो ह्यधीरश्च पृथाश्वो जनकस्तथा ।
वैन्यो राजा परिषेणः पुरुजो जनमेजयः ॥ १९

ब्रह्मदत्तस्त्रिगर्तश्च राजोपरिचरस्तथा ।
महाभुजो महाजानुर् मायासृष्टो हयोऽनघः ॥ २०

पाद्मश्च मुचुकुन्दश्च भूरिद्युम्नः प्रसेनजित् ।
अरिष्टनेमिः प्रद्युम्नः पृथुश्च जनकस्तथा ॥ २१

शतं मत्स्या नृपतयश् शतं नीपाश्शतं गयाः ।
धृतराष्ट्राश्चैकशतम् अशीतिर्जनमेजयाः ॥ २२

शतं च ब्रह्मदत्तानां वैरिणो वैरिणस्तथा ।
शन्तनुश्चैव राजर्षिः पाण्डुश्चैव पिता तव ॥ २३

ऋषभ्भवश्शतरथो देवराजो जयद्रथः ।
[1]घृषादर्विश्च राजर्षिर् धाम्ना सह समृद्धिना ॥ २४

अथापरे सहस्राणि ये गताश्शशबिन्दवः ।
इष्ट्वाऽश्वमेधैर्बहुभिर् महद्भिर्भूरिदक्षिणैः ॥ २५

एते राजर्षयः पुण्याः कीर्तिमन्तो बहुश्रुताः ।

---

1. क—वृषाकपिश्च राजर्षिर्धर्मात्मा सह मन्त्रिभिः ।
ख-घ—पृषादव्यश्च राजर्षिः धर्मास्सर्वे समन्त्रिणः ।
अ—पृषदर्विश्च राजर्षिर्दान्तास्सर्वे समन्त्रिणः

तस्यां सभायां राजर्षे वैवस्वतमुपासते ॥ २६

अगस्त्योऽथ मतङ्गश्च कालो मृत्युस्तथैव च ।
यज्वानश्चैव सिद्धाश्च ये च योगशरीरिणः ॥ २७

अग्निष्वात्ताश्च पितरः फेनपाश्चोष्मपाश्च ये ।
स्वधावन्तो बर्हिषदो मूर्तामूर्ताश्च ये स्मृताः ॥ २८

कालचक्रं च साक्षाच्च भगवान् हव्यवाहनः ।
नरा दुष्कृतकर्माणो दक्षिणायनमृत्यवः ॥ २९

कालस्य नयने युक्ता यमस्य पुरुषाश्च ये । २९॥

तस्यां शिंशुपपालाशास् तथा काशकुशादयः ।
उपासते यमं राजन् मूर्तिमन्तो निरामयाः ॥ ३०॥

एते चान्ये च बहवः पितृराजसभासदः ।
अशक्याः परिसङ्ख्यातुं नामभिः कर्मभिस्तथा ॥ ३१॥

असम्बाधा हि सा पार्थ रम्या कामगमा सभा ।
दीर्घकालं तपस्तप्त्वा निर्मिता विश्वकर्मणा ॥ ३२॥

प्रभासन्ती ज्वलन्ती च तेजसा स्वेन भारत ।
तामुग्रतपसो यान्ति सुव्रतास्सत्यवादिनः ॥ ३३॥

शान्तास्संन्यासिनश्शुद्धाः पूताः पुण्येन कर्मणा ।
सर्वे भास्वरदेहाश्च सर्वे च विरजोम्बराः ॥ ३४॥

चित्राङ्गदाश्चित्रमाल्यास् सर्वे ज्वलितकुण्डलाः ॥ ३५

स्वकृतैः कर्मभिः पुण्यैः पारिबर्हैश्च भूषिताः ॥ ३५॥

गन्धर्वाश्च महात्मानश् शतशोऽप्सरसां गणाः ।
वादित्रं नृत्तगीतं च हास्यं लास्यं च सर्वशः ॥ ३६॥

पुण्याश्च गन्धाश्शब्दाश्च तस्यां पार्थ समन्ततः ।
दिव्यानि चैव माल्यानि उपतिष्ठन्ति नित्यशः ॥ ३७॥

शतं शतसहस्राणि धर्मिष्ठं तं प्रजेश्वरम् ।
उपासते महात्मानो रूपयुक्ता मनस्विनः ॥ ३८॥

ईदृशी सा सभा राजन् पितृराज्ञो महात्मनः ॥ ३९
वरुणस्यापि वक्ष्यामि सभां पुष्करमालिनीम् ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि अष्टमोऽध्यायः ॥ ८ ॥

॥ २१ ॥ मन्त्रपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[अस्मिन्नध्याये ३९॥ श्लोकाः]

---

## ॥ नवमोऽध्यायः ॥

वरुणसभावर्णनम् ॥ १ ॥

---

नारदः—

युधिष्ठिर सभा दिव्या वरुणस्य सितप्रभा ।
प्रमाणेन यथा याम्या शुभप्राकारतोरणा ॥ १

अन्तस्सलिलमास्थाय विहिता विश्वकर्मणा ॥ १॥
दिव्यै रत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युता ।
नीलपीतहरिच्छ्यामैस् सितैर्लोहितकैरपि ॥ २॥
अवदातैस्तथा गुल्मैः पुष्पमञ्जरिधारिभिः ॥ ३
तथा शकुनयस्तस्यां नानावर्णा मृदुस्वराः ।
अनिर्देश्या वपुष्मन्तश् शतशोऽथ सहस्रशः ॥ ४
सा सभा सुखसंस्पर्शा नातिशीता न घर्मदा ।
शुभासनवती रम्या सिता वरुणसम्मता ॥ ५
तत्रास्ते वरुणो राजा वारुण्या सह भारत ।
दिव्यमाल्याम्बरधरो दिव्यरत्नविभूषितः ॥ ६
द्वितीयेन तु नाम्ना वै गौरीति भुवि विश्रुता ।
पत्न्या स वरुणो देवः प्रमोदति सुखी सुखम् ॥ ७
दिव्यमाल्याम्बरधरा दिव्यालङ्कारभूषिताः ।
आदित्यास्तत्र वरुणं जलेश्वरमुपासते ॥ ८
वासुकिस्तक्षकश्चैव नागश्चैरावतस्तथा ।
कृष्णश्च लोहितश्चैव पद्मश्चित्रश्च वीर्यवान् ॥ ९
कम्बलाश्वतरौ नागौ धृतराष्ट्रबलाहकौ ।
गृणिनागश्च नागश्च मणिश्शङ्खनखस्तथा ॥ १०
कौरव्यस्स्वस्तिकश्चैव एलापत्रश्च वामनः ।

अपराजितश्च दोषश्च नन्दकः पूरणस्तथा ॥ ११
[1]अभीकश्शिभिकश्श्वेतो भद्रो भद्रेश्वरस्तथा ।
मणिमान् पिण्डकस्सारः कार्कोटकधनञ्जयौ ॥ १२
प्रह्लादो मूषिकादश्च तथैव जनमेजयः ।
पताकिनो मण्डलिनः फणवन्तश्च सर्वशः ॥ १३
अर्थो धर्मश्च कामश्च वसुः कपिल एव च ॥ १३॥
अनन्तश्च महानागो यं स दृष्ट्वा जलेश्वरः ।
अभ्यर्चयति सत्कारैर् आसनेन च तं विभुम् ॥ १४॥
वासुकिप्रमुखाश्चैव सर्वे प्राञ्जलयस्स्थिताः ।
अनुज्ञाताश्च शेषेण यथार्हमुपविश्य च ॥ १५॥
एते चान्ये च बहवस् सर्पास्तस्यां युधिष्ठिर ॥ १६
वैनतेयश्च गरुडो ये चान्ये परिचारिणः ।
उपासते महात्मानं वरुणं विगतज्वराः ॥ १७
बलिर्वैरोचनिश्चैव नरकः पृथिवीञ्जयः ।
प्रह्लादो विप्रचित्तिश्च कालकेयाश्च सर्वशः । १८
सुमुखो दुर्मुखश्शङ्खस् सुमनास्सुमतिस्स्वनः ॥ १८॥
घटोदरो महापार्श्वः क्रथश्च पितरस्तथा ।
विश्वरूपस्स्वरूपश्च विरूपश्च महाशिराः ॥ १९॥

1. अ-ख-ब—अहिको रोहिकश्चैव भद्रो

दशग्रीवश्च वाली च मेघवासाश्च भारत ॥ २०

[1]दोदम्भो विगदूभश्च प्रभवश्चेन्द्रतापनः ।
दैत्यदानवसङ्घाश्च सर्वे रुचिरकुण्डलाः ॥ २१

स्रग्विणो मौलिनस्सर्वे सर्वे च चरितव्रताः ।
सर्वे लब्धवराश्शूरास् सर्वे विजितमृत्यवः ॥ २२

ते तस्यां वरुणं पार्थ धर्मपाशस्थितास्सदा ।
उपासते महात्मानं सर्वे दिव्यपरिच्छदाः ॥ २३

तथा समुद्राश्चत्वारो नदी भागीरथी च या ।
कालिन्दी विदिशा वेण्णा नर्मदा वेगवाहिनी ॥ २४

विपाशा च शतद्रुश्च चन्द्रभागा सरस्वती ।
इरावती वितस्ता च सिन्धुर्देवनदस्तथा ॥ २५

गोदावरी कृष्णवेणी कावेरी सरितां वरा ।
कम्बुदा च विशल्या च कौशिकी गोमती तथा ॥ २६

देविका च विपाका च तथा वैतरणी नदी ।
तृतीया ज्येष्ठिला चैव शोणश्चैव महानदः ॥ २७

चर्मण्वती श्वेतनदी फल्गुनी च महानदी ।

---

1. क—गोदुहो विगदूभश्च प्रवह
ख-घ—गोदुहो पिटदूहश्च प्रभवश्चेन्द्रवाहनः ।
अ—दोदुहो विभ्रदूहश्च प्रभवश्चेन्द्रवाहनः ।

सरयू[1]श्चीरवल्केला कुलिश्च सरितस्तथा ॥ २८
एताश्चान्याश्च सरितस् तीर्थानि च सरांसि च ।
ह्रदाश्च वरुणं देवं सभायां पर्युपासते ॥ २९
कूपाश्च सप्रस्रवणा देहवन्तो युधिष्ठिर ।
पल्वलानि तटाकानि देहवन्त्यथ भारत ॥ ३०
दिशश्चाथ मही चैव विदिशश्च महीधराः ।
उपासते महात्मानं सर्वे जलचरास्तथा ॥ ३१
गीतवादित्रवादाश्च गन्धर्वाप्सरसां गणाः ।
स्तुवन्तस्तत्र वरुणं सभायां च समासते ॥ ३२
महीधरा रत्नवन्तो रसा येषु प्रतिष्ठिताः ।
कथयन्तस्सुमधुराः कथास्ते तु समासते ॥ ३३
वरुणस्य महामन्त्री सुनाभः परिसेवते ।
पुत्रपौत्रैः परिवृतो गोनाम्ना पुष्करेण च ॥ ३४
सर्वे विग्रहवन्तस्ते तमीश्वरमुपासते ॥ ३४॥
एषा मया सम्प्रगीता वारुणी भरतर्षभ ।
दृष्टपूर्वा सभा रम्या कुबेरस्य सभां शृणु ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि नवमोऽध्यायः ॥ ९ ॥
॥ २१ ॥ मन्त्रपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये ३५॥ श्लोकाः]

---

1. क—श्चीरवल्का च कुल्याश्च । ख-घ—श्चित्रपकेला लुलिश्च ।
अ—सरयाश्चिरपकेला

## ॥ दशमोऽध्यायः ॥

कुबेरसभावर्णनम् ॥ १ ॥

---

नारदः—

सभा वैश्रवणी राजन् छतयोजनमायता ।
विस्तीर्णा सप्ततिश्चैव योजनानां सितप्रभा ॥ १

तपसा निर्मिता राजन् स्वयं वैश्रवणेन सा ।
शशिप्रभा खेचराणां कैलासशिखरोपमा ॥ २

गुह्यकैरुह्यमाना सा खे विषक्तेव दृश्यते ।
दिव्यैर्हेममयैरग्र्यैः पादपैरुपशोभिता ॥ ३

अर्चिष्मता भास्वरा च दिव्यगन्धा मनोरमा ।
सिताभ्रनिचयाकारा प्लवमानेव दृश्यते ॥ ४

तस्यां वैश्रवणो राजा विचित्राभरणाम्बरः ।
सहितस्त्रिदशैस्सार्धम् आस्ते रुचिरकुण्डलः ॥ ५

सह पत्न्या महाराज ऋद्ध्या सह विराजते ।
सर्वाभरणभूषिण्या वपुष्मत्या धनेश्वरः ॥ ६

दिवाकरनिभे दिव्ये दिव्यास्तरणसंवृते ।
दिव्यपादोपधाने च निषण्णः परमासने ॥ ७

मन्दाराणामुदाराणां वनानि सुरभीण्यथ ।
सौगन्धिकानां चादाय गन्धं गन्धवहश्शुचिः ॥ ८

नलिन्याश्चारुमुख्यायाश् चन्दनानां वनस्य च ।
मनोहृदयसंह्लादी वायुस्तमुपसेवते ॥ ९

यत्र ते देवगन्धर्वा गणैरप्सरसां वृताः ।
दिव्यतानेषु गीतानि गायन्ति भरतर्षभ ॥ १०

मिश्रकेशी च रम्भा च चित्रसेना शुचिस्मिता ।
चारुदेष्णा घृताची च मेनका पुञ्जिकस्थला ॥ ११

विश्वाची सहजन्या च प्रम्लोचन्त्युर्वशी तथा ।
दिव्या च सौरभेयी च देवी (रम्भा) वन्दा मनोरमा ॥ १२

गोपाली पञ्चचूडा च विद्युद्वर्णा सुलोचना ।
चित्रदेवी च नीला च काम्या च ललिता तथा ॥ १३

एतास्सहस्रशश्चान्या नृत्तगीतविशारदाः ॥
उपनृत्यन्ति राज्ञो वै पाण्डवाप्सरसां गणाः ॥ १४

अनिशं गीतवादित्रैर् नृत्तगीतैश्च सा सभा ।
अशून्या रुचिरा भाति गन्धर्वाप्सरसां गणैः ॥ १५

गन्धर्वाणां च पतयो विश्वावसुर्हहा हुहूः ।
तुम्बुरुः पर्वतश्चैव शैलूषस्त्वथ नारदः ॥ १६

चित्रसेनश्च गीतज्ञस् तथा चित्ररथोऽपि च ।

एते चान्ये च गन्धर्वा धनेश्वरमुपासते ॥ १७
विद्याधराधिपश्चैव चन्द्रापीडस्सहानुजैः ।
उपासते महात्मानं धनानामीश्वरं प्रभुम् ॥ १८
किन्नराश्शतशस्तत्र भगदत्तपुरोगमाः ।
द्रुमः किम्पुरुषेशश्च उपास्ते धनदेश्वरम् ॥ १९
राक्षसानां पतिश्चैव सह सर्वैर्निशाचरैः ।
विभीषणस्सुधर्मिष्ठ उपास्ते भ्रातरं प्रभुम् ॥ २०
निधीनां प्रवरौ मुख्यौ शङ्खपद्मौ धनेश्वरम् ।
सर्वान्निधीन् प्रगृह्यैतावुपासाते महेश्वरम् ॥ २१
किन्नरा नाम गन्धर्वा नरा नाम तथाऽपरे ।
माणिभद्रश्च धनदं श्वेतभद्रश्च गुह्यकः ॥ २२
स्थूणश्च सूर्यभानुश्च तथा शोणिकतिन्दुकौ ।
कुशेरलो गन्धपर्णो वृषोदश्च महाबलः ॥ २३
द्रुमः किम्पुरुषश्चैव गजकर्णो विशालकः ।
वराहकर्णस्सङ्कृष्टः फलभक्षः फलोदकः ॥ २४
अङ्गचूडश्शिलापुष्पो हेमनेत्रो विभूषणः ।
[1]पुष्पाननः पिङ्गलकश् शोणितोदः प्रपालितः ॥ २५
वृक्षपार्श्वो निकेतश्च चीरवासास्तथैव च ।

---

1. ब-ख—अङ्गचूडशिखावर्तौ हेमचन्द्रो विभीषणः [अधिकः पाठः]

एते चान्ये च बहवो यक्षाश्शतसहस्रशः ॥ २६

उपासते सदा श्रीश्च तथैव नलकूबरः ॥ २६॥

हिमवान् पारियात्रश्च विन्ध्यकैलासमन्दराः ॥ २७

मलयो दर्दुरश्चैव महेन्द्रो गन्धमादनः ।
इन्द्रनीलस्सुनाभश्च आस्तां दिव्यौ च पर्वतौ ॥ २८

एते चान्ये च बहवस् सर्वे मेरुपुरोगमाः ।
उपासते महात्मानं धनानामीश्वरं प्रभुम् ॥ २९

अहं च बहुशस्तत्र तथा देवर्षयोऽपरे ।
भगवान् भूतसङ्घैश्च वृतस्सततमीश्वरः ॥ ३०

उमापतिः पशुपतिश् शूलधृग्भगनेत्रहा ।
त्र्यम्बको विश्वरूपश्च देवी च विगतक्लमा ॥ ३१

नन्दीश्वरश्च भगवान् महाकालस्तथैव च ।
शङ्कुकर्णमुखास्सर्वे दिव्याः पारिषदास्तथा ॥ ३२

काष्ठकूटस्सोमनन्दी विजयश्च तपोधिकः ।
श्वेतश्च वृषभस्तत्र नर्दन्नास्ते महारवः ॥ ३३

नैर्ऋता राक्षसाश्चान्ये गन्धर्वाश्च समासते ॥ ३३॥

वामनैर्विकटैः कुब्जैः क्षतजाक्षैर्महारवैः ।
मांसमेदोवसाहारैर् उग्रश्रवणदर्शनैः ॥ ३४॥

नानाप्रहरणैर्घोरैर् वातैरिव महाजवैः ।
परिषद्गणैः परिवृतम् उपायान्तं महेश्वरम् ॥ ३५॥

तं दृष्ट्वा देवदेवेशं शिवं त्रैलोक्यभावनम् ।
प्रणम्य मूर्ध्ना पौलस्त्यो बहुरूपमुमापतिम् ॥ ३६॥

ततोऽभ्यनुज्ञां सम्प्राप्य महादेवाद्धनेश्वरः ।
आस्ते कदाचिद्भगवान् भवो धनपतेस्सखा ॥ ३७॥

सा सभा तादृशी रम्या मया दृष्टाऽन्तरिक्षगा ॥ ३८
पितामहसभां तात कथयिष्ये गतक्लमाम् ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि दशमोऽध्यायः ॥ १० ॥

॥ २१ ॥ मन्त्रपर्वणि दशमोऽध्यायः ॥ १० ॥

[अस्मिन्नध्याये ३८॥ श्लोकाः]

---

## ॥ एकादशोऽध्यायः ॥

ब्रह्मसभावर्णनम् ॥ १ ॥

---

नारदः—

पितामहसभां तात कथयिष्यामि तच्छृणु ।
न शक्यते या निर्देष्टुम् एवंरूपेति भारत ॥ १

पुरा देवयुगे तात विवस्वान् भगवान् दिवः ।

आगच्छन्मानुषं लोकं दिदृक्षुर्विगतक्लमः ॥ २

चरन् मानुषरूपेण सभां दृष्ट्वा स्वयम्भुवः ।
सभामकथयन्मह्यं ब्राह्मीं तत्त्वेन पाण्डव ॥ ३

अप्रमेयप्रभां दिव्यां मानसीं भरतर्षभ ।
अनिर्देश्यां प्रभावेण सर्वभूतमनोरमाम् ॥ ४

श्रुत्वा गुणानहं तस्यास् सभायाः पाण्डुनन्दन ।
दर्शनेप्सुस्तथा राजन् आदित्यमहमब्रुवम् ॥ ५

भगवन् द्रष्टुमिच्छामि पितामहसभामहम् ॥ ५॥

केन वा तपसा शक्या सा द्रष्टुं केन कर्मणा ।
औषधैर्वा तथा युक्तैर् उत वा मायया कया ॥ ६॥

तन्ममाचक्ष्व भगवन् द्रष्टुमिच्छामि तां सभाम् ॥ ७

स मह्यं वचनं श्रुत्वा सहस्रांशुर्दिवाकरः ।
प्रोवाच भरतश्रेष्ठ व्रतं वर्षसहस्रकम् ॥ ८

ब्रह्मव्रतमुपास्स्व त्वं प्रयतेनान्तरात्मना ॥ ८॥
ततोऽहं हिमवत्पृष्ठे तपश्चर्यामुपागतः ॥ ९

ततस्स भगवान् सूर्यो मामुपादाय वीर्यवान् ।
आगच्छत् तां सभां तात विपापां विगतक्लमाम् ॥ १०

न शक्या सा विनिर्देष्टुम् एवंरूपेति भारत ।

क्षणेन हि बिभर्त्यन्यद् अनिर्देश्यं वपुस्तथा ॥ ११

न जाने परिमाणं वा संस्थानं वाऽपि भारत ।
न च रूपं मया तादृक् दृष्टपूर्वं कदाचन ॥ १२

सुसुखा सा सभा राजन् न शीता न च घर्मदा ।
न क्षुत्पिपासे न ग्लानिं प्राप्य तां प्राप्नुवन्त्युत ॥ १३

नानारूपैरिव कृता विचित्रैरिव भास्वरैः ।
दिव्यैर्नानाविधैर्भावैर् भासद्भिरमितप्रभैः ॥ १४

स्तम्भैर्न च धृता सा तु शाश्वती न च सा क्षरा ॥ १४॥

अति सूर्यं च चन्द्रं च शिखिनं च स्वयम्प्रभा ।
दीप्यते नाकपृष्ठस्था भासयन्तीव भास्करम् ॥ १५॥

तस्यां स भगवानास्ते विदधद्देवमायया ।
स्वयमेकोऽनिशं राजँल्लोकाँल्लोकपितामहः ॥ १६॥

उपातिष्ठन्त तं सर्वे प्रजानां पतयः प्रभुम् ।
दक्षः प्रचेताः पुलहो मरीचिः कश्यपस्तथा ॥ १७॥

आदित्याश्च तथा राजन् रुद्राश्च वसवोऽश्विनौ ॥ १८

भृगुरत्रिर्वसिष्ठश्च गौतमोऽथ तथाऽङ्गिराः ।
पुलस्त्यश्च क्रतुश्चैव प्रह्लादः कर्दमस्तथा ॥ १९

अथर्वाङ्गिरसश्चैव वालखिल्या मरीचिपाः ॥ १९॥

मनो विद्याऽन्तरिक्षं च वायुस्तेजो जलं मही ॥ २०

शब्दस्पर्शौ तथा रूपं रसो गन्धश्च भारत ।
प्रकृतिश्च विकारश्च यच्चान्यत् कारणं भुवः ॥ २१

[1]अगस्त्यश्च महातेजा मार्कण्डेयश्च दीप्तिमान् ।
जमदग्निर्भरद्वाजस् संवर्तश्च्यवनस्तथा ॥ २२

दुर्वासाश्च महाभाग ऋश्यशृङ्गश्च धार्मिकः ।
सनत्कुमारो भगवान् योगाचार्यो महायशाः ॥ २३

असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित् ।
ऋषभो जितशत्रुश्च महावीर्यस्तथा रणिः ॥ २४

आयुर्वेदस्तथाऽष्टाङ्गो देहवांस्तत्र भारत ।
चन्द्रमास्सह नक्षत्रैर् आदित्यश्च गभस्तिमान् ॥ २५

वायवः क्रतवश्चैव सङ्कल्पः प्राण एव च ।
मूर्तिमन्तो महात्मानो महाव्रतपरायणाः ॥ २६

एते चान्ये च बहवस् स्वयम्भुवमुपस्थिताः ॥ २६॥

अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तपो दमः ।
आयान्ति तत्र सततं गन्धर्वाप्सरसस्तथा ॥ २७॥

---

1. ख—क्षमा धृतिश्शुचिश्चैव प्रज्ञा बुद्धिस्स्मृतिर्यशः ।
भाष्याणि तर्कयुक्तानि देहवन्ति च भारत ॥
क्षणाल्पाश्च मुहूर्ताश्च दिवा रात्रिश्च भारत ॥

विंशतिस्सप्त चैवान्ये लोकपालाश्च सर्वशः ॥ २८

शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च ।
शनैश्चरश्च राहुश्च ग्रहास्सर्वे तथैव च ॥ २९

मन्त्रो रथन्तरं चैव हरिमान् वसुमानपि ।
आदित्याश्चाद्रिराजानो नामद्वन्द्वैरुदाहृताः ॥ ३०

मरुतो विश्वकर्मा च विज्ञानानि च भारत ।
सर्वे च कामप्रचुरास् सभायां तत्र नित्यशः ॥ ३१

तथा पितृगणास्सर्वे दैवतानि च मूर्तिमान् ॥ ३१॥

ऋग्वेदस्सामवेदश्च यजुर्वेदश्च पाण्डव ।
अथर्ववेदश्च तथा शास्त्राणि विविधानि च ॥ ३२॥

इतिहासोपवेदाश्च वेदाङ्गानि च सर्वशः ।
ग्रहा यज्ञाश्च सोमाश्च दैवतानि च सर्वशः ॥ ३३॥

सावित्री दुर्गतरणी वाणी सप्तविधा तथा ।
मेधा धृतिश्श्रुतिश्चैव प्रज्ञा क्षान्तिस्स्मृतिर्यशः ॥ ३४॥

सामानि स्तुतिगीतानि गाथाश्च विविधा अपि ।
भाष्याणि तर्कयुक्तानि देहवन्ति विशाम्पते ॥ ३५॥

क्षणो लवो मुहूर्ताश्च दिवा रात्रिश्च भारत ।
अर्धमासाश्च मासाश्च ऋतवष्षट् च भारत ॥ ३६॥

संवत्सराः पञ्च युगं समा रात्रिश्चतुर्विधा ।
कालचक्रं च यद्दिव्यं नित्यमक्षयमव्ययम् ॥　　३७॥

अदितिर्दितिर्दनुश्चैव विनता सुरसा तथा ।
कालिका सुरभी देवी सरमा चाथ गौतमी ॥　　३८॥

प्रथा कद्रूश्च ता देव्यस् तत्रासन् देवमातरः ॥　　३९

रुद्राणी श्रीश्च लक्ष्मीश्च भद्रा षष्ठी तथा जरा ।
पृथ्वी च गङ्गा देवी च ह्रीस्स्वाहा कीर्तिरेव च ॥　　४०

सुरा देवी शची चैव तथा पुष्टिररुन्धती ।
सम्पत्तिराशा नियतिर् वृष्टिर्देवी रतिस्तथा ॥　　४१

एताश्चान्याश्च ता देव्य उपतस्थुः प्रजापतिम् ॥　　४१॥

आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
विश्वे देवाश्च साध्याश्च पितरश्च मनोजवाः ॥　　४२॥

पितॄणां च गणान् विद्धि सप्तैव भरतर्षभ ।
मूर्तिमन्तो हि चत्वारस् त्रयश्चाप्यशरीरिणः ॥　　४३॥

वैराजाश्च महाभागा अग्निष्वात्ताश्च भारत ।
गार्हपत्या नाम परे पितरो लोकविश्रुताः ॥　　४४॥

सोमपा एकशृङ्गाश्च अन्वाहार्याः कलास्तथा ।
एते चतुर्षु वर्णेषु पूज्यन्ते पितरो नृप ॥　　४५॥

एतैराप्यायितः पूर्वं सोम आप्यायते जगत् ॥ ४६

त एते पितरस्सर्वे प्रजापतिमुपस्थिताः ॥ ४६॥
उपासते च संहृष्टा ब्रह्माणममितौजसम् ।
राक्षसाश्च पिशाचाश्च दानवा गुह्यकास्तथा ॥ ४७॥
सुपर्णा नागपतयः पितामहमुपासते ॥ ४८
स्थावरं जङ्गमं चैव महाभूतास्तथाऽपरे ॥ ४८॥
पुरन्दरश्च देवेन्द्रो वरुणो धनदो यमः ।
महादेवश्च भगवान् सदा गच्छति पर्वसु ॥ ४९॥
महासेनश्च भगवान् नित्यमास्ते पितामहम् ॥ ५०
देवो नारायणस्तस्यां तथा देवर्षयश्च ये ।
ऋषयो वालखिल्याश्च योनिजायोनिजास्तथा ॥ ५१
यत्किञ्चित् त्रिषु लोकेषु दृश्यते स्थावरजङ्गमम् ।
सर्वं तस्यां मया दृष्टम् इति विद्धि नराधिप ॥ ५२
अष्टाशीतिसहस्राणि यतीनामूर्ध्वरेतसाम् ।
प्रजापतीनां पञ्चाशद् ऋषीणामपि पाण्डव ॥ ५३
ते स्म तत्र यथाकामं दृष्ट्वा सर्वे दिवौकसः ।
प्रणम्य शिरसा तस्मै पुनर्यान्ति यथागमम् ॥ ५४
अतिथीनागतान् देवान् दैत्यानेवं तथा मुनिः ।
यक्षान् सुपर्णान् कालेयान् गन्धर्वाप्सरसस्तथा ॥ ५५

महाभागानमितधीर् ब्रह्मा लोकपितामहः ।
दयावान् सर्वभूतेषु यथार्हं प्रतिपद्यते ॥ ५६

प्रतिगृह्य तु विश्वात्मा स्वयम्भूरमितप्रभः ।
[1]सान्त्वमानार्थसम्भोगैर् युनक्ति मनुजाधिप ॥ ५७

तथा तैरुपयातैश्च प्रतियातैश्च सर्वशः ।
आकुला सा सभा तात भवति स्म सुखप्रदा ॥ ५८

सर्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता ।
ब्राह्मया श्रिया दीप्यमाना कान्त्या चैव गतक्लमा ॥ ५९

सा मया तादृशी दृष्टा सभा लोकेषु दुर्लभा ।
सभेयं राजशार्दूल मनुष्येषु यथा तव ॥ ६०

एता मया दृष्टपूर्वास् सभा देवेषु पाण्डव ।
तवेयं मानुषे लोके सर्वश्रेष्ठतमा सभा ॥ ६१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि एकादशोऽध्यायः ॥ ११ ॥

॥ २१ ॥ मन्त्रपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[अस्मिन्नध्याये ६१ श्लोका.]

---

1. क-ङ — मधुरेण साम्ना भगवान् प्रतिगृह्य च नित्यशः ।[अधिकः पाठः]

## ॥ द्वादशोऽध्यायः ॥

इन्द्रसभास्थहरिश्चन्द्रचरिते युधिष्ठिरेण पृष्टे तत्कथाप्रसङ्गेन नारदकृता राजसूयप्रशंसा ॥ १ ॥ युधिष्ठिरं प्रति पाण्डुसन्देशकथनपूर्वकं नारदस्य गमनम् ॥ २ ॥

---

युधिष्ठिरः—

प्रायशो देवलोकास्ते कथिता वदतां वर ।
वैवस्वतसभायां वै यथावदनुपूर्वशः ॥ १

वरुणस्य सभायां च [1]यथा नागास्सभासदः ।
दैत्येन्द्राश्चैव भूयिष्ठास् सरितस्सागरास्तथा ॥ २

तथा धनपतेर्यक्षा राक्षसा गुह्यकाश्च ये ।
गन्धर्वाप्सरसश्चैव भगवांश्च वृषध्वजः ॥ ३

पितामहसभायां तु कथितास्ते महर्षयः ।
सर्वे देवनिकायाश्च सर्वशास्त्राणि चैव ह ॥ ४

शक्रस्य तु सभायां तु देवास्सङ्कीर्तिता मुने ।
उद्देशतश्च गन्धर्वा विविधाश्च महर्षयः ॥ ५

एक एव तु राजर्षिः कथितस्ते महामुने ।
हरिश्चन्द्रस्सखा नित्यो देवेन्द्रस्य महात्मनः ॥ ६

---

1. अ-ख-घ—नागास्ते कथिता विभो ।

केन कर्मविपाकेन हरिश्चन्द्रो द्विजर्षभ ।
तेषु राजसहस्रेषु प्रभयाऽप्यतिरोचते ॥ ७

किं कर्म तेनाचरितं नियमो वा यतव्रत ।
येनासौ सह शक्रेण मोदते सुमहायशाः ॥ ८

पितृलोकगतश्चैव त्वया विप्र पिता मम ।
दृष्टः पाण्डुर्महाभागः कथं त्वासीत् समागमः ॥ ९

अनागतमतिक्रान्तं तत् सर्वं त्वयि निष्ठितम् ।
किमुक्तवांश्च भगवन्नेतदिच्छामि वेदितुम् ॥ १०

त्वत्तस्सर्वमिदं श्रोतुं परं कौतूहलं हि मे ॥ १०॥

नारदः—

यन्मां पृच्छसि राजेन्द्र हरिश्चन्द्रं प्रति प्रभो ।
तत् तेऽहं सम्प्रवक्ष्यामि माहात्म्यं तस्य धीमतः ॥ ११॥

इक्ष्वाकूणां कुले जातस् त्रिशङ्कुर्नाम पार्थिवः ।
अयोध्याधिपतिर्वीरो विश्वामित्रेण संस्थितः ॥ १२॥

तस्य सत्यवती नाम पत्नी केकयवंशजा ।
तस्यां गर्भस्समभवद् धर्मेण कुरुनन्दन ॥ १३॥

सा च काले महाभागा जन्ममासं प्रविश्य वै ।
कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ॥ १४॥

स वै राजा हरिश्चन्द्रस् त्रैशङ्कव इति स्मृतः ॥ १५

स राजा बलवानासीत् सम्राट् सर्वमहीभृताम् ।
तस्य सर्वे महीपालाश् शासनावनतास्स्थिताः ॥ १६

तेनैकं रथमास्थाय जैत्रं हेमविभूषितम् ।
शस्त्रप्रतापेन जिता द्वीपास्सप्त जनेश्वर ॥ १७

स निर्जित्य महीं कृत्स्नां सशैलवनकाननाम् ।
आजहार महाराज राजसूयं महाक्रतुम् ॥ १८

तस्य सर्वे महीपाला धनान्याजह्रुराज्ञया ।
द्विजानां परिवेष्टारस् तस्मिन् यज्ञे च तेऽभवन् ॥ १९

समाप्तयज्ञो विधिवद्धरिश्चन्द्रः प्रतापवान् ।
अभिषिक्तस्स शुशुभे साम्राज्येन नराधिपः ॥ २०

राजसूयेऽभिषिक्तस्तु समाप्तवरदक्षिणः ॥ २०॥

अददाद् द्रविणं प्रीत्या याचकानां युधिष्ठिर ॥
यथोक्तं च क्रतौ तस्मिंस् ततः पञ्चगुणाधिकम् ॥ २१॥

अतर्पयच्च वसुभिर् ब्राह्मणान् भरतर्षभ ।
यज्ञकालेऽथ सम्प्राप्तान् नानादिग्भ्यस्समागतान् ॥ २२॥

भक्ष्यैर्भोज्यैश्च पानैश्च यथाकालं तदाहृतैः ।
रत्नौघतर्पितैस्तुष्टैर् द्विजैश्च समुदाहृतम् ॥ २३॥

तेजस्वी च यशस्वी च सर्वेभ्योऽभ्यधिको भव ॥ २४

एतस्मात् कारणात् तात हरिश्चन्द्रो युधिष्ठिर ।
तेषु राजसहस्रेषु प्रभयाऽप्यतिरिच्यते ॥ २५

ये यजन्ते महीपाला राजसूयं महाक्रतुम् ।
सम्प्राप्तास्ते महेन्द्रेण मोदन्ते सह भारत ॥ २६

ये चापि निधनं प्राप्तास् सङ्ग्रामेष्वपलायिनः ।
ते प्राप्तास्तां सभां राजन् मोदन्ते सह भारत ॥ २७

तपसा ये च तीव्रेण त्यजन्तीह कलेबरम् ।
ते तत् स्थानं समासाद्य श्रीमन्तो भान्ति नित्यशः ॥ २८

पिता च त्वाऽऽह कौन्तेय पाण्डुः कौरववर्धनः ।
हरिश्चन्द्रे श्रियं दृष्ट्वा नृपतौ जातविस्मयः ॥ २९

समर्थोऽसि महीं जेतुं भ्रातरस्ते वशे स्थिताः ।
राजसूयं क्रतुश्रेष्ठम् आहरस्वेति भारत ॥ ३०

[1]तस्य त्वं पुरुषव्याघ्र सङ्कल्पं कुरु पाण्डव ।
गन्तारस्ते महेन्द्रस्य पूर्वे सर्वे पितामहाः ॥ ३१

सलोकतां सुरेन्द्रस्य त्रैलोक्याधिपतेर्नृप ।
गन्तासि वै महेन्द्रस्य पूर्वैस्सर्वैस्सलोकताम् ॥ ३२

बहुविघ्नस्तु कौन्तेय क्रतुरेष स्मृतो महान् ।
छिद्राण्यस्य तु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः ॥ ३३

---

1. ग-ङ—कोशयोः अयं श्लोको नास्ति

युद्धं च पृष्ठगमनं पृथिवीक्षयकारकम् ।
किञ्चिदेव निमित्तं तु भवत्यत्र भयावहम् ॥ ३४

एतत् ते सर्वमाख्यातं किं भूयः करवाणि ते ॥ ३४॥

एतत् सञ्चिन्त्य राजेन्द्र यत् क्षमं तत् समाचर ॥ ३५

अप्रमत्तोत्थितो नित्यं चातुर्वर्ण्यस्य रक्षणे ।
भव एधस्व मोदस्व दानैस्तर्पय च द्विजान् ॥ ३६

एतत् ते विस्तरेणोक्तं यन्मां त्वं परिपृच्छसि ।
आपृच्छे त्वां गमिष्यामि दाशार्हनगरीं प्रति ॥ ३७

वैशम्पायनः—

एवमाख्याय पार्थेभ्यो नारदो जनमेजय ।
जगाम तैर्वृतो राजन् ऋषिभिर्यैस्समागतः ॥ ३८

गते तु नारदे पार्थो भ्रातृभिस्सह कौरव ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास भारत ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि द्वादशोऽध्यायः ॥ १२ ॥

॥ २१ ॥ मन्त्रपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[अस्मिन्नध्याये ३९ श्लोकाः]

---

## ॥ त्रयोदशोऽध्यायः ॥

युधिष्ठिरेण राजसूयकर्तव्यतानिश्चयः ॥ १ ॥

वैशम्पायनः—
ऋषेस्तद्वचनं श्रुत्वा निशश्वास युधिष्ठिरः ।
चिन्तयन् राजसूयाप्तिं न लेभे शर्म भारत ॥ १

राजर्षीणां हि तं श्रुत्वा महिमानं महात्मनाम् ।
यज्वनां कर्मभिः पुण्यैर् लोकप्राप्तिं समीक्ष्य च ॥ २

हरिश्चन्द्रं च राजर्षिं रोचमानं विशेषतः ।
यज्वानं यज्ञमाहर्तुं राजसूयमियेष सः ॥ ३

युधिष्ठिरस्ततस्सर्वान् अर्चयित्वा सभासदः ।
प्रत्यर्चितश्च तैस्सर्वैर् यज्ञायैव मनो दधे ॥ ४

स राजसूयं राजेन्द्रः कुरूणामृषभः क्रतुम् ।
आहर्तुं प्रवणं चक्रे मनस्सञ्चिन्त्य सोऽसकृत् ॥ ५

भूयश्चाद्भुतवीर्यौजा धर्ममेवानुपालयन् ।
किं हितं सर्वलोकानां भवेदिति मनो दधे ॥ ६

अन्वगृह्णात् प्रजास्सर्वास् सर्वधर्मभृतां वरः ।
अविशेषेण सर्वेषां हितं चक्रे युधिष्ठिरः ॥ ७

क्रियतां दीयतां देयं मुक्तकोपैर्बलं विना ।

साधुधर्मेति पार्थस्य नान्यच्छ्रूयत भाषितम् ॥ ८

[1]एवं वृत्ते जगत् तस्मिन् पितरीवान्वरज्यत ।
न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता ॥ ९

परिग्रहान्नरेन्द्रस्य [2]धर्माणामनुशासनात् ।
शत्रूणां क्षपणाच्चैव बीभत्सोस्सव्यसाचिनः ॥ १०

बलीनां सम्यगादानान्नकुलस्य यशस्विनः ।
धीमतस्सहदेवस्य धर्माणामनुशासनात् ॥ ११

अविग्रहा वीतभयास् स्वधर्मनिरताः प्रजाः ।
निकामवर्षी पर्जन्य आसीज्जनपदे तदा ॥ १२

वार्धुषी यज्ञसन्तानो गोरक्षं कर्षणं वणिक् ।
विशेषात् सर्ववर्णानां सञ्जज्ञे राजकर्मणि ॥ १३

अवर्षं चातिवर्षं च व्याधिपावकमूर्छनम् ।
सर्वमेतत् तदा नासीद् धर्मनित्ये युधिष्ठिरे ॥ १४

दस्युभ्यो राजतो वाऽपि परचक्रात् परस्परम् ।
राजवल्लभतश्चैव नाश्रूयत भयाकृतिम् ॥ १५

प्रियं कर्तुमुपस्थातुं बलिकर्म स्वकर्मजम् ।

---

1. अ-ख-घ—एवं गते ततस्तस्मिन् पितरीवाश्वसन् प्रजाः ।

2. अ-ख-घ—प्रजानां परिपालनात् ।

अभिहर्तुं नृपं जग्मुर् नान्यैः कार्यैः पृथग्जनाः ॥ १६
धर्मैर्धनागमैस्तस्य ववृधे निचयो महान् ।
कामतोऽप्युपयुञ्जन्त अक्षयैर्लोकजैर्जनाः ॥ १७
स मन्त्रिणस्समानाय्य भ्रातॄंश्च वदतां वरः ।
राजसूयं प्रति तदा पुनः पुनरपृच्छत ॥ १८
ते पृच्छ्यमानास्सहिता वचोऽर्थ्यं मन्त्रिणस्तदा ।
युधिष्ठिरं महाप्राज्ञं यियक्षुमिदमब्रुवन् ॥ १९

मन्त्रिणः—

सर्वव्यापी सर्वगुणस् सर्वसाहश्च सर्वराट् ।
यस्मिन्नधिकृतस्सम्राड् यजमानो महायशाः ॥ २०
अनूचाना दश [1]दश पितृतो मातृतस्तथा ।
अनुक्ता यं प्रतिष्ठन्ते सोमहस्ता द्विजातयः ॥ २१
येनाभिषिक्तो नृपतिर् वारणावतमिच्छति ।
तेन राजा वसन् कृत्स्नं सम्राड्गुणमभीप्सते ॥ २२
तस्य सम्राड्गुणार्हस्य भवतः कुरुनन्दन ।
राजसूयस्य समयं मन्यन्ते सुहृदस्तव ॥ २३
तस्य यज्ञस्य समयस् स्वाधीनः क्षत्रसम्पदा ॥ २३॥
साम्ना षडग्नयो यस्मिंश् चीयन्ते संशितव्रतैः ।
दर्वीहोमानुपादाय सर्वानाप्नोति यः क्रतून् ॥ २४॥

---
1. ङ—दिशः

अभिषेकश्च यज्ञान्ते सर्वजित् तेन चोच्यते ॥ २५

समर्थोऽसि महाभाग सर्वे ते वशगा वयम् ।
अविचार्य महाराज राजसूये मनः कुरु ॥ २६

वैशम्पायनः—
इत्येवं सुहृदस्सर्वे पृथक्च सह चाब्रुवन् ॥ २६॥

स धर्म्यं पाण्डवस्तेषां [1]वचश्श्रुत्वा विशाम्पते ।
दृष्टमिष्टं वरिष्ठं च जग्राह मनसाऽरिहा ॥ २७॥

श्रुत्वा सुहृद्वचः कल्यं जानंश्चैवात्मनः क्षमम् ।
सम्प्रशस्तक्रियारम्भः परीक्षामुपचक्रमे ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

॥ २१ ॥ मन्त्रपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[अस्मिन्नध्याये २८॥ श्लोकाः]

---

## ॥ चतुर्दशोऽध्यायः ॥

---

इन्द्रप्रस्थं प्रति श्रीकृष्णागमनम् ॥ १ ॥

---

वैशम्पायनः—
चतुर्भिर्भीमसेनाद्यैर् भ्रातृभिस्सहितैर्हितम् ।
एवमुक्तस्तदा पार्थो धर्मायैव मनो दधे ॥ १

---

1. अ-ख-घ—सर्वेषामेव भाषितम्

स राजसूयं राजेन्द्रः कुरूणामृषभः क्रतुम् ।
जगाम मनसा सद्य आहरिष्यन् युधिष्ठिरः ॥ २

भूयस्त्वद्भुतवीर्यौजा धर्ममेवानुपालयन् ।
किं हितं सर्वलोकस्य धर्मराजो मनो दधे ॥ ३

स मन्त्रिभिर्महाप्राज्ञैर् ऋत्विग्भिश्च महात्मभिः ।
धौम्यद्वैपायनमुखैर् मन्त्रयामास मन्त्रिभिः ॥ ४

[1]विराटद्रुपदाभ्यां च सात्यकेन च धीमता ।
युधामन्यूत्तमौजोभ्यां सौभद्रेण च धीमता ॥ ५

द्रौपदेयैः परं शूरैर् मन्त्रयामास संवृतः ॥ ५॥

युधिष्ठिरः—

भवन्तो राजसूयस्य सम्राडर्हस्य सुक्रतोः ।
श्रद्दधानस्य तत्त्वेन ममावाप्तिः कथं भवेत् ॥ ६॥

**वैशम्पायनः—**

एवमुक्तास्तु ते तेन राज्ञा राजीवलोचनाः ।
ऋषयो भ्रातरश्चैव तद्वाक्यं प्रत्यपूजयन् ॥ ७॥

इदमूचुर्वचः काले धर्मात्मानं युधिष्ठिरम् ॥ ८

**मन्त्रिणः—**

अर्हस्त्वमसि धर्मज्ञ राजसूयं महाक्रतुम् ॥ ८॥

---

1. **अ-ख—भीमार्जुनयमैस्सार्धं पार्षतेन च धीमता** । [अधिकः पाठः]

सामर्थ्ययोगौ सम्प्रेक्ष्य देशकालौ क्षयागमौ ।
विमृश्य सम्यक् च धिया कुर्वन् राजा न सीदति ॥ ९॥

वैशम्पायनः—

एवमुक्तस्तु धर्मात्मा पुनरात्मानमात्मनि ।
सर्वैस्तैर्निश्चितमतिः काल इत्येव भारत ॥ १०॥

भूयो विममृशे पार्थो लोकात्महितकारणात् ॥ ११

न हि यज्ञसमारम्भः केवलात्मविवृद्धये ।
भवतीति समाज्ञाय यत्नतः कार्यमुद्वहन् ॥ १२

स निश्चयार्थं कार्यस्य कृष्णमेव जनार्दनम् ।
सर्वलोकात् परं मत्वा जगाम मनसा हरिम् ॥ १३

अप्रमेयमनाद्यन्तं कामाज्जातमजं नृपु ॥ १३॥

पाण्डवस्तर्कयामास कर्मभिर्देवनिर्मितैः ॥ १४

नास्य किञ्चिदविज्ञेयं नास्य किञ्चिदकर्मजम् ।
नास्य किञ्चिद्भवेन्मोघं इति कृष्णममन्यत ॥ १५

स तु तां नैष्ठिकीं बुद्धिं कृत्वा पार्थो युधिष्ठिरः ।
गुरुवद्भूतगुरवे प्राहिणोद्दूतमञ्जसा ॥ १६

शीघ्रगेन रथेनाशु स दूतः प्राप्य यादवान् ।
द्वारकावासिजं कृष्णं द्वारवत्यां समासदत् ॥ १७

स प्रह्वः प्राञ्जलिर्भूत्वा व्यज्ञापयत माधवम् ॥ १७॥

दूतः—

धर्मराजो हृषीकेश धौम्यव्यासादिभिस्सह ।

पाञ्चालमात्स्यसहितैर् भ्रातृभिस्स्वैश्च सर्वशः ॥ १८॥

त्वद्दर्शनं महाबाहो काङ्क्षते स युधिष्ठिरः ॥ १९

वैशम्पायनः—

इन्द्रसेनवचश्श्रुत्वा यादवप्रवरो बली ।

दर्शनाकाङ्क्षिणं पार्थं दर्शनाकाङ्क्ष्यथाच्युतः ॥ २०

आमन्त्र्य वसुदेवं च बलदेवं च माधवः ।

इन्द्रसेनेन सहित इन्द्रप्रस्थं ययौ तदा ॥ २१

व्यतीत्य देशान् विविधांस् त्वरावान् क्षिप्रवाहनः ।

इन्द्रप्रस्थगतं पार्थम् अभ्यगच्छज्जनार्दनः ॥ २२

स्वगृहे पितृवद्भ्रात्रा धर्मराजेन पूजितः ।

भीमेन च ततोऽपश्यत् स्वसारं प्रीतिमान् प्रभुः ॥ २३

प्रीत्या प्रियेण वै सख्या रेमे स सहितस्तदा ॥ २३॥

अर्जुनेन यमाभ्यां च शिष्यवत् समुपस्थितः ॥ २४

तं विश्रान्तं समे देशे क्षणिनं कल्यमच्युतम् ।

धर्मराजस्समागम्य ज्ञापयत् स्वं प्रयोजनम् ॥ २५

युधिष्ठिरः—

प्रार्थितो राजसूयो मे न वाऽसौ केवलेप्सया ।

प्राप्यते येन केनेह विदितं तव चाच्युत ॥ २६

यस्मिन् सर्वं सम्भवति यदा सर्वेश उच्यते ।
राजसूयाभिषेकाय तदा साम्राज्यमिष्यते ॥ २७

तं राजसूयं सुहृदः प्राप्यमाहुस्समेत्य माम् ।
तत्र मे निश्चिता बुद्धिस् तव कृष्ण गिरा भवेत् ॥ २८

केचिद्धि सौहृदादेव दोषं न परिचक्षते ।
अर्थहेतोस्तथा चान्ये प्रियमेव वदन्त्युत ॥ २९

प्रियमेव प्रतीक्षन्ते केचिन्नात्मनि यद्धितम् ।
एवंप्रायाश्च दृश्यन्ते जनवादाः प्रयोजने ॥ ३०

त्वं तु सर्वानतीत्यैतान् कामं क्रोधमतीत्य च ।
परमं नः क्षमं काले यथावद्वक्तुमर्हसि ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

॥ २१ ॥ मन्त्रपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

[ अस्मिन्नध्याये ३१ श्लोकाः ]

## ॥ पञ्चदशोऽध्यायः ॥

**श्रीकृष्णेन युधिष्ठिरं प्रति जरासन्धशौर्यादिकथनम् ॥ १ ॥**

**श्रीभगवान्—**

सर्वैर्गुणैर्महाराज सम्राडसि न संशयः ।
जानतस्त्वेव ते सर्वं व्यक्तं वक्ष्याम्यशेषतः ॥ १

जामदग्न्येन रामेण क्षत्रं यदवशेषितम् ।
तस्मादराजके लोके यदिदं क्षत्रसंज्ञितम् ॥ २

कृतोऽयं किल सङ्कल्पः क्षत्रियैर्वसुधाधिपैः ।
निदेशवाग्भिस्तत् ते ह विदितं भरतर्षभ ॥ ३

[1]ऐलं चेक्ष्वाकुवंश्यं च प्रकृतिं परिचक्षते ।
राजानश्श्रेणिबद्धाश्च ततोऽन्ये क्षत्रिया भुवि ॥ ४

ऐलवंश्यास्तु ते राजंस् तथैवेक्ष्वाकवो नृपाः ।
तानि चैकशतं विद्धि कुलानि भरतर्षभ ॥ ५

ययातेस्त्वेव वंश्यानां विस्तरोऽतिगुणो महान् ।
भ्राजते वै महाराज चतुर्धा तद्यथादिशम् ॥ ६
तेषां तथैव तां लक्ष्मीं सर्वक्षत्रमुपासते ।
सोऽवनीं मध्यमां भुक्त्वा मिथो भेदेष्वमन्यत ॥ ७

चतुरङ्गबलो राजा यस्मिन्नेकशतं भवेत् ।
स साम्राज्यं जरासन्धः प्राप्तो भवति योगतः ॥ ८

तं स राजा महाराज संश्रितः किल सर्वशः ॥ ८॥

राजन् सेनापतिर्जातश् शिशुपालः प्रतापवान् ॥ ९

तमेव च महाराज शिष्यवत् समुपस्थितः ।
वक्रः करूशाधिपतिर् मायायोधी महाबलः ॥ १०

1. क-ख-ब—ऐलस्येक्ष्वाकुवंशस्य

अपरौ च महात्मानौ महावीर्यपरिश्रुतौ ।
जरासन्धं समाश्रित्य तौ हंसडिभकावुभौ ॥ ११

वक्रदन्तः करूशश्च कलभो मेघवाहनः ।
मूर्ध्नि दिव्यं मणिं बिभ्रद् यं तं भूतमणिं विदुः ॥ १२

मुरं च यवनं चैव शास्ति यो यवनावुभौ ।
अपर्यन्तबलो राजा प्रतीच्यां वरुणो यथा ॥ १३

भगदत्तो महाराजो वृद्धस्तव पितुस्सखा ।
स चापि प्रणतस्तस्य कर्मणा चैव भारत ॥ १४

स्नेहबद्धस्तु पितृवन्मनसा भक्तिमांस्त्वयि ॥ १४॥

प्रतीच्यां दक्षिणस्यां च पृथिव्यां पान्ति ये नृपाः ।
ते चापि प्रणतास्तस्य महात्मानो भयार्दिताः ॥ १५॥

मातुलो भवतश्शूरः पुरुजित् कुन्तिवर्धनः ।
स ते सन्नतिमानेकस् स्नेहतश्शत्रुतापनः ॥ १६॥

जरासन्धं गतस्त्वेव पुरा यो न हतो मया ।
पुरुषोत्तमविज्ञातो योऽसौ चेदिषु दुर्मतिः ॥ १७॥

आत्मानं प्रतिजानीते लोकेऽस्मिन् पुरुषोत्तमम् ।
आदत्ते सततं मोहाद् यस्स चिह्नं च मामकम् ॥ १८॥

वङ्गपुण्ड्रकिरातेषु राजा सबलवाहनः ।

पौण्ड्रको वासुदेवेति योऽसौ लोकेषु विश्रुतः ॥ १९॥
चतुर्बाहुर्महाराज भोग इन्द्रसमो बली ।
विद्याभुजबलोद्योगैर् अजयत् [1]पाण्ड्यकेरलान् ॥ २०॥
भ्राता यस्याकृतिश्शूरो जामदग्न्यसमो युधि ।
स भक्तो मागधं राजा भीष्मकः परवीरहा ॥ २१॥
प्रियाण्याचरतः प्रह्वान् अस्मान् सम्बन्धिनस्तथा ।
भजतो न भजत्यस्मान् अप्रियेषु व्यवस्थितः ॥ २२॥
न कुलं न बलं राजन्नाभिजात्यं तथाऽऽत्मनः ।
पश्यमानो यशो दीप्तं जरासन्धमुपाश्रितः ॥ २३॥
उदीच्यभोजाश्च वयं कुलान्यष्टौ दशापि भो ।
जरासन्धभयादेव प्रतीचीं दिशमास्थिताः ॥ २४॥
शूरसेना भद्रकरा यौधास्साल्वा पटच्चराः ।
सुस्थिराश्मविघट्टाश्च कुणिन्दाः कुन्तिभिस्सह ॥ २५॥
साल्वेयानां च राजाऽऽसीत् सामात्योऽनुचरैस्सह ।
दाक्षिणा ये च पञ्चालाः पूर्वाः कुन्तिषु मालवाः ॥ २६॥
त उत्तरां दिशं चापि परित्यज्य भयार्दिताः ।
मत्स्यास्सन्न्यस्तपादाश्च पश्चिमां दिशमाश्रिताः ॥ २७॥
तथैव सर्वपञ्चाला जरासन्धभयार्दिताः ।

1. ख—पुण्ड्रकेकयान्; क-ग-घ-ङ—कैशिकान्

स्वराष्ट्रं सम्परित्यज्य विद्रुतास्सर्वतोदिशम् ॥ २८॥

अग्रतो ह्यस्य पाञ्चालास् तत्रानीके महात्मनः ।
विनिर्गते सारबले मागधेभ्यो गिरिव्रजात् ॥ २९॥

उग्रसेनसुतः कंसः पुरा निर्मथ्य बान्धवान् ।
बार्हद्रथसुते देव्यावुपायच्छद्वृथामतिः ॥ ३०॥

अस्तिप्रास्ती च ते नाम्ना सहदेवानुजेऽबले ॥ ३१

बलेन तेन स्वज्ञातीन् अभिभूय वृथामतिः ।
श्रैष्ठ्यं प्राप्तस्स तस्यासीद् इति चापनयो महान् ॥ ३२

भोजराजन्यवृद्धैस्तु पीड्यमानैर्दुरात्मना ।
ज्ञातित्राणमभीप्सद्भिर् अस्मत् सम्भावना कृता ॥ ३३

सङ्कर्षणद्वितीयेन ज्ञातित्राणं मया कृतम् ॥ ३३॥

दत्त्वाऽक्रूराय सुतनुम् आहुकस्य सुतां तदा ।
हतौ कंससुनामानौ मया रामेण चाप्युत ॥ ३४॥

हत्वा कंसं तथैवाजौ जरासन्धस्य बिभ्यतः ।
मया रामेण चान्यत्र ज्ञातयः परिपालिताः ॥ ३५॥

भये तु समुपक्रान्ते जरासन्धे समुद्यते ।
मन्त्रोऽयं मन्त्रितो राजन् कुलैरष्टादशावरैः ॥ ३६॥

अनारमन्तो निघ्नन्तो महास्त्रैश्शतघातिभिः ।

न हन्याम बलं तस्य त्रिभिर्वर्षशतैर्वयम् ॥ ३७॥

तस्याप्यमरसङ्काशौ बलेन बलिनां वरौ ।
नामभ्यां हंसडिभकावित्यास्तां योधसत्तमौ ॥ ३८॥

तावुभौ सहितौ वीरौ जरासन्धश्च वीर्यवान् ।
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः ॥ ३९॥

न हि केवलमस्माकं यावन्तोऽन्येऽपि पार्थिवाः ।
तथैव तेषामासीच्च बुद्धिर्बुद्धिमतां वर ॥ ४०॥

अष्टादश मया तस्य सङ्ग्रामा रोमहर्षणाः ।
दत्ता न च हतो राजन् जरासन्धो महाबलः ॥ ४१॥

अथ हंस इति ख्यात आसीत् कश्चिन्नराधिपः ।
नरोऽन्यस्स हतस्तस्य सङ्ग्रामेऽष्टादशावरे ॥ ४२॥

हंसो हत इति प्रोक्तम् अथ केनापि भारत ।
तच्छ्रुत्वा डिभको राजन् यमुनाम्भस्यमज्जत ॥ ४३॥

विना हंसेन लोकेऽस्मिन् नाहं जीवितुमुत्सहे ।
इत्येतां मतिमास्थाय डिभको निधनं गतः ॥ ४४॥

तथा तु निहतं श्रुत्वा हंसः परपुरञ्जयः ।
प्रपेदे यमुनामेव सोऽपि तस्यां न्यमज्जत ॥ ४५॥

ततो राजा जरासन्धश् श्रुत्वा तौ निधनं गतौ ।

स्वपुरं शूरसेनेभ्यः प्रययौ भरतर्षभ ॥ ४६॥

ततो वयममित्रघ्नास् तस्मिन् प्रतिगते नृपे ।
पुनरानन्दितास्सर्वे मधुरायां वसामहे ॥ ४७॥

यदा तु पुनरेवैनं राजन् राजीवलोचना ।
कंसभार्या जरासन्धं दुहिता मागधं नृपम् ॥ ४८॥

चोदयत्येव राजेन्द्र पतिव्यसनदुःखिता ॥
पतिघ्नं मे जहीत्येवं पुनः पुनररिन्दम ॥ ४९॥

ततो वयं कुरुश्रेष्ठ तन्त्रपूर्वं सुमन्त्रितम् ।
संस्मरन्तो विमनसो व्यपयातास्स्म सर्वशः ॥ ५०॥

पृथक्त्वेन द्रुता राजन् संक्षिप्य विपुलां श्रियम् ॥ ५१

अपयाता भयान् तस्य सबलज्ञातिवान्धवाः ।
इति सञ्चिन्त्य सर्वे स्म प्रतीचीं दिशमाश्रिताः ॥ ५२

कुशस्थलीं पुरीं शून्यां रैवतेन निवेशिताम् ।
पुनर्निवेश्य नन्दामो जरासन्धभयार्दिताः ॥ ५३

तथैव दुर्गसंस्कारान् देवैरपि दुरासदान् ।
स्त्रियोऽपि यस्यां युध्येयुः किंपुनर्वृष्णिपुङ्गवाः ॥ ५४

ते वयं सजना राजन् निवसामोऽकुतोभयाः ।
आलोक्य गिरिमुख्यं तम् अलभाम सुखं नृप ॥ ५५

माधवा माधवीतीर्थम् आसाद्य सुखिनोऽभवन् ॥ ५५॥
एवं वयं जरासन्धाद् अभितः कृतकिल्बिषाः ।
सामर्थ्यवन्तस्सम्बन्धाद् भवन्तं समुपाश्रिताः ॥ ५६॥
त्रियोजनायतं सद्म विस्तीर्णं योजनाधिकम् ।
योजनान्ते शतद्वारं व्युत्क्रमक्रमतोरणम् ॥ ५७॥
अष्टादशाकुलैर्नद्धं क्षत्रियैर्युद्धदुर्मदैः ॥ ५८
अष्टादश सहस्राणि भ्रातरस्सन्ति नः कुले ।
आहुकस्य शतं पुत्रा एकैकं त्रिदशोपमाः ॥ ५९
चारुदेष्णस्सह भ्रात्रा चक्रदेवोऽथ सात्यकिः ।
अहं च रौहिणेयश्च साम्बश्शौर्यसमा युधि ॥ ६०
एवमेते रथास्सप्त राजन्नन्यान् निबोध मे ॥ ६०॥
कृतवर्माप्यनाधृष्टिस् समीकस्समितिञ्जयः ।
कंसश्शङ्कुर्निरादश्च सप्त चैते महारथाः ॥ ६१॥
प्रद्युम्नश्चानिरुद्धश्च भानुरक्रूरसारणौ ।
निशठश्च गदश्चैव सप्त चैते महारथाः ॥ ६२॥
वितद्रुर्झल्लिबभ्रू च उद्धवोऽथ विडूरथः ।
वसुदेवोग्रसेन जिच्छ्रं यमलोराजराजगुणान्वितः ॥ ६३॥
प्रसेनजिच्च यमलो राजराजगुणान्वितः ॥ ६४
स्यमन्तको मणिर्यस्य रुक्मं निस्रवते बहु ॥ ६४॥

पुत्राश्चान्धकभोजस्य वृद्धो राजा च ते दश ।
लोकसंहनना वीरा वीर्यवन्तो महारथाः ॥ ६५॥
संस्मरन्तो मध्यदेशं वृष्णिवीरा गतज्वराः ॥ ६६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
॥ २१ ॥ मन्त्रपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये ६६ श्लोकाः]

---

## ॥ षोडशोऽध्यायः ॥

श्रीकृष्णयुधिष्ठिरभ्योः मन्त्रालोचनम् ॥ १ ॥

---

श्रीभगवान्—

पाण्डवैश्चापि सततं नाथवन्तो वयं नृप ॥ ॥
सर्वसम्पद्गुणैस्सिद्धे तस्मिन्नेवं व्यवस्थिते ।
क्षितौ सम्राजमात्मानं कर्तुमर्हसि भारत ॥ १॥
दुर्योधनं शान्तनवं द्रोणं द्रोणायनिं कृपम् ।
कर्णं च शिशुपालं च रुक्मिणं च धनुर्धरम् ॥ २॥
एकलव्यं द्रुमं श्वेतं शैब्यं शकुनिमेव च ।
एतानजित्वा सङ्ग्रामे कथं शक्नोषि तं क्रतुम् ॥ ३॥
अथैते गौरवेणैव न योत्स्यन्ति नराधिपाः ॥ ४

एकस्तत्र बलोन्मत्तः कर्णो वैकर्तनो वृषा ।
योत्स्यते स बलामर्षी दिव्यास्त्रबलगर्वितः ॥ ५

न तु शक्यं महाराज जरासन्धे महाबले ।
राजसूयं त्वया प्राप्तुं तस्मिन् जीवति पार्थिवे ॥ ६

तेन रुद्धा हि राजानो जित्वा सर्वे गिरिव्रजे ।
कन्दरायां नगेन्द्रस्य सिंहेनेव महाद्विपाः ॥ ७

सोऽपि राजा जरासन्धो यियक्षुर्वसुधाधिपैः ।
अभिषिक्तैस्तु राजन्यैस् सहस्रैरुत चाष्टभिः ॥ ८

स विनिर्जित्य निर्जित्य [1]सर्वान् वै पृथिवीश्वरान् ।
पुरमानीय बद्ध्वा च चकार पुरुषव्रजम् ॥ ९

आराध्य हि महादेवं निर्जितास्तेन पार्थिवाः ॥ ९॥

वयं चैव महाराज जरासन्धभयार्दिताः ।
मथुरां सम्परित्यज्य गत्वा द्वारवतीं पुरीम् ॥ १०॥

निवसाम तथाऽद्यापि सधनज्ञातिबान्धवाः ॥ ११

कंसहेतोर्हि यद्वैरं मागधस्य मया सह ।
पारं गत्वा स तस्याजौ यियक्षुर्देवमुत्तमम् ॥ १२

काङ्क्षस्व तेषां मोक्षाय जरासन्धवधाय च ।
यदिमं नृपते यज्ञं प्राप्तुमिच्छसि भारत ॥ १३

---

1. अ-क—पार्थिवान् पृथगागतान्

न ह्येष ह्यन्यथा शक्य आरम्भो भरतर्षभ ।
राजसूयस्य कात्स्न्येंन कर्तुं मतिमतां वर ॥ १४

जरासन्धवधोपायश् चिन्त्यतां भरतर्षभ ।
तस्मिञ्जिते जितं सर्वं सकलं पार्थिवं बलम् ॥ १५

इत्येषा मे मती राजन् यद्वा त्वं मन्यसे नृप ।
एवं गते ममाचक्ष्व स्वयं निश्चित्य हेतुभिः ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि षोडशोऽध्यायः ॥ १६ ॥

॥ २१ ॥ मन्त्रपर्वणि षोडशोऽध्यायः ॥ १६ ॥

[अस्मिन्नध्याये १६ श्लोका ]

---

## ॥ सप्तदशोऽध्यायः ॥

राजसूयविषये श्रीकृष्णयुधिष्ठिरभीमानां संवादः ॥ १ ॥

---

युधिष्ठिरः—
उक्तं त्वया बुद्धिमता त्वन्नान्यो वक्तुमर्हति ।
संशयानां विनिर्णेता कोऽन्यस्त्वत्तोऽस्ति नः पुमान् ॥ १

गृहे गृहे हि राजानस् स्वस्य स्वस्य प्रियङ्कराः ।
न च साम्राज्यमाप्तास्ते सम्राट्छब्दो हि कृत्स्नभाक् ॥ २

कथं परानुभावज्ञस् स्वयं शंसितुमर्हसि ।

परेण समवेतस्तु यः प्रशस्तस्स पूज्यते ॥ ३
विशाला विमला भूमिर् बहुरत्नसमाचिता ।
दूरं गत्वा विजानाति श्रेयो वृष्णिकुलोद्वह ॥ ४
हित्वा करान् यौवनाश्वः पालनाच्च भगीरथः ।
कार्तवीर्यस्तपोयोगाद् बलात्तु भरतो विभुः ॥ ५
ऋद्ध्या मरुत्तस्तान् पञ्च [1]साम्राज्येनेति शुश्रुमः ।
सर्वान् वंशाननुभृशं नैते सन्ति युगे युगे ॥ ६
शममेव परं मन्ये नित्यं मोक्षाद्भवेच्छमः ॥ ६॥

भीमः—
आरम्भे पारमेष्ठ्ये तु नाप्राप्यमिति मे मतिः ।
एवमेवाभिजानन्ति कुले जाता मनस्विनः ॥ ७॥
कश्चित् कदाचिदेतेषां भवेज्ज्येष्ठो जनार्दनः ॥ ८
अनारम्भपरो राजा वल्मीक इव सीदति ।
दुर्बलश्चाप्युपायेन बलिनं योधयिष्यति ॥ ९
अतन्द्रितस्तु प्रायेण दुर्बलो बलिनं रिपुम् ।
जयेत् सम्यङ्नयो राजन् नीत्यर्थे हि प्रवर्तते ॥ १०
कृष्णे नयो मयि बलं जयः पार्थे धनञ्जये ।
मागधं साधयिष्यामो वयं त्रय इवाग्नयः ॥ ११
त्वद्बुद्धिबलमाश्रित्य सर्वं प्राप्स्यति धर्मराट् ।

1. ङ—सम्राज इति

जयोऽस्माकं हि गोविन्द येषां नाथो भवान् सदा ॥ १२

श्रीभगवान्—

आत्मनोऽर्थपरो बालो नानुबन्धमवेक्षते ।

तं विषक्तमथो घ्नन्ति बालमर्थपरायणम् ॥ १३

तस्माद् वंश्याननुमृशन्नेकमेव सतां युगे ।

साम्राज्यमिच्छतस्ते तु सर्वाकारं युधिष्ठिर ॥ १४

[1]निग्राह्यलक्षणप्राप्तौ धर्मार्थनयलक्षणैः ।

बार्हद्रथं जरासन्धं तं विद्धि भरतर्षभ ॥ १५

[2]न चैनं प्रतियुद्धन्त कुलान्येकशतं नृपाः ।

तस्मादेतद्बलादेव साम्राज्यं कुरुतेऽद्य सः ॥ १६

रत्नभाजं हि राजन्या जरासन्धमुपासते ।

न च तुष्यति तेनापि बलेनानयमास्थितः ॥ १७

मूर्धावसिक्तं नृपतिं प्रधानं पुरुषं कुलात् ।

आदत्ते न च यो दृष्टोऽभागः पुरुषतः क्वचित् ॥ १८

एवं सर्वानतीत्यैको जरासन्धश्शतावरान् ।

तं दुर्बलतरो राजा कथं पार्थ उपैष्यति ॥ १९

तण्डुलप्रस्थके राजा कपर्दिनमुपास्त सः ।

प्रोक्षितानां प्रसृष्टानां राज्ञां पशुपतेर्गृहे ॥ २०

पशूनामिव का प्रीतिर् जीविते भरतर्षभ ॥ २०॥

---

1. अ-ख-ब—सङ्ग्राह्य
2. अ—नचैनं प्रत्यबुध्यन्त

क्षत्रियश्शस्त्रमरणो यदा भवति सत्कृतः ।
ननु स्म मागधं सर्वे प्रतिबाधेम तं वयम् ॥ २१॥

षडशीतिस्समानीताश् शेषाश्चान्ये चतुर्दश ।
जरासन्धेन राजानस् ततः क्रूरं प्रपत्स्यते ॥ २२॥

प्राप्नुयात् स यशो दीप्तं तत्र यो विघ्नमाचरेत् ।
जयेद्यश्च जरासन्धं स सम्राण्णियतं भवेत् ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

॥ २१ ॥ मन्त्रपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[अस्मिन्नध्याये २३॥ श्लोकाः ]

---

## ॥ अष्टादशोऽध्यायः ॥

युधिष्ठिरार्जुनयोस्संवादः ॥ १ ॥

---

युधिष्ठिरः—

सम्राड्गुणमभीप्सन् वै युष्मान् स्वार्थपरायणः ।
कथं [1]प्रहिणुयाद्भीम बालान् केवलसाहसात् ॥ १

भीमार्जुनावुभौ नेत्रे मनो मन्ये जनार्दनम् ।
मनश्चक्षुर्विहीनस्य कीदृशं जीवितं भवेत् ॥ २

1. क-ख-घ—प्रहिणुयां भीम बलात्

जरासन्धबलं प्राप्य दुष्पारं भीमविक्रमम् ।
श्रमो हि वः परो जन्यात् किमु तत्र विचेष्टितम् ॥ ३

कथं जित्वा पुनर्यूयम् अस्मानसम्प्रतियास्यथ ।
अस्मिन्नर्थान्तरे युक्तम् अनर्थम् प्रतिपद्यते ॥ ४

यथावद्विमृशाम्येकस् तत् तावच्छ्रूयतां मम ॥ ४॥

संन्यासं रोचये साधु कार्यस्यास्य जनार्दन ।
प्रतिहन्ति मनो मेऽद्य राजसूयो दुराहरः ॥ ५॥

**वैशम्पायनः—**

पार्थः प्राप्य धनुश्श्रेष्ठम् अक्षय्यौ च महेषुधी ।
रथं ध्वजं हयांश्चैव युधिष्ठिरमभाषत ॥ ६॥

**अर्जुनः—**

धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् ।
प्राप्तमेतन्मया राजन् दुष्प्रापं यदभीप्सितम् ॥ ७॥

कुले जन्म प्रशंसन्ति वैद्यास्साधु सुनिष्ठिताः ।
बलेन सदृशं नास्ति वीर्यं तु मम रोचते ॥ ८॥

कृतविद्यः कुले जातो निर्वीर्यः किं करिष्यति ।
क्षत्रियस्सर्वतो राजन् यस्य वृत्तिःपराजये ॥ ९॥

सर्वैरपि गुणैर्हीनो वीर्यवान् निस्तरेद्रिपून् ।
सर्वैरपि गुणैर्युक्तो निर्वीर्यः किं करिष्यति ॥ १०॥

[1]द्रव्यभूता गुणास्सर्वे तिष्ठन्ति हि पराक्रमे ।
जयस्य हेतुस्सिद्धिर्हि कर्म दैवं च संश्रितम् ॥ ११॥
संयुक्तो हि बलैः कश्चित् प्रमादान्नेह युज्यते ।
तेन द्वारेण शत्रुभ्यः क्षीयते सबलो रिपुः ॥ १२॥
अबले विक्रमो यादृक् तथा मोहो बलान्विते ।
एतावुभौ महादोषौ नित्यं त्याज्यौ जयार्थिना ॥ १३॥
जरासन्धविनाशं च राज्ञां च परिमोक्षणम् ।
यदि कुर्याम यज्ञार्थे तदारम्भो महान् भवेत् ॥ १४॥
अनारम्भे तु नियतो भवेदगुणनिश्चयः ।
गुणान्निस्संशयाद्राजन् नैर्गुण्यं मन्यसे कथम् ॥ १५॥
कालोऽयं सुलभः पश्चान्मुनीनां शममिच्छताम् ।
साम्राज्यं तु तवेच्छन्तो वयं योत्स्यामहे परैः ॥ १६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

॥ २१ ॥ मन्त्रपर्वणि अष्टादशोऽध्यायः॥ १८ ॥

[अस्मिन्नध्याये १६॥ श्लोकाः]

---

1. ङ-द्रव्य-क—दिव्य

## ॥ एकोनविंशतितमोऽध्यायः ॥

युधिष्ठिरेण जरासन्धप्रभावप्रश्ने कृते श्रीकृष्णेन तदुपोद्घाततया बृहद्रथराजोपाख्यानकथनारम्भः ॥ १ ॥ अपुत्रस्य बृहद्रथस्य पत्नीभ्यां सह तपोवनगमनम् ॥ २ ॥ तत्र चण्डकौशिकमुनिना बृहद्रथाय पुत्रीयाम्रफलदानम् ॥ ३ ॥ प्रविभक्ततत्फलभोजनेन सञ्जातगर्भयोः पृथगेकैकशरीरखण्डसम्भवः ॥ ४ ॥ तत्पत्नीभ्यां दासीद्वारा बहिस्त्याजितयोः खण्डयोः जरानाम्न्या राक्षस्या संधानाज्जरासन्धसम्भवः ॥ ५ ॥ बालकं गृहीत्वा आगतया जरया सह बृहद्रथस्य संवादः ॥ ६ ॥

---

श्रीभगवान्—

जातस्य भारते वंशे तथा कुन्त्यास्सुतस्य च ।
या वै युक्ता मतिस्सेयम् अर्जुनेन प्रदर्शिता ॥ १

न मृत्योस्समयं विद्म रात्रौ वा यदि वा दिवा ।
न चापि कञ्चिदमरम् अयुद्धेनापि शुश्रुमः ॥ २

एतावदेव पुरुषैः कार्यं हृदयतोषणम् ।
नयेन विधिदृष्टेन यदुपक्रमते परान् ॥ ३

अनयस्यानुपायस्य संयुगे परमः क्रमः ।
संशयो जायतेऽसाम्ये साम्यं तु न भवेद्द्वयोः ॥ ४

ते वयं यत्नमास्थाय शत्रुदेशसमीपगाः ।
कथमन्तं न गच्छेम वृक्षस्येव नदीरयाः ॥ ५

पररन्ध्रे पराक्रान्तस् स्वरन्ध्रावरणे स्थितः ।

व्यूढानीकस्तु बलवान् नोपेयाद्बलवत्तरम् ॥　६

इति बुद्धिमतां नीतिस् तन्ममापीह रोचते ॥　६॥

अनवद्या [1]ह्यसम्बाधाः दृष्ट्वा शत्रुं समीपतः ।
शत्रुदेशमुपक्रम्य तं कामं प्राप्नुयामहे ॥　७॥

एको ह्येव श्रियं नित्यं बिभर्ति भरतर्षभः ।
अन्तरात्मेव भूतानां तत्क्षये वै बलक्षयः ॥　८॥

अथवैनं निहत्याजौ शेषेणापि समाहताः ।
प्राप्नुयाम ततस्स्वर्गं ज्ञातित्राणपरायणाः ॥　९॥

युधिष्ठिरः—

कृष्ण कोऽयं जरासन्धः किंवीर्यः किंपराक्रमः ।
यस्त्वां स्पृष्ट्वाऽग्निसदृशं न दग्धश्शलभो यथा ॥　१०॥

श्रीभगवान्—

शृणु राजन् जरासन्धो यद्वीर्यो यत्पराक्रमः ।
यथा ह्युपेक्षितोऽस्माभिर् बहुशः कृतकिल्बिषः ॥　११॥

अक्षौहिणीनां तिसृणां पतिः परमदर्पितः ।
राजा बृहद्रथो नाम मगधाधिपतिर्नृप ॥　१२॥

रूपवान् वीर्यसम्पन्नश् श्रीमानतुलविक्रमः ।

---

1. क—ह्यसम्बाधाः प्रविष्टाः शत्रुसद्म तत् ।
ब—न्ह्यसम्बाधान् दृष्ट्वा शत्रून् समीपतः ।

स्वराज्यं कारयामास मगधेषु गिरिव्रजे ॥ १३॥

नित्यं दीक्षाकृशतनुश् शतक्रतुरिवापरः ।
तेजसा सूर्यसदृशः क्षमया पृथिवीसमः ॥ १४॥

यश्चान्तकसमः क्रोधे श्रिया वैश्रवणोपमः ॥ १५

तस्य राज्येन संसक्तैर् गणैश्च भरतर्षभ ।
व्याप्तेयं पृथिवी सर्वा सूर्यस्येव गभस्तिभिः ॥ १६

स काशिराजस्य सुते यमजे भरतर्षभ ।
उपयेमे महावीर्यो रूपद्राविणसम्मते ॥ १७

तयोश्चकार समयं मिथस्स पुरुषर्षभः ।
नातिवर्तिष्य इत्येवं पत्नीभ्यां सन्निधौ तदा ॥ १८

ताभ्यां स शुशुभे राजा पत्नीभ्यां सहितस्तदा ।
प्रियाभ्यामनुरूपाभ्यां करेणुभ्यामिव द्विपः ॥ १९

तयोर्मध्यगतश्चापि रराज वसुधाधिपः ।
गङ्गायमुनयोर्मध्ये मूर्तिमानिव सागरः ॥ २०

विषयेषु निमग्नस्य तस्य यौवनमत्यगात् ।
न च वंशकरं पुत्रम् आसादयत पार्थिवः ॥ २१

मङ्गलैर्बहुभिर्होमैः पुत्रकामाभिरिष्टिभिः ।
नाससाद नृपश्रेष्ठः पुत्रं कुलविवर्धनम् ॥ २२

स भार्याभ्यां सह तदा निर्वेदमगमद्भृशम् ॥ २२॥

राज्यं चापि परित्यज्य तपोवनमथाश्रयत् ।
वार्यमाणः प्रकृतिभिर् नृपभक्त्या विशाम्पते ॥ २३॥

अथ काक्षीवतः पुत्रं गौतमस्य महात्मनः ।
शुश्राव तपसि श्रेष्ठम् उदारं चण्डकौशिकम् ॥ २४॥

यदृच्छयाऽऽगतं तं तु वृक्षमूलमुपाश्रितम् ।
पत्नीभ्यां सहितो राजा सर्वयत्नैरतोषयत् ॥ २५॥

बृहद्रथं च स ऋषिर् यथावत् प्रत्यनन्दत ।
उपविष्टश्च तेनाथ अनुज्ञातो महात्मना ॥ २६॥

तमपृच्छत् तदा विप्रः किमागमनमित्यथ ।
पौरैरनुगतस्यैव पत्नीभ्यां सहितस्य च ॥ २७॥

स उवाच मुनिं राजा भगवन् नास्ति मे सुतः ।
अपुत्रस्य वृथा जन्म इत्याहुर्मुनिसत्तम ॥ २८॥

तादृशस्य हि राज्येन वृद्धत्वे किं प्रयोजनम् ॥ २९

सोऽहं तपश्चरिष्यामि पत्नीभ्यां सहितो वने ।
नाप्रजस्य मुने कीर्तिस् स्वर्गश्चैवाक्षयो भवेत् ॥ ३०

एवमुक्तस्य राज्ञा तु मुनेः कारुण्यमागतम् ॥ ३०॥

चण्डकौशिकः—

परितुष्टोऽस्मि ते राजन् वरं वरय सुव्रत ॥ ३१

श्रीभगवान्—

ततस्सभार्यः प्रणतस् तमुवाच बृहद्रथः ।
पुत्रदर्शननैराश्याद् बाष्पगद्गदया गिरा ॥ ३२

बृहद्रथः—

भगवन् राज्यमुत्सृज्य प्रस्थितस्य तपोवनम् ।
किं वरेणाल्पभाग्यस्य किं राज्येनाप्रजस्य मे ॥ ३३

श्रीभगवान्—

एतच्छ्रुत्वा मुनिर्ध्यानम् अगमत् क्षुभितेन्द्रियः ।
तस्यैव चाम्रवृक्षस्य छायायां समुपाविशत् ॥ ३४
तस्योपविष्टस्य मुनेर् उत्सङ्गे निपपात ह ।
अमारुतमनाविद्धम् एकमाम्रफलं किल ॥ ३५
तत् प्रगृह्य मुनिश्रेष्ठो हृदयेनाभिमन्त्र्य च ।
राज्ञे ददावप्रतिमं पुत्रसम्प्राप्तिकारकम् ॥ ३६
उवाच च महाप्राज्ञस् तं राजानं महामुनिः ॥ ३६॥
गच्छ राजन् कृतार्थोऽसि निवर्तस्व जनाधिप ॥ ३७
एष ते तनयो राजन् मा तप्सीस्त्वं तपो वने ।
प्रजाः पालय धर्मेण एष धर्मो महीक्षिताम् ॥ ३८
यजस्व विविधैर्यज्ञैर् इन्द्रं तर्पय चेन्दुना ।
पुत्रं राज्ये प्रतिष्ठाप्य तत आश्रममाव्रज ॥ ३९

अष्टौ वरान् प्रयच्छामि तव पुत्रस्य पार्थिव ॥ ३९॥
ब्रह्मण्यतामजेयत्वं युद्धेषु च तथा रतिम् ।
प्रियातिथेयतां चैव दीनानामन्ववेक्षणम् ॥ ४०॥
तथा बलं च सुमहल्लोके कीर्तिं च शाश्वतीम् ।
अनुरागं प्रजानां च ददौ तस्मै स कौशिकः ॥ ४१॥
[1]अनुज्ञातस्स ऋषिणा पत्नीभ्यां सहितो नृपः ।
पौरैरनुगतश्चापि विवेश स्वपुरं पुनः ॥ ४२॥

यथासमयमाज्ञाय तदा स नृपसत्तमः ।
द्वाभ्यामेकं फलं प्रादात् पत्नीभ्यां भरतर्षभ ॥ ४३॥

मुनेश्च बहुमानेन कालस्य च विपर्ययात् ।
ततश्चाम्रं द्विधा कृत्वा भक्षयामासतुश्शुभे ॥ ४४॥

भावित्वादपि चार्थस्य सत्यवाक्यात् तथा मुनेः ।
तयोस्समभवद्गर्भः फलप्राशनसम्भवः ॥ ४५॥
दृष्ट्वा नरपतिश्श्रीमान् परां मुदमवाप ह ॥ ४६

काले तु समनुप्राप्ते यथासमयमागते ।
प्रजायेतामुभे राजन् शरीरशकले तदा ॥ ४७

---

1. अ-क-ख-ग-घ-ङ—गच्छ राजन् कृतार्थोऽसि निवर्तस्व जनाधिप ।
[अधिकः पाठः पुनरुक्तश्च]

एकाक्षिबाहुचरणे अर्धोदरमुखस्फिजी ।
दृष्ट्वा शरीरशकले दुःखेनापततां स्त्रियौ ॥ ४८
उद्विग्ने सहसा तत्र ते भगिन्यौ तदाऽबले ।
सजीवे प्राणिशकले तत्यजाते सुदुःखिते ॥ ४९
तयोर्धात्र्यौ सुसंवीते कृत्वा ते गर्भसम्प्लवे ।
निष्क्रम्यान्तःपुरद्वारात् समुत्सृज्याशु जग्मतुः ॥ ५०
दुकूलाभ्यां सुसञ्छन्ने पाण्डराभ्यामुभे तदा ।
अज्ञाते कस्यचित्त्वेव जहतुस्ते चतुष्पथे ॥ ५१
ततो विविशतुर्धात्र्यौ पुनरन्तःपुरं तदा ।
कथयामासतुरुभे देवीभ्यां तु पृथक् पृथक् ॥ ५२
ते चतुष्पथनिक्षिप्ते जरा नामाथ राक्षसी ।
जग्राह मनुजव्याघ्र मांसशोणितभोजना ॥ ५३
[1]अत्तुकामा सुखवहे शकले सा तु राक्षसी ।
संयोजयामास तदा विधानबलचोदिता ॥ ५४
ते समानीतमात्रे च शकले पुरुषर्षभ ।
एकमूर्तिगते तत्र कुमारस्समपद्यत ॥ ५५
ततस्सा राक्षसी राजन् विस्मयोत्फुल्ललोचना ।
न शशाक समुद्धर्तुं वज्रसारमयं शिशुम् ॥ ५६

1. क-च-ख—कर्तुं। ङ—योक्तु

बालस्ताम्रतलां मुष्टिं कृत्वाऽऽस्ये तु निधाय सः ।
प्राक्रोशदतिसंरम्भात् सतोय इव तोयदः ॥ ५७

तेन शब्देन सम्भ्रान्तस् सहसाऽन्तःपुरे जनः ।
निर्जगाम महाराजन् राज्ञा सह परन्तप ॥ ५८

तेऽबले च परिग्लाने पथः पूर्णपयोधरे ।
विफले पुत्रलाभाय सहसैवाभ्यगच्छताम् ॥ ५९

ते च दृष्ट्वा तथाभूते राज्ञस्तस्येष्टसन्ततिम् ।
तं च बालं सुबलिनं चिन्तयामास राक्षसी ॥ ६०

नार्हामि विषये राज्ञो वसन्ती पुत्रगृद्धिनः ।
बालं पुत्रमुपादातुं मेघलेखेव भास्करम् ॥ ६१
कृत्वा सा मानुषं रूपम् उवाच मनुजाधिपम् ॥ ६१॥

राक्षसी—

बृहद्रथ सुतस्तेऽयं मद्दत्तः प्रतिगृह्यताम् ।
तव पत्नीद्वये जातो द्विजातिवरशासनात् ॥ ६२॥
धात्रीजनपरित्यक्तो मयाऽयं परिरक्षितः ॥ ६३

श्रीभगवान्—

ततस्ते भरतश्रेष्ठ काशिराजसुते उभे ।
तं बालमभिपद्याशु प्रस्नवैरभ्यषिञ्चताम् ॥ ६४

ततस्स राजा संहृष्टस् सर्वं तदुपलभ्य वै ।

अप्रच्छन्नवहेमाभां राक्षसीं तामराक्षसीम् ॥ ६५

बृहद्रथः—

का त्वं कमलगर्भाभे मम पुत्रप्रदायिनी ।
कामं मे ब्रूहि कल्याणि देवता प्रतिभासि मे ॥ ६६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि एकोनविंशतितमोऽध्यायः ॥ १९ ॥

॥ २१ ॥ मन्त्रपर्वणि एकोनविंशतितमोऽध्यायः ॥ १९ ॥

[अस्मिन्नध्याये ६६ श्लोकाः]

---

## ॥ विंशतितमोऽध्यायः ॥

---

स्वस्वरूपमभिधाय जराया अन्तर्धानम् ॥ १ ॥ श्रीकृष्णेन जरासन्धस्य स्वस्मिन् वैरकारणकथनम् ॥ २ ॥

---

राक्षसी—

जरा नामास्मि भद्रं ते राक्षसी कामरूपिणी ।
तव वेश्मनि राजेन्द्र पूजिता न्यवसं सुखम् ॥ १

साऽहं प्रत्युपकारार्थं चिन्तयन्त्यनिशं नृप ।
तवेमे पुत्रशकले दृष्टवत्यस्मि धार्मिक ॥ २

संश्लेषिते मया दैवात् कुमारत्वमुपागते ।
तव भाग्यैर्महाराज हेतुमात्रं त्वहं नृप ॥ ३

[1]तस्य बालस्य यत् कृत्यं तत् कुरुष्व नराधिप ।
मम नाम्ना च लोकेऽस्मिन् ख्यात एव भविष्यति ॥ ४

श्रीभगवान्—

एवमुक्त्वा जरा राजंस् तत्रैवान्तरधीयत ।
सोऽपि गृह्य कुमारं तं प्राविशत् स्वपुरं नृप ॥ ५

तस्य बालस्य यत् कृत्यं तच्चकार नृपस्तदा ।
आज्ञापयच्च राक्षस्या मगधेषु महोत्सवम् ॥ ६

तस्य नामाकरोत् तत्र प्रजापतिसमः पिता ।
जरया सन्धितो यस्माज् जरासन्धस्ततोऽभवत् ॥ ७

सोऽवर्धत महातेजा मागधाधिपतेस्सुतः ।
प्रमाणबलसम्पन्नो हुताहुतिरिवानलः ॥ ८

एवं स ववृधे राजन् कुमारः पुष्करेक्षणः ।
कालेन महता चापि यौवनस्थो बभूव ह ॥ ९

कस्यचित्त्वथ कालस्य पुनरेव महातपाः ।
मगधानुपचक्राम भगवांश्चण्डकौशिकः ॥ १०

तस्यागमनसंहृष्टस् सामात्यस्सपुरस्सरः ।
सभार्यस्सह पुत्रेण निर्जगाम बृहद्रथः ॥ ११

पाद्यार्घ्याचमनीयैस्तम् अर्चयामास भारत ।

1. अ—कोशे इदमर्धं नास्ति

स नृपो राष्ट्रसहितं राज्यं चास्मै न्यवेदयत् ॥ १२

प्रतिगृह्य च तां पूजां पार्थिवाद्भगवानृषिः ।
उवाच [1]नृपतिं विप्रः प्रहृष्टेनान्तरात्मना ॥ १३

चण्डकौशिकः—

सर्वमेतन्मया राजन् विज्ञातं ज्ञानचक्षुषा ।
पुत्रस्तु तव राजेन्द्र यादृशोऽयं भविष्यति ॥ १४

अस्य [2]वीर्यं प्रभावं च नानुयास्यन्ति पार्थिवाः ।
विनाशमुपयास्यन्ति ये चास्य परिपन्थिनः ॥ १५

देवैरपि विसृष्टानि शस्त्राण्यस्य महीपते ।
न रुजं जनयिष्यन्ति गिरेरिव नदीरयाः ॥ १६

सर्वमूर्धावसिक्तानाम् एष मूर्ध्नि ज्वलिष्यति ।
सर्वेषां निष्प्रभकरो ज्योतिषामिव भास्करः ॥ १७

एनमासाद्य राजानस् समृद्धबलवाहनाः ।
विनाशमुपयास्यन्ति शलभा इव पावकम् ॥ १८

एष श्रियं सुमुदितां सर्वराज्ञां ग्रहीष्यति ।
वर्षास्विवोद्धृतजला नदीरिव नदीपतिः ॥ १९

एष धारयिता सम्यक् चातुर्वर्ण्यं महाबलः ।

1. ख-ग—मागधं राजन् ! अ—भगवान् राजन्
2. अ-ख-ग—वीर्यवतो वीर्यं

शुभां शुभवतीं स्फीतां सर्वसस्यधरां धराम् ॥ २०
अस्याज्ञावशगास्सर्वे भविष्यन्ति नराधिपाः ।
सर्वभूतात्मभूतस्य वायोरिव शरीरिणः ॥ २१
एष रुद्रं महादेवं त्रिपुरान्तकरं हरम् ।
सर्वलोकेष्वतिबलस् स्वयं द्रक्ष्यति मागधः ॥ २२

श्रीभगवान्—

एवं ब्रुवन्नेव मुनिर् [1]आह्निकार्थं महातपाः ।
विसर्जयामास नृपं बृहद्रथमनामयम् ॥ २३
प्रविश्य नगरीं चैव ज्ञातिसम्बन्धिभिर्वृतः ।
अभिषिच्य जरासन्धं मगधाधिपतिं तदा ॥ २४
बृहद्रथो नरपतिः परां निर्वृतिमाययौ ॥ २४॥
अभिषिक्ते जरासन्धे तदा राजा बृहद्रथः ।
पत्नीद्वयेनानुगतस् तपोवनगतोऽभवत् ॥ २५॥
तपोवनस्थे पितरि मातृभ्यां सह भारत ।
जरासन्धस्तु वीर्येण पार्थिवानकरोद्वशे ॥ २६॥
अथ दीर्घस्य कालस्य तपोवनगतो नृपः ।
पत्नीभ्यां सहितश्चापि तपस्तप्त्वा दिवं ययौ ॥ २७॥
जरासन्धोऽपि नृपतिर् यथोक्तं कौशिकेन तत् ।
वरप्रदानमखिलं प्राप्य राज्यमकारयत् ॥ २८॥

---

1. अ—स्वकार्यार्थमचिन्तयत्। ख-ब—स्वकार्यार्थं विचिन्तयन्।

तस्यास्तां हंसडिभकावशस्त्रनिधनावुभौ ।
मन्त्रे मतिमतां श्रेष्ठौ युद्धनीतिविशारदौ ॥ २९॥
[1]हतश्चैव मया कंसस् तौ हंसडिभकौ तथा ।
जरासन्धस्य दुहिता रोदते पार्श्वतः पितुः ॥ ३०॥
ततो वैरं विनिर्बद्धं मम तस्य च भारत ॥ ३१
भ्रामयित्वा शतगुणम् एकपातेन भारत ।
गदा क्षिप्ता बलवता मागधेन गिरिव्रजात् ॥ ३२
तिष्ठतो मधुरायां वै मम चाद्भुतकर्मणः ।
एकोनयोजनशते सा पपात गदा शुभा ॥ ३३
न हि योधैस्तदा तस्य सम्यगध्वा निवेदितः ॥ ३३॥
[2]मया तौ कथितौ राजन् पूर्वमेव महाबलौ ।
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः ॥ ३४॥
एवमेष तदा वीर बलिभिः कुकुरान्धकैः ।
वृष्णिभिश्च महाराज नीतिहेतोरुपेक्षितः ॥ ३५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि विंशोऽध्यायः ॥ २० ॥
॥ २१ ॥ मन्त्रपर्वणि विंशोऽध्यायः ॥ २० ॥
[अस्मिन्नध्याये ३५॥ श्लोकाः]
[समाप्तं मन्त्रपर्व]

---

1. अ-क-ख-ग-घ-ङ — हते चैव मयो कंसे तौ हंसडिभकौ तदा ।
[इत्यनन्वितम्]

2. अ-ख-घ—एते मया ते कथिताः पूर्वं एव महाबलाः ।

## ॥ एकविंशोऽध्यायः ॥

(जरासन्धवधपर्व ॥)

श्रीकृष्णादिभिः विप्ररूपेण जरासन्धनगरगमनम् ॥ २॥ जरासन्धेन सह विवादः ॥ २ ॥ भीमेन सह जरासन्धस्य युद्धोद्यमः ॥

श्रीभगवान्—

पतितौ हंसडिभकौ कंसामात्यौ निपातितौ ।
जरासन्धस्य निधने कालोऽयं समुपागतः ॥ १

न स शक्यो रणे जेतुं सर्वैरपि सुरासुरैः ।
बाहुयुद्धेन जेतव्यस् स इत्युपलभामहे ॥ २

मयि नीतिर्बलं भीमे रक्षिता चावयोर्जयः ।
साधयिष्याम तं राजन् वयं त्रय इवाग्नयः ॥ ३

त्रिभिरासादितोऽस्माभिर् विजने स नराधिपः ।
न सन्देहो यथा युद्धम् एकेनाभ्युपयास्यति ॥ ४

अवमानाच्च लोकस्य व्यायतत्वाच्च हर्षितः ।
भीमेन सह युद्धाय ध्रुवमभ्युपयास्यति ॥ ५

अलं तस्य महाबाहुर् भीमसेनो महाबलः ।
लोकस्य समुदीर्णस्य निधनायान्तको यथा ॥ ६

यदि ते हृदयं वेत्ति यदि ते प्रत्ययो मयि ।

भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे ॥ ७

वैशम्पायनः—

एवमुक्तो भगवता प्रत्युवाच युधिष्ठिरः ।
भीमार्जुनौ समालोक्य सम्प्रहृष्टमुखौ स्थितौ ॥ ८

युधिष्ठिरः—

अच्युताच्युत मा मैवं व्याहरामित्रकर्शन ।
पाण्डवानां भवान् नाथो भवन्तं चाश्रिता वयम् ॥ ९

यथा वदसि गोविन्द सर्वं तदुपपत्स्यते ।
न हि त्वमग्रतस्तेषां येषां लक्ष्मीः पराङ्मुखी ॥ १०
[1]येषामभिमुखी लक्ष्मीस् तेषां कृष्ण त्वमग्रतः ॥ १०॥

निहतश्च जरासन्धो मोक्षिताश्च महीक्षितः ।
राजसूयश्च मे लब्धो निदेशे तव तिष्ठतः ॥ ११॥

क्षिप्रकारि यथा त्वेतत् कार्यं समुपपद्यते ।
मम कार्यं जगत्कार्यं तथा कुरु नरोत्तम ॥ १२॥

त्रिभिर्भवद्भिर्हि विना नाहं जीवितुमुत्सहे ।
धर्मकामार्थरहितो रोगार्त इव दुर्गतः ॥ १३॥

न शौरिणा विना पार्थो न शौरिः पाण्डवं विना ।
नाजेयोऽस्त्यनयोर्लोके कृष्णयोरिति मे मतिः ॥ १४॥

1. अ—कोशे इदमर्धं नास्ति

अयं च बलिनां श्रेष्ठश् श्रीमानपि वृकोदरः ।
युवाभ्यां सहितः पार्थः किं न कुर्यात् परन्तपः ॥ १५॥

सुप्रणीतबलो यो हि कुरुते कार्यमुत्तमम् ।
अन्धं जडं बलं प्राहुः प्रणीतमविचक्षणैः ॥ १६॥

यतो हि निम्नं भवति नयतीह ततो जलम् ।
यतश्छिद्रं ततश्चापि नयन्ति विदुषो बलम् ॥ १७॥

वयमाश्रित्य गोविन्दं यतामः कार्यसिद्धये ॥ १८

[1]तस्मात् प्रियविधानज्ञं पुरुषं लोकविश्रुतम् ।
एवं प्रज्ञानयबलं क्रियोपायविशारदम् ॥ १९

पुरस्कुर्वीत कार्येषु कृष्ण कार्यार्थसिद्धये ॥ १९॥

एवमेव यदुश्रेष्ठ पार्थकार्यार्थसिद्धये ।
अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनञ्जयम् ॥ २०॥

नयो जयो बलं चैव विक्रमे सिद्धिमेष्यति ॥ २१

वैशम्पायनः—

एवमुक्तास्ततस्सर्वे भ्रातरौ विपुलौजसौ ।
वार्ष्णेयः पाण्डवेयौ च प्रतस्थुर्मागधान् प्रति ॥ २२

वर्चस्विनां स्नातकानां ब्राह्मणानां परिच्छदैः ।
आच्छाद्य सुहृदां वाक्यैर् मनोज्ञैरभिनन्दिताः ॥ २३

1. अ—कोशे इदमर्धं नास्ति

माधवः पाण्डवेयौ च प्रतस्थुर्व्रतधारिणः ॥ २३॥
अमर्षादभितप्तानां ज्ञात्यर्थं मुख्यतेजसाम् ।
रविसोमाग्निवपुषां भीममासीत् तदा वपुः ॥ २४॥
हतं मेने जरासन्धं राजा भीमपुरोगमौ ।
एककार्ये समुद्युक्तौ दृष्ट्वा कृष्णधनञ्जयौ ॥ २५॥
ईशौ हि तौ महात्मानौ सर्वकार्यप्रवर्तिनौ ।
धर्मार्थकामलोक्यानां कार्याणामपि निर्णये ॥ २६॥
[1]कुरुभ्यः प्रस्थितास्ते तु मध्येन कुरुजाङ्गलम् ।
रम्यं पद्मसरो गत्वा कालकूटमतीत्य च ॥ २७।
सन्तीर्य सरयूं रम्यां दृष्ट्वा पूर्वांश्च कोसलान् ।
गण्डकीमनुरागां च सदानीरां तथैव च ॥ २८।
एकपर्वतके नद्यः क्रमेणातिव्रजन्ति ते ॥ २९
अतीत्य मिथिलां जग्मुः पश्यन्तो विपुला नदीः ॥ २९।
उत्तीर्य गङ्गां शोणां च सर्वे ते प्राङ्मुखास्त्रयः ।
रम्यं जनपदं स्फीतं मागधं जग्मुरच्युताः ॥ ३०।
देशं च गोधनाकीर्णं मधुमन्तं शुभद्रुमम् ।
गोव्रजं गिरिमासाद्य ददृशुर्मागधं पुरम्* ॥ ३१।

---

1. अ-ख-ब—माधवः पाण्डवेयौ च प्रतस्थुर्व्रतचारिणः ॥
[अधिक पाठः]

* सर्वेषु केशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

श्रीभगवान्—

एष पार्थ महान् स्वादुः पशुमान् नित्यमम्बुमान् ।
अनामयस्सुवेश्माढ्यैर् निवेशो मागधश्शुभः ॥ ३२॥

वैहारो विपुलश्शैलो वाराहो वृषभस्तथा ।
तथा वर्षगिरिस्तात शुभाश्चैत्यकपञ्चमाः ॥ ३३॥

एते पञ्च महाश्रृङ्गाः पर्वताश्शीतलद्रुमाः ।
रक्षन्ति चाभिसंवृत्य संहताश्च गिरिव्रजम् ॥ ३४॥

पुष्पवेष्टितशाखाग्रैर् गन्धवद्भिर्मनोरमैः ।
निर्गूढा इव लोध्राणां वनैः कामिजनप्रियैः ॥ ३५॥

तत्र दीर्घतमा नाम ऋषिः परमयन्त्रितः ।
समुत्पन्नस्तु शूद्रायां गौतमस्संशितव्रतः ॥ ३६॥

औशीनर्यामजनयत् पुत्रान् काक्षीवदादिकान् ।
गौतमः प्रणयादस्माद् अथासीदत्र सद्मनि ॥ ३७॥

भजते मागधं वंशं स नृपाणामनुग्रहात् ॥ ३८

अङ्गवङ्गमुखाश्चैव भूमिपास्सुमहाबलाः ।
गौतमक्षयमासाद्य रमन्ते स्म सहार्जुन ॥ ३९

वनराजीस्तु पश्येमाः प्रियालानां मनोरमाः ।
लोध्राणां च शुभाः पार्थ राजन् राजीवलोचन ॥ ४०
पुन्नागानां नगानां च गौतमौकस्समीपतः ॥ ४०॥

अर्बुदश्शक्रवापी च पन्नगौ शत्रुतापनौ ।
स्वस्तिकस्यालयश्चात्र मणिनागस्य चोत्तमः ॥ ४१॥
अपारिहार्यो मेघानां मागधोऽयं मणेः कृते ।
शेषजश्च मणिश्चैव कृतवन्तावनुग्रहम् ॥ ४२॥
पाण्डरे विपुले चैव तथा वाराहकेऽपि च ।
चैत्यके च गिरिश्रेष्ठे मातङ्गे च शिलोच्चये ॥ ४३॥
एतेषु पर्वतेन्द्रेषु सर्वसिद्धमहालयाः ।
यतीनामाश्रमाश्चैव मुनीनां च महात्मनाम् ॥ ४४॥
वृषभस्य तमालस्य महावीर्यस्य वै तथा ।
गन्धर्वरक्षसां चैव नागानां च तथाऽऽलयाः ॥ ४५॥
कक्षीवतस्तपोवीर्यात् तपोदा इति विश्रुताः ।
पुण्यतीर्थाश्च ते सर्वे सिद्धानां चैव कीर्तिताः ॥ ४६॥
मणेश्च दर्शनादेव भद्रं हि शिवमाप्नुयात् ॥ ४७
दैवसिद्धिं त्वनपगां जरासन्धोऽभिमन्यते ।
वयमासादने तस्य दर्पमस्य निहन्महि ॥ ४८

वैशम्पायनः—

एवमुक्त्वा ततस्सर्वे भ्रातरो विपुलौजसौ ।
कृष्णश्च पाण्डवेयौ च प्रतस्थुर्मागधं पुरम् ॥ ४९
हृष्टपुष्टजनोपेतं चातुर्वर्ण्यसमाकुलम् ।

स्फीतोत्सवमनाधृष्यम् आसेदुस्ते गिरिव्रजम् ॥ ५०
ते च द्वारमनासाद्य पुरस्य गिरिमुच्छ्रितम् ॥ ५०॥
बार्हद्रथैः पूज्यमानं तथा नगरवासिभिः ।
यत्र माषादमृषभम् आससाद बृहद्रथः ॥ ५१॥
तं हत्वा माषनालेभ्यस् तिस्रो भेरीश्चकार ह ।
अनड्डुच्चर्मणा तेन स्थापयामास वै पुरे ॥ ५२॥
यत्र ताः प्राणदन् भेर्यो दिव्यपुष्पाभिपूजिताः ॥ ५३
मागधानां सुरुचिरं चैत्यं कान्तं महाद्रुमम् ।
शिरसीव जिघांसन्तो जरासन्धं जिघांसवः ॥ ५४
स्थिरं सुविपुलं शृङ्गं सुमहान्तं पुरातनम् ।
अर्चितं माल्यदामैश्च सततं सुप्रतिष्ठितम् ॥ ५५
विपुलैर्बाहुभिर्वीरास् ते निहत्याभ्यपातयन् ॥ ५५॥
ततस्ते मागधं द्रष्टुं हृष्टाः प्रविविशुस्तदा ॥ ५६
दृष्ट्वा तु दुर्निमित्तं तद् ब्राह्मणा वेदपारगाः ।
एतस्मिन्नेव काले तु जरासन्धं समर्चयन् ॥ ५७
[1]पर्यग्नि कुर्वन् नृपतिं द्विरदस्थं पुरोहिताः ॥ ५७॥
स्नातकव्रतिनस्ते तु बाहुशस्त्रा निरायुधाः ।
युयुत्सवः प्रविविशुर् जरासन्धेन भारत ॥ ५८॥
भक्ष्यमाल्यापणानां च ददृशुः श्रियमुत्तमाम् ।

1. अ-क-ग—परितस्स्तुवतो वीरं

स्फीतां सर्वगुणोपेतां सर्वकामसमृद्धिनीम् ॥ ५९॥
तां तु दृष्ट्वा समृद्धिं ते वीथ्यां तस्यां नरोत्तमाः ।
राजमार्गेण गच्छन्तः कृष्णभीमधनञ्जयाः ॥ ६०॥
गृह्य माल्यापणान्माल्यं वलाद्बलवतां वराः ।
कर्पूरं शृङ्गं कोष्ठं च सफलं चान्तरापणे ॥ ६१॥
वैश्याद्बलाद्गृहीत्वा ते विहृत्य च महारथाः ।
विरागवसनास्सर्वे स्रग्विणो मृष्टकुण्डलाः ॥ ६२॥
निवेशनमथाजग्मुर् जरासन्धस्य धीमतः ॥ ६३
गोवासमिव वीक्षन्तस् सिंहा हैमवता यथा ॥ ६३॥
शैलस्तम्भनिभास्तेषां चन्दनागुरुरूपिताः ।
अशोभन्त महाराज वाहवः परिघोपमाः ॥ ६४॥
तान् दृष्ट्वा द्विरदप्रख्यान् सालस्कन्धानिवोद्गतान् ।
व्यूढोरस्कान् मागधानां विस्मयस्समपद्यत ॥ ६५॥
अद्वारेणाभ्यवस्कन्द्य विविशुर्मागधालयम् ॥ ६६
ते त्वतीत्य जनाकीर्णाः कक्ष्यास्तिस्रो नरर्षभाः ।
अद्वारेणैव राजानम् उपतस्थुर्महाबलाः ॥ ६७
भो शब्देनैव राजानम् ऊचुस्ते तु महारथाः ॥ ६७॥
तान् पाद्यमधुपर्केण मानार्हान् सत्कृतिं गतान् ।
प्रत्युत्थाय जरासन्ध उपतस्थे यथाविधि ॥ ६८॥

उवाच चैतान् राजाऽसौ स्वागतं वोऽस्त्विति प्रभुः ॥ ६९

तस्य ह्येतद्व्रतं राजन् बभूव भुवि विश्रुतम् ॥ ६९॥

स्नातकान् ब्राह्मणान् ज्ञात्वा प्राप्तान् स समितिञ्जयः ।
अप्यर्धरात्रे नृपतिः प्रत्युद्गच्छति भारत ॥ ७०॥

तांस्त्वपूर्वेण वेषेण दृष्ट्वा स नृपसत्तमः ।
उपतस्थे जरासन्धो विस्मितश्चाभवत् तदा ॥ ७१॥

ते तु दृष्ट्वैव राजानं जरासन्धं नरर्षभाः ।
इदमूचुरमित्रघ्नास् सर्वे भरतसत्तम ॥ ७२॥

स्वस्त्यस्तु कुशलं राजन्नित्युक्त्वा ते व्यवस्थिताः ।
तं नृपं पुरुषव्याघ्रा विप्रैक्षन्त परस्परम् ॥ ७३॥

तानब्रवीज्जरासन्धस् तदा यादवपाण्डवान् ।
आस्यतामिति राजेन्द्रो ब्राह्मणच्छद्मसंवृतान् ॥ ७४॥

अथोपविविशुस्सर्वे त्रयस्ते पुरुषर्षभाः ।
सम्प्रदीप्ता[1]स्त्रयो लक्ष्म्या महाध्वर इवाग्नयः ॥ ७५॥

तानुवाच जरासन्धस् सत्यसन्धो नराधिपः ।
विगर्हमाणः कौरव्य वेषग्रहणधारणम् ॥ ७६॥

**जरासन्धः—**

न स्नातकव्रता विप्रा बहिर्माल्यानुलेपनाः ।

1. क-ग—स्समं । अ-ख-घ—स्समा

भवन्तीति नृलोकेऽस्मिन् विदितं मम सर्वशः ॥ ७७॥

के यूयं पुष्पवन्तश्च भुजैर्ज्याघातलक्षणैः ।
बिभ्रतः क्षात्रमोजश्च ब्राह्मण्यं प्रतिजानथ ॥ ७८॥

एवं विरागवसना बहिर्माल्यानुलेपनाः ।
क्षत्रिया एव लोकेऽस्मिन् विदिता मम सर्वशः ॥ ७९॥

सत्यं वदत के यूयं सत्यं राजसु शोभते ॥ ८०

चैत्यकस्य गिरेश्शृङ्गं भित्त्वा किं मम सद्मनि ।
अद्वारेण प्रविष्टास्स्थ निर्भया राजकिल्बिषात् ॥ ८१

कर्मैतद्विजलिङ्गस्य किं वाऽद्य प्रसमीक्षितम् ।
वदध्वं वाचि वीर्यं हि ब्राह्मणस्य विशेषतः ॥ ८२

एवं मां समुपस्थाय कस्माद्वा विधिनाऽर्हणाम् ।
प्रणीतां नो न गृह्णीत कार्यं किं चास्मदागमे ॥ ८३

**वैशम्पायनः—**

एवमुक्तस्ततः कृष्णः प्रत्युवाच महायशाः ।
स्निग्धगम्भीरया वाचा वाक्यं वाक्यविशारदः ॥ ८४

**श्रीभगवान्—**

स्नातकव्रतिनस्सन्ति ब्राह्मणाः क्षत्रिया विशः ।
विशेषनियमाश्चैषाम् अविशेषाश्च सन्त्युत ॥ ८५

विशेषतश्च सततं क्षत्रियश्श्रियमिच्छति ।

पुष्पवत्सु ध्रुवा श्रीश्च पुष्पवन्तस्ततो वयम् ॥ ८६
क्षत्रियो बाहुवीर्यस्तु न तथा वाक्यवीर्यवान् ।
अप्रगल्भं वचस्तस्य तस्माद्बार्हद्रथ स्मृतम् ॥ ८७
[1]स्वयं वीर्यं क्षत्रियाणां बाह्वोर्धाता न्यवेशयत् ।
तन्नो द्रक्ष्यसि चेद्राजन् द्रष्टास्यद्य न संशयः ॥ ८८
अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहम् ।
प्रविशन्ति सदा सन्तो द्वारं ते वर्जितं ततः ॥ ८९
कार्यवन्तो गृहानेत्य शत्रुतो नार्हणां वयम् ।
प्रतिगृह्णीमहे राजन्नेतन्नश्शाश्वतं व्रतम्* ॥ ९०

जरासन्धः—

न स्मरेयं कदा वैरं कृतं युष्माभिरित्युत ।
चिन्तयंश्च न पश्यामि भवतां प्रति वैकृतम् ॥ ९१
वैकृते चासति कथं मन्यध्वे वा कृतागसम् ।
अरिवद्ब्रूत यद्विप्रास् सतां समय एष हि ॥ ९२
अर्थधर्मोपघाताद्धि मनस्समुपतप्यते ।
योऽनागसि [2]प्रतिसृजेत् क्षत्रियो वीर्यमुत्थितः ॥ ९३

1. ख-घ—स्वं वीर्यं । अ—स्ववीर्यं ।
 * सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
2. ख-घ—प्रसृजति क्षत्रियो वीर्यमुज्झितम् ।
 अ—प्रसृजति क्षत्रियोऽपि न संशयः ।

[1]अतोऽन्यथा चरँल्लोके धर्मज्ञस्स महारथः ।
वृजिनां गतिमाप्नोति श्रेयसोऽभ्युपहन्ति च ॥ ९४

त्रैलोक्ये क्षत्रधर्माद्धि श्रेयांसं साधुचारिणम् ।
अनागसं प्रजानन्तः प्रमादादिव जल्पथ ॥ ९५

**श्रीभगवान्—**

कुलकार्यं महाराज कश्चिदेकः कुलोद्वहः ।
वहते तन्नियोगाद्वै वयमभ्युत्थितास्त्रयः ॥ ९६

त्वया चोपहृता राजन् क्षत्रिया लोकवासिनः ।
तदागः क्रूरमुत्पाद्य मन्यसे किन्त्वनागसम् ॥ ९७

राजा राज्ञः कथं साधून् हिंस्यान्नृपतिसत्तम ।
तान् राज्ञस्सन्निगृह्य त्वं रुद्रायोपजिहीर्षसे ॥ ९८

अस्मांस्तदेनो गच्छेत त्वया बार्हद्रथे कृतम् ।
वयं हि शक्ता धर्मस्य रक्षणे दण्डधारिणः ॥ ९९

[2]तस्मादद्योपगच्छामस् तव बार्हद्रथेऽन्तिकम् ।
मनुष्याणां समालम्भो न हि दृष्टः कदाचन ॥ १००

स कथं मानुषैर्देवं यष्टुमिच्छसि शङ्करम् ।
सवर्णो हि सवर्णानां कथं कुर्याद्विहिंसनम् ॥ १०१

---

1. अ-ख-च—क्षत्रिया एव लोकेऽस्मिन् विदितं मम सर्वशः ।
[अधिकः पाठः]

2. अ—कोशे इदमर्धं नास्ति

यो न स्यात् त्वमिवानार्यो जरासन्ध वृथामतिः ।
ते त्वां ज्ञातिक्षयकरं वयं मार्गानुसारिणः ॥ १०२
ज्ञातिक्षयनिवृत्त्यर्थं परीप्सामो विशेषतः ॥ १०२॥
नास्ति लोके पुमानन्यः क्षत्रियोऽस्मानतीत्य च ।
मन्यसे स च ते राजन सुमहान् बुद्धिविप्लवः ॥ १०३॥
को हि जानन्नभिजनम् आत्मनः क्षत्रियो नृप ।
नाविशेत् स्वर्गमतुलं रणानन्तरमव्ययम् ॥ १०४॥
स्वर्गं ह्येव समुद्दिश्य रणयज्ञेषु दीक्षिताः ।
जयन्ते क्षत्रिया लोकांस् तान् विद्धि मगधेश्वर ॥ १०५॥
स्वर्गयोनिर्जयो राजन् स्वर्गयोनिर्महद्यशः ।
स्वर्गयोनिस्तपो युद्धे मार्गस्त्वव्यभिचारवान ॥ १०६॥
एष ह्यैन्द्रो वैजयिको गुणो नित्यं समाहितः ।
येनासुरान् पराजित्य जगत् पाति शतक्रतुः ॥ १०७॥
[1]कस्य स्यात् स्वर्गमास्थाय निगृहीतुं यथा तव ॥ १०८
मागधैर्विपुलैस्सैन्यैर् वाहुल्याद्वलदर्पितः ।
माऽवमंस्थाः परान् राजन् नास्ति वीर्यं नरेश्वर ॥ १०९
समं तेजस्तथा लोके वलं च मनुजर्षभ ।

1. ख—कल्यस्स्याद्रथमास्थाय निगृहीतुं
ग—कस्य स्याद्रवे
घ—काकस्याद्रथमास्थाय निगृहीतुं

यावदेतन्न संविद्धि तावद्दर्पो भवेत् तव ॥ ११०
विषह्यमेतदस्माकम् अतो राजन् ब्रवीमि ते ।
जहि त्वं सदृशेष्वेव मानं दर्पं च मागध ॥ १११
मा गमस्ससुतामात्यस् सबलश्च यमक्षयम् ॥ १११॥
दम्भोद्भवः कार्तवीर्य उत्तरश्च बृहद्रथः ।
श्रेयसो ह्यवमत्येह विनेशुस्सकला नृपाः ॥ ११२॥
बुभुक्षमाणास्त्वत्तश्च न वयं ब्राह्मणब्रुवाः ।
शौरिरस्मि हृषीकेश इमौ भीमधनञ्जयौ ॥ ११३॥
त्वामाह्वयामहे राजन् स्थिरो युध्यस्व मागध ।
मुञ्चेमान् नृपतीन् सर्वान् मा गमस्त्वं यमक्षयम् ॥ ११४॥

वैशम्पायनः—

एतच्छ्रुत्वा जरासन्धः क्रुद्धो वचनमब्रवीत् ॥ ११५

जरासन्धः—

नाहं कंसः प्रलम्बो वा न बाणो न च मुष्टिकः ।
नरको नेन्द्रतपनो न केशी न च [1]पूतना ॥ ११६
न कालयवनो वाऽपि ये त्वया निहता युधि ।
त्वं तु गोपकुलोत्पन्नो जातिं वै पूर्विकां स्मर ॥ ११७
योऽस्मद्भयादपक्रम्य सागरानूपमाश्रितः ।
जन्मभूमिं परित्यज्य मधुरां प्राकृतो यथा ॥ ११८

---

1. अ-क-ख-ग—वानरः इति वर्तते [वारण इति तु युक्तमुत्पश्यामः]

सोऽधुना कत्थसे शौरे शरदीव यथा घनः ।
अद्यानृण्यं करिष्यामि भोजराजस्य धीमतः ॥ ११९

जामातुरौग्रसेनेश्च त्वां निहत्याद्य माधव ।
चिरकाङ्क्षितो मे सङ्ग्रामस् त्वां हन्तुं ससुहृद्गणम् ॥ १२०

दिष्ट्या मे सफलो यत्नः कृतो देवैस्सवासवैः ।
क्लीवाविमौ च गोविन्द भीमसेनार्जुनावुभौ ॥ १२१
हिंस्यामि युधि विक्रम्य सिंहः क्षुद्रमृगानिव ॥ १२१॥

वैशम्पायनः—

तस्य रोषाभिभूतस्य जरासन्धस्य गर्जतः ।
सर्वभूतानि वित्रेसुर् ये तत्रासन् समागताः ॥ १२२॥

श्रीभगवान्—

किं गर्जसि जरासन्ध कर्मणा तान् समाचर ।
मम निर्देशकर्तृभ्यां पाण्डवाभ्यां नृपाधम ॥ १२३॥

सामात्यं ससुतं चाद्य घातयिष्याम्यहं रणे ।
न कथञ्चन जीवन् वै प्रवेक्ष्यसि पुरोत्तमम् ॥ १२४॥

जरासन्धः—

नाजितं वै नरपतिम् [1]अहमादद्मि कश्चन ।
जितः कः प्रत्यवस्थाता को मया न पराजितः । १२५॥

1. ख-ग-ब-क—अहं पश्यामि ।

क्षत्रियस्यैतदेवाहुर् धर्म्यं कृष्णोपजीवनम् ।
विक्रम्य वशमानीय कामतो यत् समाचरेत् ॥ १२६॥

देवतार्थमुपाहृत्य राज्ञः कृष्ण कथं भयात् ।
अहमद्य विमुञ्चेयं क्षत्रधर्ममनुस्मरन् ॥ १२७॥

सैन्यं सैन्येन व्यूढेन एक एकेन वा पुनः ।
द्वाभ्यां त्रिभिर्वा योत्स्येऽहं युगपत् पृथगेव वा ॥ १२८॥

वैशम्पायनः—

एवमुक्त्वा जरासन्धस् सहदेवाभिषेचनम् ।
आज्ञापयत् तदा राजा युयुत्सुर्भीमकर्मभिः ॥ १२९॥

[1]तौ तु सेनापती काले सस्मार भरतर्षभ ।
कौशिकं चित्रसेनं च तस्मिन् युद्ध उपस्थिते ॥ १३०॥

ययोस्तु नामनी लोके हंसेति डिभकेति च ।
पूर्वं स्तः कथितौ पुम्भिर् नृलोके लोकसत्कृतौ ॥ १३१॥

तं तु राजन् विभुश्शौरी राजानं बलिनां वरम् ।
स्मृत्वा पुरुषशार्दूलश् शार्दूलसमविक्रमम् ॥ १३२॥

सत्यसन्धो जरासन्धं भुवि भीमपराक्रमम् ।
भागमन्यस्य निर्दिष्टं वध्यं मत्वा तदाऽच्युतः ॥ १३३॥

---

1. ग-ङ—स तु सेनापतिं राजा

नात्मनाऽऽत्मवतां मुख्य इयेष मधुसूदनः ।
ब्रह्मणोऽऽज्ञां पुरस्कृत्य हन्तुं हलधरानुजः ॥ १३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ २२ ॥ जरासन्धवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये १३४॥ श्लोकाः]

## ॥ द्वाविंशोऽध्यायः ॥

कृष्णजरासन्धयोर्द्वेषकारणकथनम् ॥ १ ॥ जरासन्धभीमसेनयोः स्वस्त्ययनपूर्वकं युद्धारम्भः ॥ २ ॥ श्रीकृष्णप्रोत्साहितस्य भीमस्य जरासन्धवधोद्यमः ॥ ३ ॥

जनमेजयः—

किमर्थं वैरिणावास्ताम् उभौ तौ कृष्णमागधौ ।
कथं च निर्जितस्सङ्ख्ये जरासन्धेन माधवः ॥ १

कश्च कंसो मागधस्य यस्य हेतोस्स वैरवान् ।
एतदाचक्ष्व मे सर्वं वैशम्पायन तत्वतः ॥ २

वैशम्पायनः—

यादवानामन्ववाये वसुदेवो महामतिः ।
उदपद्यत वार्ष्णेयो ह्युग्रसेनस्य मन्त्रभृत् ॥ ३

उग्रसेनस्य कंसस्तु बभूव बलवान् सुतः ।

ज्येष्ठो बहूनां कौरव्य सर्वशस्त्रविशारदः ॥ ४
जरासन्धस्य दुहिता तस्य भार्याऽतिविश्रुता ।
राज्यशुल्केति दत्ता सा जरासन्धेन धीमता ॥ ५

तदर्थमुग्रसेनस्य मधुरायां सुतस्तदा ।
अभिषिक्तस्तदाऽमात्यैस् स वै तीव्रपराक्रमः ॥ ६

ऐश्वर्यबलमत्तस्तु स तदा बलमोहितः ।
निगृह्य पितरं भुङ्क्ते तद्राज्यं मन्त्रिभिस्सह ॥ ७

वसुदेवस्य तत्कृत्यं न शृणोति स मन्दधीः ।
स तेन सह तद्राज्यं धर्मतः पर्यपालयत् ॥ ८

प्रीतिमान् स तु दैत्येन्द्रो वसुदेवस्य देवकीम् ।
उवाह भार्यां स तदा दुहिता देवकस्य या ॥ ९

तस्यामुद्वाह्यमानायां रथेन जनमेजय ।
उपारुरोह वार्ष्णेयं कंसो भूमिपतिस्तदा ॥ १०

ततोऽन्तरिक्षे वागासीद् देवदूतस्य कस्यचित् ।
वसुदेवश्च शुश्राव तां वाचं पार्थिवश्च सः ॥ ११

यामेतां वहमानोऽद्य कंसोद्वहसि देवकीम् ।
अस्या यश्चाष्टमो गर्भस् स ते मृत्युर्भविष्यति ॥ १२

सोऽवतीर्य ततो राजा खड्गमुद्धृत्य निर्मलम् ।
इयेष तस्या मूर्धानं छेत्तुं परमदुर्मतिः ॥ १३

सान्त्वयन् स तदा कंसं हसन् क्रोधवशानुगम् ।
राजन्ननुनयामास वसुदेवो महामतिः ॥ १४

अहिंस्यां प्रमदामाहुस् सर्वधर्मेषु पार्थिव ।
अकस्मादबलां नारीं हन्तासीमामनागसीम् ॥ १५

यच्च तेऽत्र भयं राजन् शक्यते बाधितुं त्वया ।
इयं च शक्या पालयितुं समयश्चैव रक्षितुम् ॥ १६

अस्यास्त्वमष्टमं गर्भं जातमात्रं महीपते ।
विध्वंसय तदा प्राप्तम् एवं परिहृतं भवेत् ॥ १७

एवं स राजा कथितो वसुदेवेन भारत ।
तस्य तद्वचनं चक्रे शूरसेनपतिस्तदा* ॥ १८

ततस्तस्यां सम्बभूवुः कुमारास्सूर्यवर्चसः ।
जाताञ्जातांस्तु तान् सर्वान् जघान मधुरेश्वरः ॥ १९

अथ तस्यां समभवद् बलदेवस्तु सप्तमः ॥ १९॥

याम्यया मायया तं तु यमो राजा विशाम्पते ।
देवक्या गर्भमतुलं रोहिण्या जठरेऽक्षिपत् ॥ २०॥

आकृष्य कर्षणात् सम्यक् सङ्कर्षण इति स्मृतः ।
बलश्रेष्ठतया तस्य बलदेव इति स्मृतः ॥ २१॥

पुनस्तस्यां समभवद् अष्टमो मधुसूदनः ॥ २२

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

तस्य गर्भस्य रक्षां तु चक्रे सोऽभ्याधिकं नृपः ॥ २२॥
ततः काले रक्षणार्थं वसुदेवस्य सान्त्वतः ।
उग्रः प्रयुक्तः कंसेन साचिवः क्रूरकर्मकृत् ॥ २३॥
विमूढेषु प्रभावेन बालस्योत्तीर्य तत्र वै ।
उपागम्य स घोषे तु जगाम समहाद्युतिः ॥ २४॥
जातमात्रं वासुदेवम् अथाकृष्य पिता ततः ।
उपजह्रे परिक्रीतां सुतां गोपस्य कस्यचित् ॥ २५॥
[1]मुमुक्षमाणस्तं शब्दं देवदूतस्य पार्थिवः ।
जघान कंसस्तां कन्यां प्रहसन्ती जगाम सा ॥ २६॥
आर्येति वाशती शब्दं तस्मादार्येति कीर्तिता ॥ २७
एवं तं वञ्चयित्वा च राजानं स महामतिः ।
वासुदेवं महात्मानं वर्धयामास गोकुले ॥ २८
वासुदेवोऽपि गोष्ठेषु ववृधेऽब्जमिवाम्भसि ।
अज्ञायमानः कंसेन गूढोऽग्निरिव दारुषु ॥ २९
विप्रचक्रे वदन् सर्वान् वल्लवान् मधुरेश्वरः ।
वर्धमानो महाबाहुस् तेजोबलसमन्वितः ॥ ३०
ततस्ते क्लिश्यमानास्तु पुण्डरीकाक्षमच्युतम् ।
भयेन कामादपरे गणशः पर्यवारयन् ॥ ३१

1 ग-च—दिदृक्षमाण

स तु लब्ध्वा बलं राजन् उग्रसेनस्य सम्मतः ।
वसुदेवात्मजस्सर्वैर् भ्रातृभिस्सहितं पुनः ॥ ३२

निर्जित्य युधि भोजेन्द्रं हत्वा कंसं महाबलः ।
अभिषिञ्चत्ततो राज्य उग्रसेनं विशाम्पते ॥ ३३

ततश्श्रुत्वा जरासन्धो माधवेन हतं युधि ।
शूरसेनाधिपं चक्रे कंसपुत्रं तदा नृप ॥ ३४

स सैन्यं महदुत्थाप्य वासुदेवं प्रगृह्य च ।
अभ्यषिञ्चत् सुतं तत्र सुताया जनमेजय ॥ ३५

उग्रसेनं च वृष्णींश्च महाबलसमन्वितः ।
स तत्र विप्रकुरुते जरासन्धः प्रतापवान् ॥ ३६

एतद्वैरं कौरवेय जरासन्धस्य माधवे ।
आशासितार्थे राजेन्द्र संरुरोध विनिर्जितान् ॥ ३७

पार्थिवैस्तैर्नृपतिभिर् यक्ष्यमाणस्समृद्धिमान् ।
देवश्रेष्ठं महादेवं कृत्तिवासं त्रियम्बकम् । ३८

एतत् सर्वं यथावृत्तं कथितं भरतर्षभ ।
यथा तु स हतो राजा भीमसेनेन तच्छृणु* ॥ ३९

ततस्तं निश्चितात्मानं युद्धाय यदुनन्दनः ।
उवाच वाग्मी राजानं जरासन्धमधोक्षजः ॥ ४०

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

**श्रीभगवान्—**

त्रयाणां केन ते राजन् योद्धुं हि त्वरते मनः ।
अस्मदन्यतमोऽद्येह सज्जीभवतु को युधि ॥ ४१

**वैशम्पायनः—**

एवमुक्तस्तु कृष्णेन युद्धं वव्रे महाद्युतिः ।
जरासन्धस्ततो राजा भीमसेनेन मागधः ॥ ४२

धारयन्तं गदां [1]दृष्ट्वा बलं श्रुत्वा च निर्वृतः ॥ ४२॥

अर्जुनं वासुदेवं च वर्जयामास मागधः ।
मत्वा देवं गोप इति बालोऽर्जुन इति स्म ह ॥ ४३॥

[2]उपतस्थे जरासन्धं युयुत्सुं वै पुरोहितः ॥ ४४

कृतस्वस्त्ययनो विद्वान् ब्राह्मणेन यशस्विना ।
सन्नह्यत जरासन्धः क्षत्रधर्ममनुव्रतः ॥ ४५

अवमुच्य किरीटं स केशान् समनुमृज्य च ।
उपातिष्ठज्जरासन्धो वेलातिग इवार्णवः ॥ ४६

उवाच च महाबाहुर् भीमं भीमपराक्रमम् ॥ ४६॥

**जरासन्धः—**

भीम योत्स्ये त्वया सार्धं श्रेयसा निर्जितं परम् ॥ ४७

---

1. अ-क-ख—दिव्यां (ख) दिव्यां निर्वृतिं च जनाधिपम् ।
2. अ—अर्जुनं वासुदेवं च वर्जयित्वा च मागधः ॥ [अधिकः पाठः]

वैशम्पायनः—

एवमुक्त्वा जरासन्धो भीमसेनमरिन्दमः ।
प्रत्युद्ययौ महातेजाश् शक्रं बलिरिवासुरः ॥ ४८

ततस्सम्मन्त्र्य कृष्णेन कृतस्वस्त्ययनो बली ।
भीमसेनो जरासन्धम् आससाद युयुत्सया ॥ ४९

ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः ।
वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ॥ ५०

तयोरथ भुजाघातान्निग्रहप्रग्रहात् तथा ।
आसीत् सुभीमसन्नादो वज्रपर्वतयोरिव ॥ ५१

उभौ परमसंहृष्टौ बलेनातिबलावुभौ ।
अन्योन्यं तौ करतलैर् [1]योधयामासतुर्भृशम् ॥ ५२

अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ।
शिरोभिरिव तौ मेषौ वृक्षैरिव निशाचरौ ॥ ५३

पदैरिव शुभावश्वौ तुण्डाभ्यां तित्तिराविव ।
तद्युद्धमुत्सार्य जनं भीममासीदुपह्वरे ॥ ५४

बलिनोस्संयुगे राजन् वृत्रवासवयोरिव ॥ ५४॥

आकर्षणं प्रकर्षणम् उत्कर्षणनिकर्षणे ।
विकर्षतां तथाऽन्योन्यं जानुभिश्चानुजघ्नतुः ॥ ५५॥

---

1. क—वारयामासतुः । अ-ब—पोथयामासतुः ।

ततश्शब्देन महता भर्त्सयन्तौ परस्परम् ।
पाषाणसङ्घातनिभैः प्रहारैरभिजघ्नतुः ॥ ५६॥

ततो भीमं जरासन्धो जघानोरसि मुष्टिना ।
भीमोऽपि तं जरासन्धं वक्षस्यभिजघान ह ॥ ५७॥

व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
बाहुभिस्समसज्जेताम् आयसैः परिघैरिव ॥ ५८॥

कार्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि ।
तदा तद्युद्धमभवद् दिनानि दश पञ्च च ॥ ५९॥

[1]अनारतं दिवारात्रम् अविश्रान्तमवर्तत ।
घोरं विस्मापनतरम् अभूत् पञ्चदशेऽहनि ॥ ६०॥

तद्युद्धमासीच्च तयोस् समवेतं महात्मनोः ।
पञ्चदश्यां निशायां तु प्रहीणात्माऽभवत् क्रमात् ॥ ६१॥

जरासन्धं तदा क्लान्तं दृष्ट्वा विद्वाञ्जनार्दनः ।
उवाच भीमकर्माणं भीमं सम्बोधयन्निव ॥ ६२॥

**श्रीभगवान्—**

क्लान्तश्शत्रुर्हि कौन्तेय शक्यं पीडयितुं भृशम् ।

---

1. क—अनारतमविश्रान्तं विस्मापनकरं महत् ।
अतिघोरं दिवारात्रम् अभूत् पञ्चदशेऽहनि ॥

पीड्यमानो हि कात्स्न्येन जह्याज्जीवितमात्मनः ॥ ६३॥
तस्मान् त्वयैव कौन्तेय पीडनीयो जनाधिपः ।
समवेतेन युध्यस्व बाहुभ्यां भरतर्षभ ॥ ६४॥

वैशम्पायनः—

एवमुक्तस्तु कृष्णेन पाण्डवः परवीरहा ।
जरासन्धस्य तद्रन्ध्रं ज्ञात्वा चक्रे वधे मतिम् ॥ ६५॥
ततस्तमजितं जेतुं जरासन्धं वृकोदरः ।
संरम्भाद्बलिनां मुख्यो जग्राह कुरुनन्दन ॥ ६६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

॥ २२ ॥ जरासन्धवधपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ६६॥ श्लोकाः]

---

## ॥ त्रयोविंशोऽध्यायः ॥

जरासन्धवधः ॥ १ ॥ जरासन्धेन बन्दीकृतानां राज्ञां कृष्णेन मोचनम् ॥ २ ॥

---

वैशम्पायनः—

भीमसेनस्तदा कृष्णम् उवाच यदुनन्दनम् ।
बुद्धिमास्थाय विपुलां जरासन्धजिघांसया ॥ १

भीमसेनः—

नायं पापो मया कृष्ण युक्त [1]स्यादनुरोधितुम् ।
प्रायेण यदुशार्दूल बान्धवक्षयकृत् तव ॥ २

वैशम्पायनः—

एवमुक्तस्ततः कृष्णः प्रत्युवाच वृकोदरम् ।
त्वरयन् पुरुषव्याघ्रो जरासन्धवधेप्सया ॥ ३

श्रीभगवान्—

यत्तु दैवं परं सत्वं पितुस्ते मातरिश्वनः ।
बलं भीम जरासन्धे दर्शयस्व तदद्य नः ॥ ४

तवैष वध्यो दुर्बुद्धिर् जरासन्धो महारथः ।
इत्यन्तरिक्षे त्वश्रौषं यदा वायुरपोह्यते ॥ ५

गोमन्ते पर्वतश्रेष्ठे येनैष परिमोक्षितः ।
बलदेवबलं प्राप्य कोऽन्यो जीवेत मागधात् ॥ ६

तदस्य मृत्युर्विहितस् त्वदृते [2]न महाबल ।
वायुं चिन्त्य महाबाहो जहीमं मगधाधिपम् ॥ ७

वैशम्पायनः—

एवमुक्तस्तदा भीमो मनसा चिन्त्य मारुतम् ।
जनार्दनं नमस्यैव परिष्वज्य च फल्गुनम् ॥ ८

प्रभञ्जनबलाविष्टो जरासन्धमरिन्दमः ।

---

1. क-ख—स्यादतिरोधितुम् । 2. ख-ग—को महाबलः ।

[1]उत्क्षिप्याभ्रमयद्राजन् बलवन्तं महाबलः ॥ ९

भ्रामयित्वा शतगुणं जानुभ्यां भरतर्षभ ।
बभञ्ज पृष्ठे संक्षिप्य निष्पिष्य विननाद च ॥ १०

[2]करे गृहीत्वा चरणं द्विधा चक्रे महाबलः ॥ १०॥

तस्य निष्पिष्यमाणस्य पाण्डवस्य च गर्जतः ।
अभवत् तुमुलो नादस् सर्वप्राणिभयङ्करः ॥ ११॥

वित्रेसुर्मागधास्सर्वे स्त्रीणां गर्भाश्च सुस्रुवुः ॥ १२

भीमसेनस्य नादेन जरासन्धस्य चैव ह ।
किं नु स्विद्धिमवान् भिन्नः किंनुस्विद्दीर्यते मही ॥ १३
इति स्म मागधा जल्पन् भीमसेनस्य निस्वनात् ॥ १३॥
[3]ततस्तु भगवान् कृष्णो जरासन्धजिघांसया ।
भीमसेनं समालोक्य नलं जग्राह पाणिना ॥ १४॥
द्विधा चिच्छेद वै तत्तु जरासन्धवधं प्रति ॥ १५
ततस्त्वाज्ञाय तस्यैव पादमुत्क्षिप्य मारुतिः ।
द्विधा बभञ्ज तद्गात्रं प्राक्षिपद्विननाद च ॥ १६

---

1 ग—उत्क्षिप्य भ्रामयामास जरासन्धं　अ—उत्क्षिप्य भ्रामयन् राजन्
2 अ-कोशे इदमर्धं नास्ति
3. इत आरभ्य सार्धश्लोकसप्तकमत्यावश्यकम् । परन्तु अ-क-ख-ग-घ-ङ—कोशेषु न दृश्यते । मुद्रितग्रन्थलिपिकोशादुद्धृतमिदम् ।

पुनस्सन्धाय तु तदा जरासन्धः प्रतापवान् ।
भीमेन च समागम्य बाहुयुद्धं चकार ह ॥ १७

तयोस्समभवद्युद्धं तुमुलं रोमहर्षणम् ।
सर्वलोकक्षयकरं सर्वभूतभयावहम् ॥ १८

पुनः कृष्णस्तमिरिणं द्विधा विच्छिद्य माधवः ।
व्यत्यस्य प्राक्षिपत् तत्तु जरासन्धवधेप्सया ॥ १९

भीमसेनस्तदा ज्ञात्वा निर्बिभेद च मागधम् ।
द्विधा व्यत्यस्य पादेन प्राक्षिपच्च ननाद ह ॥ २०

शुष्कमांसास्थिमेदस्त्वग् भिन्नमस्तिष्कपिण्डकः ।
शवभूतस्तदा राजन् पिण्डीकृत इवाबभौ ॥ २१

ततो राज्ञः कुलद्वारि प्रसुप्तमिव तं नृपम् ।
रात्रौ गतासुमुत्सृज्य निश्चक्रमुररिन्दमाः ॥ २२

जरासन्धरथं कृष्णो योजयित्वा पताकिनम् ।
आरोप्य भ्रातरौ राज्ञो मोक्षयामास बान्धवान् ॥ २३

ते वै रत्नभुजं कृष्णं रत्नार्हं पृथिवीश्वराः ।
राजानश्चक्रुरासाद्य मोक्षिता महतो भयात् ॥ २४

अक्षतश्शस्त्रसम्पन्नो जितारिस्सह राजभिः ।

रथमास्थाय तं दिव्यं निर्जगाम गिरिव्रजात् ॥ २५

[1]तयोस्सौन्दर्यवान् नाम विधेयः कृष्णसारथिः ।
[2]अभ्याययावभिमुखो दुर्जयस्सर्वधन्विभिः ॥ २६

भीमार्जुनाभ्यां योधाभ्याम् आस्थितः कृष्णसारथिः ।
शुशुभे रथवर्योऽसौ दुर्जयस्सर्वधन्विभिः ॥ २७

शक्रविष्णू हि सङ्ग्रामे चेरतुस्तारकामये ।
रथेन येन तं कृष्ण उपारुह्य ययौ तदा ॥ २८

एवमेतौ महाबाहू तदा दुष्करकारिणौ ।
कृष्णप्रणीतौ लोकेऽस्मिन् रथे को द्रष्टुमर्हति ॥ २९

इत्यवोचन् व्रजन्तं तं जरासन्धपुरालयाः ।
वासुदेवं नरश्रेष्ठं युक्तं वायुजवैर्हयैः ॥ ३०

तप्तचामीकराभेण किङ्किणीजालमालिना ।
मेघनिर्घोषनादेन जैत्रेणामित्रघातिना ॥ ३१

येन शक्रो दानवानां जघान नवतीर्नव ।
तं प्राप्य समहृष्यन्त रथं ते पुरुषर्षभाः ॥ ३२

ततः कृष्णं महाबाहुं भ्रातृभ्यां सहितं तदा ।

---

1. ग—यश्चासौ वीर्यवान्नाम । ख-ङ—तयोस्सौदर्ययोर्नाम
2. क—अभ्याशपाती सन् दृश्यो । अ—अभ्याशायास्यसादृश्यो

रथस्थं मागधा दृष्ट्वा समपद्यन्त विस्मिताः ॥ ३३
हयैर्दिव्यैस्समायुक्तो रथो वायुसमो जवे ।
अधिष्ठितस्स शुशुभे कृष्णेनातीव भारत ॥ ३४
असङ्गी देवविहितस् तस्मिन् रथवरे ध्वजः ।
स योजनद्वये दृश्यश् श्रीमानिन्द्रायुधप्रभः ॥ ३५
चिन्तयामास कृष्णोऽथ गरुत्मन्तं स चाभ्ययात् ।
क्षणे तस्मिन् स तत्रासीच् चैत्ययूप इवोच्छ्रितः ॥ ३६
व्यादितास्यैर्महानादैस् सर्वभूतैर्ध्वजालयैः ।
तस्मिन् रथवरे तस्थौ गरुत्मान् पन्नगाशनः ॥ ३७
दुर्निरीक्ष्यो हि भूतानां सुपर्णोऽभ्यधिकं बभौ ।
आदित्य इव मध्याह्ने सहस्रकिरणावृतः ॥ ३८
न स सज्जति वृक्षेषु शस्त्रैश्चापि न रिष्यते ।
दिव्यो रथवरो राजन् दृश्यते चैव मानुषैः ॥ ३९
तमास्थाय रथं दिव्यं पर्जन्यसमनिस्स्वनम् ।
निर्ययौ पुण्डरीकाक्षः पाण्डवाभ्यां सहाच्युतः ॥ ४०
यं लेभे वासवाद्राजा वसुस्तस्माद्बृहद्रथः ।
बृहद्रथात् क्रमेणैव प्राप्तो बार्हद्रथो रथम् ॥ ४१
स निर्याय महाबाहुः पुण्डरीकेक्षणस्ततः ।
गिरिव्रजाद्बहिस्तस्थौ समदेशे महामनाः ॥ ४२

तत्रैनं नागरास्सर्वे सत्कारेणाभ्ययुस्तदा ।
ब्राह्मणप्रमुखा राजन् विधिदृष्टेन कर्मणा ॥ ४३

बन्धनाद्विप्रमुक्ताश्च राजानो मधुसूदनम् ।
पूजयामासुरूचुश्च सान्त्वपूर्वमिदं वचः ॥ ४४

राजानः—

नैतच्चित्रं महाबाहो त्वयि देवकिनन्दन ।
भीमार्जुनबलोपेते धर्मस्य परिपालनम् ॥ ४५

जरासन्धह्रदे घोरे दुःखपङ्के निमज्जताम् ।
राज्ञां समभ्युद्धरणं यदिदं कृतमद्य ते ॥ ४६

[1]विष्णो समवसन्नानां गिरिदुर्गे सुदारुणे ।
दिष्ट्या मोक्षाद्यशो दीप्तम् आहृतं ते नरोत्तम ॥ ४७

किं कुर्मः पुरुषव्याघ्र समाज्ञापय नः प्रभो ।
कृतमित्येव तज्ज्ञेयं यद्यपि स्यात् सुदुष्करम् ॥ ४८

वैशम्पायनः—

तानुवाच हृषीकेशस् समाश्वास्य महामनाः ॥
युधिष्ठिरो राजसूयं क्रतुमाहर्तुमिच्छति ॥ ४९

तस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
सर्वैर्भवद्भिर्यज्ञार्थे साहाय्यं दीयतामिति ॥ ५०

---

1. अ-ख-ब—राज्ञां

ततस्सुप्रीतमनसस् ते नृपा भरतर्षभ ।
तं तथेत्यब्रुवन् सर्वे प्रतिजज्ञुश्च तां गिरम् ॥ ५१
रत्नभाजं च दाशार्हं चक्रुस्ते पृथिवीश्वराः ।
कृच्छ्राज्जग्राह गोविन्दस् तेषां तदनुकम्पया ॥ ५२
जरासन्धात्मजश्चैव सहदेवो महारथः ।
निर्ययौ सजनामात्यः पुरस्कृत्य पुरोहितम् ॥ ५३
साचिवैः प्रश्रितो भूत्वा बली रत्नपुरोगमः ।
सहदेवो नृणां देवं वासुदेवमुपस्थितः ॥ ५४

सहदेवः—

यत् कृतं पुरुषव्याघ्र मम पित्रा जनार्दन ।
तत् ते हृदि महाबाहो न कार्यं पुरुषोत्तम ॥ ५५
त्वां प्रपन्नोऽस्मि गोविन्द प्रसादं कुरु मे प्रभो ।
पितुरिच्छामि संस्कारं कर्तुं देवकिनन्दन ॥ ५६
त्वत्तोऽभ्यनुज्ञां सम्प्राप्य भीमसेनात् तथार्जुनात् ।
निर्भयो विचरिष्यामि यथाकामं यथासुखम् ॥ ५७

वैशम्पायनः—

एवं विज्ञाप्यमानस्य सहदेवस्य मारिष ।
प्रहृष्टो देवकीपुत्रः पाण्डवौ च महारथौ ॥ ५८
क्रियतां संस्क्रिया राजन् पितुस्त इति चाब्रुवन् ॥ ५८॥

तच्छ्रुत्वा वासुदेवस्य पार्थयोश्च स मागधः ।
प्रविश्य नगरं तूर्णं सह मन्त्रिभिरच्युत ॥ ५९॥
चितां चन्दनकाष्ठैश्च कालेयसरलैस्तथा ।
कालागरुसुगन्धैश्च तैलैश्च विविधैरपि ॥ ६०॥
घृतधाराक्षतैश्चैव सुमनोभिश्च मागधम् ।
समन्तादवकीर्यन्त दह्यन्तं मागधाधिपम् ॥ ६१॥
उदकं तस्य चक्रेऽथ सहदेवस्सहानुजः ॥ ६२
कृत्वा पितुस्स्वर्गगतिं निर्ययौ यत्र केशवः ।
पाण्डवौ च महाभागौ भीमसेनार्जुनावुभौ ॥ ६३
स प्रह्वः प्राञ्जलिर्भूत्वा विज्ञापयत माधवम् ॥ ६३॥

सहदेवः—

इमे रत्नानि भूरीणि गोजाविमहिषादयः ।
हस्तिनोऽश्वाश्च गोविन्द वासांसि विविधानि च ॥ ६४॥
दीयतां धर्मराजाय यथा वा मन्यते भवान् ॥ ६५

वैशम्पायनः—

भयार्ताय तदा तस्मै दत्वा कृष्णोऽभयं तथा ।
अभ्यषिञ्चत राजानं सहदेवं जनार्दनः ॥ ६६
मागधानां महीपालं जरासन्धात्मजं तदा ।
आददेऽस्य महार्हाणि रत्नानि पुरुषोत्तमः ॥ ६७

गत्वैकत्वं स कृष्णेन पार्थाभ्यां चापि सत्कृतः ।
विवेश मतिमान् राजा पुनर्बार्हद्रथं पुरम् ॥ ६८

पार्थाभ्यां सहितः कृष्णस् सर्वैश्च वसुधाधिपैः ।
यथावयस्समागम्य विससर्ज नराधिपान् ॥ ६९

विसृज्य सर्वान् नृपतीन् राजसूये महात्मभिः ।
आगन्तव्यं भवद्भिस्तु धर्मराजप्रियेप्सुभिः ॥ ७०

एवमुक्ता माधवेन सर्वे ते वसुधाधिपाः ।
एवमस्त्विति चाप्युक्त्वा समेताः परया मुदा ॥ ७१

भीमार्जुनहृषीकेशाः प्रहृष्टाः प्रययुस्सह ।
रत्नान्यादाय भूरीणि ज्वलन्तो रिपुसूदनाः ॥ ७२

कृष्णस्तु सह पार्थाभ्यां प्रययौ च नृपैस्सह ॥ ७२॥

इन्द्रप्रस्थमुपागम्य भ्रातृभ्यां सहितोऽच्युतः ।
समेत्य धर्मराजानं प्रीयमाणमुपास्थितः ॥ ७३॥

दिष्ट्या भीमेन बलवान् जरासन्धो निपातितः ।
राजानो मोक्षिताश्चेमे बन्धनान्नृपसत्तमाः ॥ ७४॥

दिष्ट्या कुशलिनौ चेमौ भीमसेनधनञ्जयौ ।
पुनस्स्वनगरं प्राप्तावक्षताविति भारत ॥ ७५॥

ततो युधिष्ठिरः कृष्णं पूजयित्वा यथार्हतः ।
भीमसेनार्जुनौ चैव प्रहृष्टः परिषस्वजे ॥ ७६॥

ततः क्षीणे जरासन्धे भ्रातृभिर्विहितं जयम् ।
अजातशत्रुरासाद्य मुमुदे भ्रातृभिस्सह ॥ ७७॥
हृष्टश्च धर्मराड्वाक्यं जनार्दनमभाषत ॥ ७८

युधिष्ठिरः—

त्वां प्राप्य पुरुषव्याघ्र भीमसेनेन पातितः ।
मागधोऽसौ बलोन्मत्तो जरासन्धः प्रतापवान् ॥ ७९
राजसूयं क्रतुश्रेष्ठं प्राप्स्यामि विगतज्वरः ।
त्वद्बुद्धिबलमाश्रित्य यागार्होऽस्मि जनार्दन ॥ ८०
पीतं पृथिव्यां युद्धेन यशस्ते पुरुषोत्तम ।
जरासन्धवधेनैव प्राप्तास्ते विपुलाश्श्रियः ॥ ८१

वैशम्पायनः—

एवं सम्भाष्य कौन्तेयः प्रादाद्रथवरं प्रभोः ॥ ८१॥
प्रतिगृह्य तु गोविन्दो जरासन्धस्य तं रथम् ।
प्रहृष्टस्तस्य मुमुदे फल्गुनेन जनार्दनः ॥ ८२॥
प्रीतिमानभवद्राजन् धर्मराजपुरस्कृतः ॥ ८३
यथावयश्च सम्भाष्य प्रेम्णा राजन् नृपैस्सह ।
सत्कृत्य पूजयित्वा च विससर्ज नराधिपान् ॥ ८४
युधिष्ठिराभ्यनुज्ञातास् ते नृपा हृष्टमानसाः ।
जग्मुस्स्वदेशांस्त्वरिता यानैरुच्चावचैस्तदा ॥ ८५

एवं स पुरुषव्याघ्रो महाबुद्धिर्जनार्दनः ।
पाण्डवैर्घातयामास जरासन्धमरिं तदा ॥ ८६

घातयित्वा जरासन्धं बुद्धिपूर्वमरिन्दमः ।
धर्मराजमनुज्ञाप्य पृथां कृष्णां च भारत ॥ ८७

सुभद्रां वासुदेवस्तु फल्गुनं यमजौ तथा ।
धौम्यं भीममनुज्ञाप्य प्रययौ द्वारकां प्रति ॥ ८८

पाण्डवैरनुधावद्भिर् युधिष्ठिरपुरोगमैः ।
हर्षेण महता युक्तः प्राप्य चानुत्तमं यशः ॥ ८९

जगाम हृष्टः कृष्णस्तु पुनर्द्वारवतीं पुरीम् ॥ ८९॥

तेनैव रथमुख्येन तरुणादित्यवर्चसा ।
धर्मराजविसृष्टेन दिव्येनानादयद्दिशः ॥ ९०॥

ततो युधिष्ठिरमुखाः पाण्डवा भरतर्षभ ।
प्रदक्षिणं तदाऽकुर्वन् कृष्णमाक्लिष्टकारिणम् ॥ ९१॥

ततो गते भगवति कृष्णे देवकिनन्दने ।
जयं लब्ध्वा सुविपुलं राज्ञामभयदास्ततः ॥ ९२॥

संवर्धितौजसो भूयः कर्मणा तेन भारत ।
द्रौपद्याः पाण्डवा राजन् परां प्रीतिमवर्धयन् ॥ ९३॥

तस्मिन् काले तु सम्प्राप्ते धर्मकामार्थसंहितम् ।
तद्राजा धर्मतश्चक्रे राज्यं प्राप्य युधिष्ठिरः ॥ ९४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

॥ २२ ॥जरासन्धवधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये ९४॥ श्लोकाः]

[समाप्तं चेदं जरासन्धवधपर्वं]

---

## ॥ चतुर्विंशोऽध्यायः ॥

(अथ दिग्विजयपर्व)

अर्जुनादीनां संक्षेपेण दिग्विजयकथनम् ॥ १ ॥ अर्जुनेन भगदत्तादिजयः ॥ २ ॥ अर्जुनेन उत्तरदिग्विजये नानादेशजयः ॥ ३ ॥

---

वैशम्पायनः—

ऋषेस्तद्वचनं चिन्त्य निशश्वास युधिष्ठिरः ।
धर्मं धर्मभृतां श्रेष्ठः कर्तुमिच्छन् परन्तपः ॥ १
तस्योङ्गितज्ञो बीभत्सुस् सर्वशस्त्रभृतां वरः ।
संविवर्तयिषुः कामं पावकात् पाकशासनिः ॥ २
पार्थः प्राप्य धनुःश्रेष्ठम् अक्षय्यौ च महेषुधी ।
रथं ध्वजं सभां चैव युधिष्ठिरमभाषत ॥ ३

अर्जुनः—

धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् ।

प्राप्तमेतन्मया राजन् दुष्प्रापं यदभीप्सितम् ॥ ४

तस्य कृत्यमहं मन्ये कोशस्यैव विवर्धनम् ।

करमाहारयिष्यामि राजभ्यो राजसत्तम ॥ ५

वैशम्पायनः—

एतच्छ्रुत्वा कुरुश्रेष्ठो धर्मराजस्सहानुजः ।

प्रहृष्टो मन्त्रिभिश्चैव व्यासधौम्यादिभिस्सह ॥ ६

ततो व्यासो महाबुद्धिर् उवाचेदं वचोऽर्जुनम् ॥ ६॥

व्यासः—

साधु साध्विति कौन्तेय दिष्ट्या ते बुद्धिरीदृशी ॥ ७

पृथिवीमखिलां जेतुम् एकोऽध्यवसितो भवान् ।

धन्यः पाण्डुर्महीपालो यस्य पुत्रस्त्वमीदृशः ॥ ८

सर्वं प्राप्स्यति राजेन्द्रो धर्मपुत्रो युधिष्ठिरः ।

त्वद्वीर्येण स धर्मात्मा सार्वभौमत्वमेष्यति ॥ ९

त्वद्बाहुबलमाश्रित्य राजसूयमवाप्स्यति ।

सुनयाद्वासुदेवस्य भीमार्जुनबलेन च ॥ १०

यमयोश्चैव वीर्येण सर्वं प्राप्स्यति धर्मराट् ॥ १०॥

तस्मादिशं देवगुप्ताम् उदीचीं गच्छ फल्गुन ।

शक्तो भवान् सुराञ्जित्वा रत्नान्याहर्तुमोजसा ॥ ११॥

प्राचीं भीमो बलश्लाघी प्रयातु भरतर्षभः ॥ १२

याम्यां तत्र दिशं यातु सहदेवो महारथः ।
प्रतीचीं नकुलो गन्ता वरुणेनाभिपालिताम् ॥ १३

एषा मे नैष्ठिकी बुद्धिः क्रियतां भरतर्षभाः ॥ १३॥

वैशम्पायनः—
श्रुत्वा व्यासवचो हृष्टास् तमूचुः पाण्डुनन्दनाः ॥ १४

पाण्डवाः—
एवमस्तु मुनिश्रेष्ठ यथाऽऽज्ञापयसि प्रभो ॥ १४॥

वैशम्पायनः—
तेऽप्यनुज्ञाप्य राजानं सैन्येन महता वृताः ।
विजयाय प्रयातास्तु दिशस्सर्वा नरोत्तमाः ॥ १५॥

तिथावहनि नक्षत्रे मुहूर्ते च तथा शिवे ॥ १६

प्रहृष्टो मुदितश्चापि धर्मराजो युधिष्ठिरः ।
स्निग्धगम्भीरनादिन्या तं गिरा प्रत्यभाषत ॥ १७

युधिष्ठिरः—
स्वस्ति वाच्यार्हतो विप्रान् प्रयाहि भरतर्षभ ।
दुर्हृदामप्रहर्षाय सुहृदां नन्दनाय च ॥ १८

विजयस्ते ध्रुवं पार्थ प्रियं काममवाप्नुहि ॥ १८॥

वैशम्पायनः—
इत्युक्तः प्रययौ पार्थस् सैन्येन महता वृतः ।
अग्निदत्तेन दिव्येन रथेनाद्भुतकर्मणा ॥ १९॥

तथैव भीमसेनोऽपि यमौ च पुरुषर्षभौ॥ २०

ससैन्याः प्रययुस्सर्वे धर्मराजाभिपूजिताः ॥ २०॥
दिशं धनपतेरिष्टाम् अजयत् पाकशासनिः ॥ २१
भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणाम् ।
प्रतीचीं नकुलो राजन् दिशं व्यजयदस्त्रवित् ॥ २२
खाण्डवप्रस्थमध्यास्ते धर्मराजो युधिष्ठिरः ॥ २२॥

जनमेजयः—

दिशामपि जयं ब्रह्मन् विस्तरेण वदस्व मे ।
न हि तृप्यामि भगवन् पूर्वेषां चरितं महत् ॥ २३॥

वैशम्पायनः—

धनञ्जयस्य वक्ष्यामि विजयं पूर्वमेव ते ।
युगपत् कुरुवीरैस्तु विजितेयं वसुन्धरा ॥ २४॥
अवाप्य राजा राज्यार्धं कुन्तीपुत्रो युधिष्ठिरः ।
महत्त्वे राजशब्दस्य मनश्चक्रे महामनाः ॥ २५॥
तदा क्षात्रं विदित्वाऽस्य पृथिवीविजयं प्रति ।
अमर्षात् पार्थिवेन्द्रास्ते तं समेयुर्युयुत्सवः ॥ २६॥
तत् समेत्य भुवः क्षत्रं रथनागाश्वपत्तिमत् ।
अभ्ययात् पार्थिवं जिष्णुं मोघीकर्तुं जनाधिप ॥ २७॥
तत् पार्थः पार्थिवं क्षत्रं युयुत्सुः परमाहवे ।
प्रत्युद्ययौ महाबाहुस् तरसा पाकशासनिः* ॥ २८॥

---

* अ-क-ख-ग-घ-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

तद्भग्नं पार्थिवं क्षत्रं पार्थेनाक्लिष्टकर्मणा ।
वायुनेव घनानीकं मोघीभूतं ययौ दिशः ॥ २९॥

तज्जित्वा पार्थिवं क्षत्रं समरे परवीरहा ।
ययौ तदा वशे कर्तुम् उदीचीं पाण्डुनन्दनः ॥ ३०॥

पूर्वं कुणिन्दविषये वशे चक्रे महीपतीन् ।
धनञ्जयो महाबाहुर् नातितीव्रेण कर्मणा ॥ ३१॥

तेनैव सहितः प्रायाज् जिष्णुस्साल्वपुरं प्रति ॥ ३२

स साल्वपुरमासाद्य साल्वराजं धनञ्जयः ।
विक्रमेणोग्रधन्वानं वशे चक्रे महामनाः ॥ ३३

तं पार्थस्सहसा जित्वा द्युमत्सेनं धनेश्वरम् ।
कृत्वाऽनुसैनिकं प्रायात् कटदेशमरिन्दमः ॥ ३४

तत्रापराजितं जिष्णुस् सुनाभं वसुधाधिपम् ।
विक्रमेण वशे कृत्वा कृतवाननुसैनिकम् ॥ ३५

स तेन सहितो राजन् सव्यसाची परन्तपः ॥ ३५॥

अनन्तकालकुटिकान् कुणिन्दांश्च विजित्य सः ।
सुमण्डपं पापाजितं कृतवाननुसैनिकम् ॥ ३६॥

विजिग्ये सकलद्वीपं प्रतिविन्ध्यं च पार्थिवम् ॥ ३७

सकलद्वीपवासांश्च सप्तद्वीपे च ये नृपाः ।

तान् सर्वानजयत् पार्थो धर्मराजप्रियेप्सया ॥ ३८

अर्जुनस्य च सैन्यानां तुमुलो विग्रहोऽभवत् ॥ ३८॥

स तानाजौ महेष्वासो निर्जित्य भरतर्षभ ।
तैरेव सहितस्सर्वैः प्राग्ज्योतिषमुपाद्रवत् ॥ ३९॥

तत्र राजा महानासीद् भगदत्तो विशाम्पते ।
तेनैव सुमहद्युद्धं पाण्डवस्य महात्मनः ॥ ४०॥

स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत् ।
अन्यैश्च विविधैर्योधैस् सागरानूपवासिभिः ॥ ४१॥

ततस्स दिवसानष्टौ योधयित्वा धनञ्जयम् ।
प्रहसन्नब्रवीद्राजन् सङ्ग्रामे विगतक्लमम् ॥ ४२॥

भगदत्तः—

उपपन्नं महाबाहो त्वय्येतत् पाण्डुनन्दन ।
पाकशासनदायादे वीर्यमाहवशोभिनि ॥ ४३॥

अहं सखा सुरेन्द्रस्य शक्रादनवमो रणे ।
न च शक्नोमि ते तात स्थातुं प्रमुखतो युधि ॥ ४४॥

तुष्टोऽस्मि तव शौर्येण ब्रूहि किं करवाणि ते ।
यद्वक्ष्यसि महाबाहो तत् करिष्यामि पाण्डव ॥ ४५॥

अर्जुनः—

कुरूणां प्रवरो राजा धर्मनित्यो युधिष्ठिरः ।

तस्य पार्थिवतामीप्सोः करमद्य प्रदीयताम् ॥ ४६॥

भवान् पितृसखा चैव प्रीयमाणो मया युधि ।
अतो नाज्ञापयामि त्वां प्रीतिपूर्वं प्रदीयताम् ॥ ४७॥

भगदत्तः—

कुन्तीसुत यथा मे त्वं तथा राजा युधिष्ठिरः ।
सर्वमेतत् करिष्यामि किं चान्यत् करवाणि ते* ॥ ४८॥

वैशम्पायनः—

स तत्र सत्कृतस्तेन मासमुष्य धनञ्जयः ।
उदक्प्राच्यान् विनिर्जित्य प्रायाद्रामगिरिं प्रति ॥ ४९॥

ततो रामगिरिं गत्वा तथा भुवनपर्वतम् ।
[1]अन्यानपि वशे चक्रे तरसा पाकशासनिः ॥ ५०॥

स विजित्य महाबाहुः कुन्तीपुत्रो धनञ्जयः ।
प्रययावुत्तरां तस्माद् दिशं धनदपालिताम् ॥ ५१॥

अभ्यन्तरं च कौन्तेयस् तथैव च बहिर्गिरिम् ।
तथोपरिगिरिं चैव विजिग्ये पुरुषर्षभः ॥ ५२॥

विजित्य यवनान् सर्वान् ये च तत्र नराधिपाः ।
तान् वशे स्थापयित्वा स रत्नान्यादाय सर्वशः ॥ ५३॥

---

* अ—कोशे अत्रैवाध्यायसमाप्तिर्दृश्यते ।
1 क-ग-ङ—अनाविलं

तैरेव सहितस्सर्वैर् अनुसङ्गम्य तान् नृपान् ।
कुलूतवासिनं राजन् बृहन्तमुपजग्मिवान् ॥ ५४॥

वादित्ररथनादेन हयहेषास्वनेन च ।
कुञ्जराणां च शब्देन कम्पयन्निव मेदिनीम् ॥ ५५॥

ततो बृहन्तस्तरुणो बलेन चतुरङ्गिणा ।
निष्क्रम्य नगराद्राजन्नुपतस्थे धनञ्जयम् ॥ ५६॥

सुमहान् सन्निपातोऽभूद् धनञ्जयबृहन्तयोः ।
न शशाक बृहन्तस्तु सोढुं पाण्डवविक्रमम् ॥ ५७॥

सोऽविषह्यतमं ज्ञात्वा कौन्तेयं पर्वतेश्वरः ।
उपावर्तत दुर्मेधा धनान्यादाय सर्वशः ॥ ५८॥

उपचारच्छलेनासौ प्रददौ सञ्चितान् वसून् ।
अर्बुदं कुञ्जराणां च न्यर्बुदं वाजिनां तथा ॥ ५९॥
ततस्तेनैव सहितः कौलूतेन धनञ्जयः ॥ ६०

स तद्राज्यमवस्थाप्य कौलूतसहितो युवा ।
सेनाबिन्दुमथो राजन् राज्यादाशु समाक्षिपत् ॥ ६१

मोदापुरे वामदेवं सुनामानं सुसङ्कुलम् ।
कुलूतानुत्तरांश्चैव तांश्च राज्ञस्समानयत् ॥ ६२
तत्रस्थः पुरुषैरेव धर्मराजस्य शासनात् ।

न्यजयद्धनञ्जयो राजन् देशान् पञ्च प्रधानतः ॥ ६३
*स दीपप्रस्थमासाद्य सेनाबिन्दोः पुरं महत् ।
बलेन चतुरङ्गेण निवेशनमथाकरोत् ॥ ६४
स तैः परिवृतस्सर्वैर् विष्वगश्वं नराधिपम् ।
अभ्यगच्छन्महाबाहुः पौरवं पुरुषर्षभः ॥ ६५
तं विजित्याहवे शूरं पार्वतीयं महारथः ।
ध्वजिन्याऽप्यजयद्राजन् पुरं पौरवरक्षितम् ॥ ६६
पौरवं च विनिर्जित्य सेनाबिन्दुं च तत्पुरे ।
न्यधापयदमेयात्मा दस्यूनां पतिमर्जुनः ॥ ६७
गणानुत्सवसङ्केतान् अजयत् सप्त पाण्डवः ॥ ६७॥
ततः काश्मीरकान् वीरान् क्षत्रियान् क्षत्रियर्षभः ।
न्यजयल्लोहितं चैव मण्डलैर्दशभिस्सह ॥ ६८॥
ततस्त्रिगर्तान् कौन्तेयो दार्विकानथ कङ्कणान् ।
क्षत्रियान् सुबहून् राजन्नुपावर्तत सर्वशः ॥ ६९॥
अभिसारं ततो रम्यं विजिग्ये कुरुसत्तमः ।
करूशावासिनं चैव रोचमानं रणेऽजयत् ॥ ७०॥
ततस्सिंहपुरं रम्यं चित्रायुधसुरक्षितम् ।
प्रामथद्बलमाश्रित्य पाकशासनिराहवे ॥ ७१॥

* इत आरभ्य अध्यायान्तपर्यन्तविद्यमानश्लोकाः अ—कोशे न सन्ति॥

ततो वङ्गांश्च चोलांश्च किरीटी पाण्डवर्षभः ।
सहितस्सर्वसैन्येन प्रामथत् पृथुविक्रमः ॥ ७२॥

ततः परमसंहृष्टो बाह्लीकान् सामितिञ्जयः ।
महता परिमर्देन वशे चक्रे दुरासदान् ॥ ७३॥

ततस्सारबलं गृह्य फल्गुनोऽन्यान् विसृज्य सः ।
दरदान् सिंहकाम्भोजैर् अजयत् पाकशासनिः ॥ ७४॥

यवनांश्च महाराज शकांश्च व्यजयद्युधि ॥ ७५

किरातान् सिभकान् सर्वान् खरान् काचान् सबभ्रिकान् ।
नीरानुत्पासिकांश्चैव म्लेच्छांश्चान्यान् सहस्रशः ॥ ७६
तान् सर्वानजयत् पार्थो धर्मराजप्रियेप्सया ॥ ७६॥

प्रागुत्तरां दिशं ये च वसन्त्याश्रित्य दस्यवः ।
निवसन्ति वने चैव तान् सर्वानजयद्युधि ॥ ७७॥

ततः परमकाम्भोजान् इषीकानुत्तरानपि ।
सहितैस्तैर्महाराज व्यजयत् पाकशासनिः ॥ ७८॥

इषीकेषु तु सङ्ग्रामो बभूव सुभयङ्करः ।
तारकामयसङ्काशः परमैषीकपार्थयोः ॥ ७९॥

स विजित्य तथा राजन्निषीकान् रणमूर्धनि ।
शुकोदरसमप्रख्यान् हयानष्टौ समानयत् ॥ ८०॥

मयूरसदृशानन्यान् उभयानेव चापरान् ॥ ८१

ततस्स जित्वा बीभत्सुर् भारतं वर्षमुत्तमम् ।
अन्यान् वै दिव्यवर्षांश्च जितवान् कुलपर्वतान् ॥ ८२

जनमेजयः—

कथं स जितवान् पार्थो दिव्यान् वर्षान् सपर्वतान् ।
आनुपूर्व्याच्च मे शंस नामभिस्सह वै द्विज ॥ ८३

वैशम्पायनः—

स जित्वा भारतं वर्षं बलाद्राजन् धनञ्जयः ।
दस्यूंश्चाप्यजयत् सर्वान् कुक्षौ हिमवतो बलात् ॥ ८४

स विनिर्जित्य सङ्ग्रामे हिमवन्तं समन्ततः ।
श्वेतपर्वतमासाद्य न्यवसद्भरतर्षभः ॥ ८५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ २३ ॥ दिग्विजयपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ८५ श्लोकाः]



## ॥ पञ्चविंशोऽध्यायः ॥

अर्जुनेन कृतः उत्तरदिग्विजयः ॥ १ ॥ अर्जुनस्य खाण्डवप्रस्थं प्रति प्रत्यागमनम् ॥ २ ॥

वैशम्पायनः—

*स श्वेतपर्वतं वीरस् समतिक्रम्य भारत ।
देशं किम्पुरुषावासं रामपुत्रेण रक्षितम् ॥ १

महता सन्निपातेन क्षत्रियान्तकरेण ह ।
अजयत् पाण्डवश्रेष्ठः करे चैव न्यवेशयत् ॥ २

तं जित्वा हाटकं नाम देशं गुह्यकरक्षितम् ।
पाकशासनिरव्यग्रस् ससैन्यो वशमानयत् ॥ ३

तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमम् ।
ऋषिकुल्यांश्च तान् सर्वान् ददर्श कुरुनन्दनः ॥ ४

मानसं सर आसाद्य हाटकानभितः प्रभुः ।
गन्धर्वरक्षितं देशम् अजयत् पाण्डवस्ततः ॥ ५

तत्र तित्तिरिकल्माषान् समुद्राक्षान् हयोत्तमान् ।
लेभे स करमत्यन्तं गन्धर्वनगरात् तदा ॥ ६

हेमकूटमथासाद्य न्यविशत् फल्गुनस्तथा ॥ ६॥

* अ-कोशे 1–3 श्लोकाः न दृश्यन्ते ।

तं हेमकूटं राजेन्द्र समतिक्रम्य पाण्डवः ।
हरिवर्षं विवेशाथ सैन्येन महता वृतः ॥ ७॥
तत्र पार्थो ददर्शाथ बहूनिह मनोरमान् ॥ ८
नगरांश्च वनांश्चैव नदीश्च विमलोदकाः ।
पुरुषान् देवकल्पांश्च नारीश्च प्रियदर्शनाः ॥ ९
तान् सर्वांस्तत्र दृष्ट्वाऽथ मुदा युक्तो धनञ्जयः ।
वशे चक्रेऽथ रत्नानि लेभे च सुबहूनि च ॥ १०
ततो निषधमासाद्य गिरिस्थानजयत् प्रभुः ॥ १०॥
अथ राजन्नतिक्रम्य निषधं शैलमायतम ।
विवेश मध्यमं वर्षं पार्थो दिव्यमिलावृतम् ॥ ११॥
तत्र देवोपमान् दिव्यान् पुरुषान् देवदर्शनान् ।
अदृष्टपूर्वान् सुभगान् स ददर्श धनञ्जयः ॥ १२॥
सदनानि च शुभ्राणि नारीश्चाप्सरसन्निभाः ।
दृष्ट्वा तानजयद्रम्यान् स तैश्च ददृशे तदा ॥ १३॥
जित्वा च तान् महाभागान् करे च विनिवेश्य सः ।
रत्नान्यादाय दिव्यानि भूषणैर्वसनैस्सह ॥ १४॥
उदीचीमथ राजेन्द्र ययौ पार्थो मुदाऽन्वितः ॥ १५
स ददर्श महामेरुं शिखराणां प्रभुं महत् ।
तं काञ्चनमयं दिव्यं चतुर्वर्णं दुरासदम् ॥ १६

आयतं शतसाहस्रं योजनानां तु सुस्थितम् ।
ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमम् ॥ १७

आक्षिपन्तं प्रभां भानोस् स्वशृङ्गैः काञ्चनोज्ज्वलैः ।
काञ्चनाभरणं दिव्यं देवगन्धर्वसेवितम् ॥ १८

नित्यपुष्पफलोपेतं सिद्धचारणसेवितम् ।
अप्रमेयमनाधृष्यम् अधर्मबहुलैर्जनैः ॥ १९

व्यालैराचरितं घोरैर् दिव्यौषधिविदीपितम् ।
स्वर्गमावृत्य तिष्ठन्तम् उच्छ्रायेण महागिरिम् ॥ २०

अगम्यं मनसाऽप्यन्यैर् नदीवृक्षसमन्वितम् ।
नानाविहगसङ्घैश्च नादितं सुमनोहरैः ॥ २१

तं दृष्ट्वा फल्गुनो मेरुं प्रीतिमानभवत् तदा ॥ २१॥

मेरोरिलावृतं वर्षं सर्वतः परिमण्डलम् ॥ २२

मेरोस्तु दक्षिणे पार्श्वे जम्बूर्नाम वनस्पतिः ।
नित्यपुष्पफलोपेतस् सिद्धचारणसेवितः ॥ २३

आस्वर्गमुच्छ्रिता राजंस् तस्य शाखा वनस्पतेः ।
यस्य नाम्ना त्विदं द्वीपं जम्बूद्वीपमिति श्रुतम् ॥ २४

तां च जम्बूं ददर्शाथ सव्यसाची परन्तपः ॥ २४॥

तौ दृष्ट्वाऽप्रतिमौ लोके जम्बूं मेरुं च संस्थितौ ।
प्रीतिमानभवद्राजन् सर्वतस्स विलोकयन् ॥ २५॥

तत्र लेभे ततो जिष्णुस् सिद्धैर्दिव्यैश्च चारणैः ।
रत्नानि बहुसाहस्रं वस्त्राण्याभरणानि च ॥ २६॥
अन्यानि च महार्हाणि तत्र लब्ध्वाऽर्जुनस्तदा ।
आमन्त्रयित्वा तान् सर्वान् यज्ञमुद्दिश्य वै गुरोः ॥ २७॥
अथादाय बहून् रत्नान् गमनायोपचक्रमे ॥ २८
मेरुं प्रदक्षिणं कृत्वा पर्वतप्रवरं प्रभुः ।
ययौ जम्बूनदीतीरे नदीं श्रेष्ठां विलोकयन् ॥ २९
स तां मनोरमां हैमां जम्बूस्वादुरसावहाम् ।
हैमपक्षिगणैर्जुष्टां सौवर्णजलजाकुलाम् ॥ ३०
हैमपङ्कां हैमजलां शुभां सौवर्णवालुकाम् ।
क्वचित् सौवर्णपद्मैश्च सङ्कुलां हेमपुष्पकैः ॥ ३१
क्वचित् सुपुष्पितैः कीर्णां सुवर्णकुमुदोत्पलैः ।
क्वचित् तीररुहैः कीर्णां हैमवृक्षैस्सुपुष्पितैः ॥ ३२
तीर्थैश्च रुक्मसोपानैस् सर्वतस्सङ्कुलां शुभाम् ।
विमलैर्मणिजालैश्च नृत्तगीतरवैर्युताम् ॥ ३३
दीप्तैर्हैमवितानैश्च समन्ताच्छोभितां शुभाम् ।
तथाविधां नदीं दृष्ट्वा पार्थस्तां प्रशशंस ह ॥ ३४
अदृष्टपूर्वां राजेन्द्र दृष्ट्वा हर्षमवाप च ॥ ३४॥
दर्शनीयान् नदीतीरे पुरुषान् सुमनोहरान् ॥ ३५
तान् नदीसलिलाहारान् सदारानमरोपमान् ।

नित्यं सुखमुदा युक्तान् सर्वालङ्कारशोभितान् ॥ ३६

तेभ्यो बहूनि रत्नानि तदा लेभे धनञ्जयः ॥ ३६॥

दिव्यजाम्बूनदं हेम भूषणानि च पेशलम् ।

लब्ध्वा तान् दुर्लभान् पार्थः प्रतीचीं प्रययौ दिशम् ॥ ३७॥

नागानां रक्षितं देशम् अजयच्चार्जुनस्ततः ॥ ३८

ततो गत्वा महाराज वारुणीं पाकशासनिः ।

गन्धमादनमासाद्य तत्रस्थानजयत् प्रभुः ॥ ३९

तं गन्धमादनं राजन्नतिक्रम्य ततोऽर्जुनः ।

केतुमालं विवेशाथ वर्षं रत्नसमन्वितम् ॥ ४०

सेवितं देवकल्पैश्च नारीभिः प्रियदर्शनैः ।

तं जित्वा चार्जुनो राजन् करे च विनिवेश्य च ॥ ४१

आहृत्य तत्र रत्नानि दुर्लभानि तथाऽर्जुनः ।

पुनश्च परिवृत्याथ मध्यं देशमिलावृतम् ॥ ४२

गत्वा प्राचीं दिशं राजन् सव्यसाची परन्तपः ।

मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीम् ॥ ४३

तीरे कीचकवेणूनां छायां रम्यामुपासते ॥ ४३॥

खषान्[1] झषांश्च नद्योतान् प्रघसान् दीर्घवेणिकान् ।

---

1. अ—कर्षांश्चर्षांश्च नद्योतान् प्रवासादीर्घवर्णवान् ।
क—न्कर्षांश्च नद्योतान् प्रघासान् दीर्घवैणवान् ।
घ—कर्षकांश्च वनद्योतान् प्रवासान् दीर्घपर्णवान् ।
ख—कर्षांश्चर्षांश्च नद्योतान् प्रावासान् दीर्घपर्णवान् ।

पशुपांश्च कुणिन्दांश्च [1]टङ्कणान् परटङ्कणान् ॥ ४४॥

एतान् समस्ताञ्जित्वा च करे च विनिवेश्य च ।
रत्नान्यादाय सर्वेभ्यो माल्यवन्तं ततो ययौ ॥ ४५॥

तं माल्यवन्तं शैलेन्द्रं समतिक्रम्य पाण्डवः ।
भद्राश्वं प्रविवेशाथ वर्षं स्वर्गोपमं शुभम् ॥ ४६॥

तत्रामरोपमान् रम्यान् पुरुषान् सुखसंयुतान् ।
जित्वा तान् स्ववशे कृत्वा करे च विनिवेश्य च ॥ ४७॥

आहृत्य सर्वरत्नानि असङ्ख्यानि ततस्ततः ।
नीलं नाम गिरिं गत्वा तत्रस्थानजयत् प्रभुः ॥ ४८॥

ततो जिष्णुरतिक्रम्य पर्वतं नीलमायतम् ।
विवेश रम्यकं वर्षं सङ्कीर्णं मिथुनैश्शुभैः ॥ ४९॥

तं देशमथ जित्वा स करे च विनिवेश्य च ।
अजयच्चापि बीभत्सुर् देशं गुह्यकरक्षितम् ॥ ५०॥

तत्र लेभे च राजेन्द्र सौवर्णान् मृगपक्षिणः ।
अगृह्णाद्यज्ञभूत्यर्थं रमणीयान् मनोरमान् ॥ ५१॥

अन्यांश्च लब्ध्वा रत्नानि पाण्डवोऽथ महाबलः ।
गन्धर्वरक्षितं देशम् अजयत् सगणं तदा ॥ ५२॥

---

1. क—कङ्कणान् परतङ्कणान् । ग—तङ्कणान् परमतङ्कणान् ।
ख-घ—तङ्कणान् परितङ्कणान् ।

तत्र रत्नानि दिव्यानि लब्ध्वा राजन्नथार्जुनः ।
श्वेतपर्वतमासाद्य जित्वा पर्वतवासिनः ॥ ५३॥
स श्वेतं पर्वतं राजन् समतिक्रम्य पाण्डवः ।
वर्षं [1]हिरण्यकं नाम विवेशाथ महीपते ॥ ५४॥
स तु देशेषु रम्येषु गन्तुं तत्रोपचक्रमे ।
मध्ये प्रासादवृन्देषु नक्षत्राणां शशी यथा ॥ ५५॥
महापथेषु राजेन्द्र सर्वतो यान्तमर्जुनम् ।
प्रासादवरशृङ्गस्थाः परया वीर्यशोभया ॥ ५६॥
ददृशुस्तास्स्त्रियस्सर्वाः पार्थमात्मयशस्करम् ॥ ५७
तं कलापधरं शूरं सरथं सानुगं प्रभुम् ।
सवर्मं सकिरीटं वै सन्नद्धं सपरिच्छदम् ॥ ५८
सुकुमारं महासत्वं तेजोराशिमनुत्तमम् ।
शक्रोपमममितघ्नं परवारणवारणम् ॥ ५९
पश्यन्तस्त्रीगणास्तत्र शक्तिपाणिं स्म मेनिरे ॥ ५९॥
अयं स पुरुषव्याघ्रो रणेऽद्भुतपराक्रमः ।
अस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ॥ ६०॥
इति वाचो ब्रुवन्त्यस्तास् स्त्रियः प्रेम्णा धनञ्जयम् ।
तुष्टुवुः पुष्पवृष्टिं च ससृजुस्तस्य मूर्धनि ॥ ६१॥

---

1. क—हिरण्मयं। ग—हि रैवतं। ङ—हिरण्वतं।

दृष्ट्वा ते तु मुदा युक्ताः कौतूहलसमन्विताः ।
रत्नैर्विभूषणैश्चैव अभ्यवर्षन्त पाण्डवम् ॥ ६२॥
अथ जित्वा समस्तांस्तान् करे च विनिवेश्य च ॥ ६३
मणिहेमप्रवालानि रत्नान्याभरणानि च ।
एतानि लब्ध्वा पार्थोऽपि शृङ्गवन्तं गिरिं ययौ ॥ ६४
शृङ्गवन्तं च कौन्तेयस् समतिक्रम्य फल्गुनः ।
उत्तरं कुरुवर्षं तु समासाद्य धनञ्जयः ॥ ६५
विद्याधरगणांश्चैव यक्षेन्द्रांश्च विनिर्जयन् ।
तत्र लेभे महाबाहुर् वासो दिव्यमनुत्तमम् ॥ ६६
किन्नरद्रुमपत्रांश्च तत्र कृष्णाजिनान् बहून् ।
याज्ञीयांश्चैव यान् दिव्यांस् तान् स लेभे धनञ्जयः ॥ ६७
इयेष जेतुं [1]तं देशं पाकशासननन्दनः ॥ ६७॥
तत एनं महावीर्यं महाकाया महाबलाः ।
द्वारपालास्समासाद्य धृष्टं वचनमब्रुवन् ॥ ६८॥

द्वारपालाः—

पार्थ नेदं त्वया शक्यं पुरं जेतुं कथञ्चन ।
उपावर्तस्व कल्याण पर्याप्तमिदमच्युत ॥ ६९॥

---

* अ-क-ख-ग-घ-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
1. अ-क-ख-घ—तस्योर्ध्वं तं देशं पाण्डुनन्दनः ।

इदं पुरं यः प्रविशेत् ध्रुवं न स भवेन्नरः ।
प्रीयामहे त्वया वीर पर्याप्तो विजयस्तव ॥ ७०॥

न चात्र किञ्चिज्जेतव्यम् अर्जुनात्र प्रदृश्यते ।
उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्तते ॥ ७१॥

प्रविष्टोऽपि हि कौन्तेय नेह द्रक्ष्यसि किञ्चन ।
न हि मानुषदेहेण शक्यमत्रापि वीक्षितुम् ॥ ७२॥

अथेह पुरुषव्याघ्र किञ्चिदन्यच्चिकीर्षितम् ।
तद्ब्रूहि करिष्यामो वचनात् तव भारत ॥ ७३॥

वैशम्पायनः—

ततस्तानब्रवीद्राजन् पाण्डवः पाकशासनिः ॥ ७४

अर्जुनः—

पार्थिवत्वं चिकीर्षामि धर्मराजस्य धीमतः ।
[1]कृष्णस्य शासनाच्चैव पार्थिवत्वं चिकीर्षति ॥ ७५

न प्रवेक्ष्यामि वो देशं यद्यदृश्यास्स्थ मानुषैः ।
युधिष्ठिराय यत् किञ्चित् करं साधु प्रदीयताम् ॥ ७६

[2]नो चेत् कृष्णेन सहितो योधयिष्यामि पालकाः ॥ ७६॥

वैशम्पायनः—

ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च ।

---

1. अ—कोशे इदमर्धं नास्ति
2. क-ख-ग-घ-ङ—कोशेषु इदमर्धं नास्ति

कृष्णाजिनानि शुभ्राणि तस्मै ते प्रददुः करम् ॥ ७७॥
एवं स पुरुषव्याघ्रो विजित्य दिशमुत्तराम् ।
[1]सङ्ग्रामान् सुबहून् कृत्वा क्षत्रियैर्दस्युभिस्तथा ॥ ७८॥
स विनिर्जित्य राज्ञस्तान् करेषु विनिवेश्य तु ।
धनान्यादाय सर्वेभ्यो रत्नानि विविधानि च ॥ ७९॥
हयांस्तित्तिरिकल्माषान् शुकपत्रनिभानपि ।
मयूरसदृशानन्यान् सर्वाननिलरंहसः ॥ ८०॥
वृतस्स महता राजन् बलेन चतुरङ्गिणा ।
आजगाम पुनर्वीरश् शक्रप्रस्थं पुरोत्तमम् ॥ ८१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ २३ ॥ दिग्विजयपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ८१॥ श्लोकाः]

---

## ॥ षड्विंशोऽध्यायः ॥

भीमेन प्राचीदिग्विजयः ॥१॥ पाञ्चालदेशगमनम् ॥२॥ भीमस्य प्रत्यागमनम् ॥ ३ ॥

---

वैशम्पायनः—
एतस्मिन्नेव काले तु भीमसेनोऽपि वीर्यवान् ।
धर्मराजमनुज्ञाप्य ययौ प्राचीं दिशं प्रति ॥ १

1. ङ—सुदर्शनद्वीपमिदं कार्त्स्न्येन भरतर्षभः [अधिकः पाठः]

महता बलचक्रेण परराष्ट्रविमर्दिना ।
वृतो भरतशार्दूलो द्विषच्छोकविवर्धनः ॥ २

[1]स गत्वा नरशार्दूलः पाञ्चालानां पुरं महत् ।
पाञ्चालान् विविधोपायैस् सान्त्वयामास पाण्डवः ॥ ३

किञ्चित् करं समादाय विदेहानां पुरं ययौ ॥ ३॥

ततस्स कण्टकीं वीरो विदेहांश्च नरर्षभः ।
विजित्याल्पेन कालेन दशार्णानजयत् प्रभुः ॥ ४॥

तत्र दाशार्णको राजा सुवर्मा रोमहर्षणः ।
अद्भुतं कर्म भीमेन युधि चक्रे निरायुधम् ॥ ५॥

भीमसेनस्तु तद्दृष्ट्वा तस्य कर्म परन्तप ।
बलं सर्वमवष्टभ्य परिचक्राम मण्डलम् ॥ ६॥

पोथयित्वा पुरं सर्वं सुवर्माणं ततोऽजयत् । ७
अधिसेनापतिं चक्रे सुवर्माणं महाबलम् ॥ ७॥

ततः प्राचीं दिशं भीमो ययौ भीमपराक्रमः ।
बलेन महता राजन् कम्पयन्निव मेदिनीम् ॥ ८॥

---

1. ग—सुवर्मा तत्र भीमेन रणं चक्रे सुदारुणम् । [पाठान्तरम्]

सोऽश्वमेधेश्वरं राजन् रोचमानं सहानुजम् ।
जिगाय समरे वीरो बलेन बलिनां वरः ॥ ९॥

स तं निर्जित्य कौन्तेयो नातितीव्रेण कर्मणा ।
पूर्वदेशं महावीर्यो विजिग्ये कुरुनन्दनः ॥ १०॥

ततो दक्षिणमासाद्य पुलिन्दनगरं प्रति ।
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् ॥ ११॥

ततस्स धर्मराजस्य शासनात् कुरुनन्दनः ।
[1]शिशुपालं महाबाहुम् अभ्ययाज्जनमेजय ॥ १२॥

चेदिराजोऽपि तच्छ्रुत्वा पाण्डवस्य चिकीर्पितम् ।
उपनिष्क्रम्य नगरात् प्रत्यगृह्णात् परन्तपः ॥ १३॥

तौ समेत्य महाराज कुरुचेदिवृषौ तदा ।
उभयो [2]राजकुलयोः कौशलं पर्यपृच्छताम् ॥ १४॥

ततो निवेद्य तद्राष्ट्रं चेदिराजो विशाम्पते ।
उवाच भीमं प्रहसन् किमिदं क्रियतेऽनघ ॥ १५॥

तस्य भीमस्तदाचख्यौ धर्मराजचिकीर्षितम् ।
स च तं प्रतिगृह्यैव तथा चक्रे परन्तप ॥ १६॥

भीमसेनस्तदा राजन्नुषित्वा त्रिदश क्षपाः ।

---

1. ग—शिशुपालपुरं राजन् ययौ माहिष्मतीं पुरीम्। [अधिकः पाठः]
2. अ-क-ख-ध—राज्ञ

सत्कृतश्शिशुपालेन ययौ सबलवाहनः* ॥ १७॥

वैशम्पायनः—

ततः कुमारविषये श्रेणिमन्तमथाजयत् ॥ १८

कोसलाधिपतिं चैव कौसल्यममितौजसम् ।
अयोध्यायां महीपालं दीर्घप्रज्ञं महाबलम् ॥ १९

अजयत् पाण्डवश्रेष्ठस् सततं भूरिदक्षिणम् ॥ १९॥
गोपालं चैव कौन्तेयो ह्यन्तपालं तथोत्तमम् ।
मल्लानामधिपं चैव कौसल्यं चाजयत् प्रभुः ॥ २०॥

ततो हिमवतः पार्श्वे देशान् बहुविधान् बहून् ।
सर्वानल्पेन यत्नेन वशे चक्रे बलाद्बली ॥ २१॥

एवं बहुविधान् देशान विजित्य पुरुषर्षभः ।
[1]कुन्तलानभितो जिग्ये कुक्षिमन्तं च पर्वतम् ॥ २२॥

पाण्डवस्सुमहावीर्यो बलेन बलिनां वरः ।
[2]काशिराजं समेयाय सुबन्धुमनिवर्तिनम् ॥ २३॥

वशे चक्रे महाबाहुर् भीमो भीमपराक्रमः ॥ २४
ततस्सुपार्श्वमभितस् तथा राजपतिं क्रथम् ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. क-ख-घ—कर्णाटीम अ—कर्णाटम ग—पुन्नाग

2. अ—सर्वानयत्नेन वशम् अनयत् पाण्डुनन्दनः ।
मागधान् बहुधा देशान् विजित्य भरतर्षभः ॥ [अधिकः पाठः]

युध्यमानं बलात् सङ्ख्ये विजिग्ये पाण्डवर्षभः ॥ २५

ततः काशिपतीन् मत्स्यान मालवानिह पाण्डवः ।
अनवद्यां गयां चैव पशुभूमिं च सर्वतः ॥ २६

निर्जित्य च महाबाहुर् अटवीं चैव पर्वतम् ।
गोपतेयांश्च निर्जित्य प्रययावुत्तरामुखः ॥ २७

वत्सभूमिं च कौन्तेयो विजिग्ये बलवान बलात् ॥ २७॥

गर्गाणामाधिपं चैव निषादाधिपति तथा ।
विजिग्ये भूमिपालांश्च मणिमत्प्रमुखान् बहून् ॥ २८॥

ततो दक्षिणमद्रांश्च भोगवन्तं च पाण्डवः ।
तरसैवाजयद्भीमो नातितीव्रेण कर्मणा ॥ १९॥

[1]शर्मगान् धर्मगांश्चैव सान्त्वेनैवाजयत् प्रभुः ॥ ३०
वैदेहं चापि राजानं जनकं जगतीपतिम् ।

विजिग्ये पुरुषव्याघ्रो नातितीव्रेण कर्मणा ॥ ३१

वैदेहस्थस्तु कौन्तेय इन्द्रपर्वतमन्तिकात् ।
किराताधिपतीन् सप्त व्यजयत् तत्र पाण्डवः ॥ ३२

ततस्सुह्मान् प्रसुह्मांश्च समक्षांश्चापि वीर्यवान् ।
विजित्य युधि कौन्तेयो मागधानभ्ययाद्बली ॥ ३३

---

1. अ—कर्मकान् धर्मकांश्चैव　　ख—शमकान् धर्मकांश्चैव

दण्डं च दण्डधारं च विजिग्ये पृथिवीपतिः ।
तथैव सहितस्सर्वैर् गिरिव्रजमुपाद्रवत् ॥ ३४

जारासन्धिं सान्त्वयित्वा करे च विनिवेश्य सः ।
तैरेव सहितः पार्थः कर्णमभ्यगमद्बली ॥ ३५

स कम्पयन्निव महीं बलेन चतुरङ्गिणा ।
युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रकर्शिना ॥ ३६

स कर्णं युधि निर्जित्य वशे चक्रे च भारत ॥ ३६॥
[1]ततो विजिग्ये बलवान् राज्ञः पर्वतवासिनः ॥ ३७

अथ [2]मोदं गिरिपतिं राजानं वै महौजसम् ।
पाण्डवो बाहुवीर्येण निजघान महाबलः ॥ ३८

ततः पुण्ड्राधिपं वीरं वासुदेवाख्यमाययौ ॥ ३८॥

इदानीं वृष्णिवीरेण न योत्स्यामीति पौण्ड्रकः ।
कृष्णस्य भुजसन्त्रासात् करमाशु ददौ नृपः ॥ ३९॥

कौशिकं कच्छनिलयं राजानं च महौजसम् ।
उभौ बलभृतां वीरावुभौ तीव्रपराक्रमौ ॥ ४०॥

निर्जित्याजौ महावीर्यं वङ्गराजमुपाद्रवन् ॥ ४१

समुद्रसेनं निर्जित्य चन्द्रसेनं च पार्थिवम् ।

---

1. ग—शिशुपालेन सहितस्तं विनिर्जित्य पाण्डवः । [अधिकः पाठः]
2. अ-क-ख-घ—मोदागिरिपतिं

ताम्रलिप्तं च राजानं कार्वं वङ्गाधिपं तथा ॥ ४२
अङ्गानामधिपं चैव ये च सागरवासिनः ।
[1]सर्वान् म्लेच्छगणांश्चैव विजिग्ये पुरुषर्षभः ॥ ४३
किरातान् पुरुषादांश्च कर्णप्रावरणानपि ॥ ४३॥
ये च काकमुखा नाम नरराक्षसयोनयः ।
किरातांस्तृणमूलांश्च किरातानोष्ठकार्णिकान् ॥ ४४॥
एवं बहुविधान् देशान् विजित्य पुरुषर्षभः ।
वसून्येषामुपादाय लौहित्यमगमद्वशी ॥ ४५॥
स सर्वान् म्लेच्छनृपतीन् सागरानूपवासिनः ।
करमाहारयामास रत्नानि विविधानि च ॥ ४६॥
चन्दनागुरुवस्त्राणि मणिमुक्तमनुत्तमम् ।
काञ्चनं राजतं वज्रं विद्रुमं च महाधनम् ॥ ४७॥
स कोटिशतसङ्ख्येन धनेन महता वृतः ।
अभ्यवर्षदमेयात्मा धनवर्षेण पाण्डवम् ॥ ४८॥
इन्द्रप्रस्थमथागम्य भीमो भीमपराक्रमः ।
न्यवेदयदमेयात्मा धर्मराजाय तद्धनम् ॥ ४९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ २३ ॥ दिग्विजयपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये ४९॥ श्लोकाः]

---

1. ग—सिद्धानामधिपं चैव पूर्वकाम्भोजकानपि । [अधिकः पाठः]

## ॥ सप्तविंशोऽध्यायः ॥

दक्षिणदिग्विजये शूरसेनादीञ्जितवतः सहदेवस्य माहिष्मत्यां नीलेन सह युद्धम् ॥ १ ॥ नीलस्य अग्निसाहाय्यकरणकारणकथनम् ॥ २ ॥ सहदेवस्तुत्या तुष्टस्याग्नेराज्ञया नीलेनार्चितस्य सहदेवस्य विभीषणात् करग्रहणार्थं घटोत्कचप्रेषणम् ॥ ३ ॥ जनमेजयप्रश्नानुरोधेन सहदेवस्य द्राविडपाण्ड्यदेशगमनस्य वैशम्पायनेन कथनम् ॥ ४ ॥ स्मृतिमात्रागतघटोत्कचलङ्काप्रेषणवृत्तान्तस्य विस्तरेण कथनम् ॥ ५ ॥ कृष्णगौरवेण विभीषणेन करदानम् ॥ ६ ॥ विभीषणात् करमाहृतवता घटोत्कचेन सह सहदेवस्य प्रतिनिवर्तनम् ॥ ७ ॥

वैशम्पायनः—

तथैव सहदेवोऽपि धर्मराजेन पूजितः ।
महत्या सेनया सार्धं प्रययौ दक्षिणां दिशम् ॥ १

स शूरसेनान् कार्त्स्न्येन पूर्वमेवाजयत् प्रभुः ।
मत्स्यराजं च कौरव्यो वशे चक्रे बलाद्बली ॥ २

अधिराजाधिपं चैव दन्तवक्रं महाहवे ।
जिगाय [1]करदं चैव स्वराज्ये संन्यवेशयत् ॥ ३

सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् ।
तथैवापरमत्स्यांश्च व्यजयच्च पटच्चरान् ॥ ४

निषादभूमिं गोशृङ्गं पर्वतप्रवरं तथा ।
तरसा व्यजयद्धीमान् श्रेणिमन्तं च पार्थिवम् ॥ ५

1. अ—नरकं क—नगरं ख—कन्दरं

नवराष्ट्रान् विनिर्जित्य कुन्तिभोजमुपाद्रवत् ।
प्रीतिपूर्वं च तस्यासौ प्रतिजग्राह शासनम् ॥ ६

ततश्चर्मण्वतीतीरे जम्भकस्यात्मजं नृपम् ।
ददर्श वासुदेवेन क्रोधितं पूर्ववैरिणा ॥ ७

चक्रे स तेन सङ्ग्रामं सह भोजेन भारत ।
स तमाजौ विनिर्जित्य दक्षिणाभिमुखो ययौ ॥ ८

[1]मोकान् परममोकांश्च व्यजयत् स पुनः पुनः ।
करं तेभ्य उपादाय रत्नानि विविधानि च ॥ ९
ततस्तैरेव सहितो नर्मदामभितो ययौ ॥ ९॥

[2]विन्दानुविन्दावावन्त्यौ सैन्यैन महता वृतौ ।
जिगाय समरे वीरौ पाण्डवेयः प्रतापवान् ॥ १०॥

ततो रत्नान्युपादाय पुरं भोजकटं ययौ ।
तत्र युद्धमभूत् तात दिवसद्वयमच्युत ॥ ११॥

विनिर्जित्य दुराधर्षं भीष्मकं माद्रिनन्दनः ।
कोसलाधिपतिं चैव तथा वेण्णाकटाधिपम् ॥ १२॥

क्रान्तकांश्च रणे जित्वा तथा प्राकोटकान् नृपान् ।

---

1. अ—भगदत्तं महाबाहुं क्षत्रियं नरकात्मजम् ।
अर्जुनाय करं दत्तं श्रुत्वा तत्र न्यवर्तत ॥ [अधिकः पाठः]

2. ग—भगदत्तं महाबाहुं क्षत्रियं नरकात्मजम् ।
अर्जुनाय करं दत्तं श्रुत्वा तत्र न्यवर्तत ॥ [अधिकः पाठः]

[1]बालकेयान् वशे कृत्वा तथा हैरम्बकानपि ॥ १३॥
स्वरूपं च विनिर्जित्य धर्मग्रामान् सकौसलान् ।
तैत्तिरानर्धपांश्चैव शम्बरांश्च सहस्रशः ॥ १४॥
तांस्तानाटविकान् सर्वान् अजयत् पाण्डुनन्दनः ॥ १५
कारण्डमेयं च नृपं तथा चक्रपुरेऽजयत् ।
पुलिन्दांश्च रणे जित्वा ययौ दक्षिणतः पुनः ॥ १६
[2]ततस्तु पत्तनं प्राप्य सहदेवः प्रतापवान् ।
युयुधे च द्रुमेन्द्रेण दिवसं नकुलानुजः ॥ १७
तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम् ॥[7] १७॥
गुहामासादयद्राजन् किष्किन्धां लोकविश्रुताम् ।
पुरा वानरराजेन सुग्रीवेणाभिपालिताम् ॥ १८॥
[3]ततः कोसलराजस्य रामस्यैवानुगेन च ।
सुग्रीवेणाभिगुप्तां तां प्रविष्टस्तमथाह्वयन् ॥ १९॥
तत्र वानरराजाभ्यां [4]सुषेणेनाङ्गदेन च ।
युयुधे दिवसान् सप्त न च तौ विमुखीकृतौ ॥ २०॥

---

1. क—ताटकेयान् वशे कृत्वा तथा हैरण्डकान् युधि ।
ग—बाधकेयान् वशे कृत्वा तथा हैरम्बकान् युधि ॥
2. अ—कोश इदमर्धं नास्ति ।
3. क-ख-घ-ङ—कोशेषु अयं श्लोको नास्ति
4. ङ—मैन्देन द्विविदेन च । ख-घ—सुषेणवसुषेणयोः ।

[1]ततस्तुतोष सुग्रीवः कोसलाधिपतेस्सखा ॥ २१

ततस्तुष्टौ महात्मानौ सहदेवाय वानरौ ।
ऊचतुश्चैव संहृष्टौ प्रीतिपूर्वमिदं वचः ॥ २२

गच्छ पाण्डवशार्दूलः कृष्णस्यानुमते स्थितः ।
धर्मराजः प्रियो यस्माद् विष्णोरमिततेजसः ॥ २३

सर्वमेतच्छ्रुतं राजन् पारम्पर्येण पाण्डव ।
[2]गच्छ पाण्डवशार्दूल रत्नान्यादाय सर्वशः ॥ २४

अविघ्नमस्तु यज्ञाय धर्मराजस्य धीमतः ।
इत्युक्त्वा वानरौ तौ तु ददतुर्धनमक्षयम् ॥ २५

ततो रत्नान्युपादाय पुरीं माहिष्मतीं ययौ ॥ २५॥

तत्र नीलेन राज्ञा स युद्धं चक्रे नरर्षभः ।
पाण्डवः परवीरघ्नस् सहदेवः प्रतापवान् ॥ २६॥

ततोऽस्य सुमहद्युद्धम् आसील्लोकभयङ्करम् ।
सैन्यक्षयकरं चैव प्राणानां संशयावहम् ॥ २७॥

तत्र नीलस्य साहाय्यं भगवान् हव्यवाहनः ।
चक्रे भरतशार्दूल बहुरूपत्वमास्थितः ॥ २८॥

1. क-ख-ग-ङ—कोशेषु इदमर्धं नास्ति ।
2. क-ख-घ-ङ—कोशेषु अर्धद्वयं नास्ति ।

ततो रथा हया नागाः पुरुषाः कवचानि च ।
प्रदीप्तानि व्यदृश्यन्त सहदेवबले तदा ॥ २९॥

ततस्सुसम्भ्रान्तमना बभूव कुरुनन्दनः ।
नोत्तरं प्रतिवक्तुं च शक्तोऽभूज्जनमेजय ॥ ३०॥

जनमेजयः—

किमर्थं भगवानग्निः प्रत्यमित्रोऽभवद्युधि ।
सहदेवस्य यज्ञार्थं घटमानस्य वै द्विज ॥ ३१॥

वैशम्पायनः—

तत्र माहिष्मतीवासी भगवान् हव्यवाहनः ।
श्रूयते निगृहीतो वै पुरस्तात् पारदारिकः ॥ ३२॥

नीलस्य राज्ञः पूर्वेषाम् उपनीतश्च सोऽभवत् ।
तदा ब्राह्मणरूपेण चरमाणो यदृच्छया ॥ ३३॥

तं तु राजा यथाशास्त्रम् अशासद्धार्मिकस्तदा ।
प्रजज्वाल ततः कोपाद् भगवान् हव्यवाहनः ॥ ३४॥

तं दृष्ट्वा विस्मितो राजा जगाम शिरसा कविम् ।
चक्रे प्रसादं च तदा तस्य राज्ञो विभावसुः ॥ ३५॥

वरेण च्छन्दयामास तं नृपं स्विष्टकृत् तदा ।
अभयं वै स जग्राह परसैन्यान्महीपतिः ॥ ३६॥

तदाप्रभृति ये केचिद् अज्ञानात् तां पुरीं नृपाः ।

जिगीषन्ति बलाद्राजंस् ते दह्यन्ते स्म वह्निना ॥ ३७॥
तस्यां पुर्यां तदा चैव माहिष्मत्यां कुरूद्वह ।
बभूवुरनभिग्राह्या योषितश्छन्दतः किल ॥ ३८॥
एवमग्निर्वरं प्रादात् स्त्रीणामप्रतिवारणम् ।
स्वैरिण्यस्तत्र नार्यो हि यथेष्टं प्रचरन्त्युत ॥ ३९॥
वर्जयन्ति च राजानस् तद्राज्यं पुरुषोत्तम ।
भयादग्नेर्महाराज तदाप्रभृति सर्वदा ॥ ४०॥
सहदेवस्तु धर्मात्मा सैन्यं दृष्ट्वा भयार्दितम् ।
अप्रतप्तमना राजन् नाकम्पत यथा गिरिः ॥ ४१॥
उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत् पावकं तदा ॥ ४२

सहदेवः—

त्वदर्थोऽयं समारम्भः कृष्णवर्त्मन् नमोऽस्तु ते ।
मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक ॥ ४३
पावनात् पावकश्चासि वहनाद्धव्यवाहनः ।
वेदास्त्वदर्थं जाताश्च जातवेदास्ततो ह्यसि ॥ ४४
चित्रभानुस्सुरेशश्च अनलस्त्वं विभावसो ।
अग्निर्दुस्पर्शनश्चासि हुताशो ज्वलनश्शिखी ॥ ४५
वैश्वानरस्त्वं पिङ्गेशो भूरितेजाः प्लवङ्गमः ।
कुमारगर्भो भगवान् रुक्मगर्भो हिरण्यकृत् ॥ ४६

यज्ञविघ्नमिमं कर्तुं नार्हसि त्वं हुताशन ॥ ४६॥

वैशम्पायनः—

एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य मेदिनीम् ।
विधिवत् पुरुषव्याघ्रः पावकं प्रत्युपाविशत् ॥ ४७॥

प्रमुखे सर्वसैन्यस्य भयोद्विग्नस्य भारत ॥ ४८

न चैनमत्यगादग्निर् वेलामिव महोदधिः ॥ ४८॥

तमभ्येत्य शनैरग्निर् उवाच कुरुनन्दनम् ।
सहदेवं नृणां देवं सान्त्वपूर्वमिदं वचः ॥ ४९॥

अग्निः—

उत्तिष्ठोत्तिष्ठ कौरव्य जिज्ञासेयं कृता मया ॥ ५०

[1]देवदेवस्य कृष्णस्य विष्णोरमिततेजसः ।
भुजमाश्रित्य यज्ञं तं चिकीर्षुं पाण्डुनन्दनम् ॥ ५१

जानामि सहदेवाद्य कृतार्थो याहि साम्प्रतम् ॥ ५१॥

वेद्मि सर्वमभिप्रायं तव धर्मसुतस्य च ।
मया तु रक्षितव्येयं पुरी भरतसत्तम ॥ ५२॥

यावद्राज्ञोऽस्य नीलस्य कुले वंशधरा इति ।
ईप्सितं ते करिष्यामि मनसः कुरुनन्दन ॥ ५३॥

---

1. क-ख-च-ङ—कोशेषु सार्धश्लोको नास्ति ।

वैशम्पायनः—

तत उत्थाय धर्मात्मा प्राञ्जलिश्शिरसा नतः ।
पूजयामास माद्रेयः पावकं परमेश्वरम् ॥ ५४॥
पावके विनिवृत्ते तु नीलो राजाऽभ्ययात् तदा ॥ ५५
[1]पावकस्याज्ञया चैनम् अर्चयामास पार्थिवः ।
सत्कारेण नरव्याघ्रं सहदेवं युधां पतिम् ॥ ५६
प्रतिगृह्य च तां पूजां करे च विनिवेश्य तम् ।
माद्रीसुतस्ततः प्रायाद् विजयी दक्षिणां दिशम् ॥ ५७
त्रैपुरं स वशे कृत्वा राजानममितौजसम् ।
निजग्राह महाबाहुस् तरसा पोतनेश्वरम् ॥ ५८
आहुतिं कैशिकाचार्यं यत्नेन महता धृतः ।
वशे चक्रे महाबाहुस् सुराष्ट्राधिपतिं तदा ॥ ५९
सुराष्ट्रविषयस्थस्सन् प्रेषयामास रुक्मिणे ।
राज्ञे भोजकटस्थाय महामात्राय धीमते ॥ ६०
भीष्मकाय स धर्मात्मा साक्षादिन्द्रसखाय च ॥ ६०॥
स चास्य ससुतो राजा प्रतिजग्राह शासनम् ।
प्रीतिपूर्वं महाबाहुर् वासुदेवमवेक्ष्य च ॥ ६१॥
ततस्स रत्नान्यादाय पुनः प्रायाद्युधां पतिः ॥ ६२

---

1. अ-कोश इदमर्धं नास्ति ।

ततश्शूर्पाकरं चैव [1]गौणं चोपहृतं स्वयम् ।
वशे चक्रे महातेजा दण्डकं च महाबलः ॥ ६३

सागरद्वीपवासांश्च नृपतीन् म्लेच्छयोनिजान् ।
निषादान् पुरुषादांश्च कर्णप्रावरणानपि ॥ ६४

ये च कालमुखा नाम नरराक्षसयोनयः ।
कृत्स्नं गोल्लगिरिं चैव मुरचीपत्तनं तथा ॥ ६५

द्वीपं ताम्राशयं चैव पर्वतं राजकं तथा ।
तिमिङ्गिलं च स नृपं वशे चक्रे महामतिः ॥ ६६

एकपादांश्च पुरुपांस् तथा चैवोष्ट्रकण्टकान् ।
नगरीं सञ्जयन्तीं च पिच्छण्डं करवाटजम् ॥ ६७

दूतैरेव वशे चक्रे करदांश्चैव कारयत् ॥ ६७॥

भृगुकच्छगतो धीमान् दण्डेनामित्रकर्शनः ।
बर्बरान् वाशरानन्यान् द्वीपवासान् वशे वशी ॥ ६८॥

कूलकान् दरदांश्चान्यान् सिन्दूरान् वनवासिनः ।
अश्मकान् मूलकांश्चैव विदर्भांश्च महाबलान् ॥ ६९॥

दूतैरेव वशे चक्रे करे च विनिवेश्य सः ॥ ७०

पाण्ड्यांश्च द्रमिलांश्चैव चोलांश्च सह केरलैः ।

---

1. क—गच्छं श्चोपहृताह्वयम् । ख-घ—गणं चोपहृतं स्वयम् ।
ग—प्राप्य जामदग्न्येन पूजितः

[1]सिंहलद्वीपगानन्यान् दूतैश्चक्रे वशे बलात् ॥ ७१

ततः कुसृतिनीतिज्ञान् दक्षिणापथवासिनः ।
अजयन् संयुगे तत्र धर्ममार्गेण पाण्डवः ॥ ७२

सर्वस्वं करनादाय तैरेव सहितो नृपः ।
उत्तरं तीरमासाद्य सागरस्योर्मिमालिनः ॥ ७३

आन्ध्रांस्तालवनानोढ्रान् कलिङ्गानविकांस्तथा ।
अपरं रोचमानं च यतमानं पुरोत्तमे ॥ ७४

दूतैरेव वशे चक्रे करार्थे तानकारयत् ॥ ७४॥

काननद्वीपगांश्चैव तरसा जित्य चाहवे ।
[2]ताम्रपर्णीं ततो गत्वा कन्यातीर्थमथापि च ॥ ७५॥

दक्षिणां च दिशं सर्वां विजित्य कुरुनन्दनः ॥ ७६

[3]सहदेवस्ततो राजन् मन्त्रिभिस्सह तत्र वै ।
सम्प्रधार्य महाबाहुस् सचिवैर्बुद्धिमत्तरैः ॥ ७७

---

1. अ-क-ग—घटोत्कचं महात्मानं राक्षसं घोरदर्शनम् ।
आगम्यतामिति प्राह धर्मराजस्य शासनात् ॥
[अधिकः पाठः]
ग—स राक्षसपरीवारस् तं प्रणम्याशु संस्थितः ।
पुलं तं प्रेषयामास पौलस्त्याय महात्मने ॥ [अधिकः पाठः]
2. क—भृगुकच्छं गतो धीमान् सान्त्वेनामित्रकर्शनः ।
तत्रस्थः प्रेषयामास पौलस्त्याय महात्मने ॥ [अधिकः पाठः]
3. अ—कोशे अयं श्लोको नास्ति ।

[1]चिन्तयामास कौरव्यो भ्रातुः पुत्रं घटोत्कचम् ॥ ७७॥
ततश्चिन्तितमात्रस्तु राक्षसः प्रत्यदृश्यत ।
[2]अतिदीर्घो महाबाहुस् सर्वाभरणभूषितः ॥ ७८॥
अभिवाद्य ततो राजन् सहदेवं घटोत्कचः ।
प्रह्वः कृताञ्जलिस्तस्थौ किं कार्यमिति चाब्रवीत् ॥ ७९॥
तं मेरुशिखराकारम् आगतं पाण्डुनन्दनः ।
प्रेषयामास हैडिम्बं पौलस्त्याय महात्मने ॥ ८०॥
विभीषणाय धर्मात्मा प्रीतिपूर्वमरिन्दमः ॥ ८१
स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् ।
तच्च कालकृतं ज्ञात्वा नावमन्यत बुद्धिमान् ॥ ८२
ततस्सम्प्रेषयामास रत्नानि विविधानि च ।
चन्दनानि च दिव्यानि तथा कालागरूणि च ॥ ८३
वासांसि च महार्हाणि मणींश्च सुमहाधनान्* ॥ ८३॥

जनमेजय—

इच्छाम्यागमनं श्रोतुं हैडिम्बस्य द्विजोत्तम ।
लङ्कायां च गतिं ब्रह्मन् पौलस्त्यस्य च दर्शनम् ॥ ८४॥
कावेरीदर्शनं चैव ह्यानुपूर्व्याद्वदस्व मे ॥ ८५

---

1. क—उत्तरं तीरमासाद्य सागरस्योर्मिमालिनः । [अधिकः पाठः]
2. अ—कोशे सार्धश्लोको नास्ति ।
* ख–घ—कोशयोः अत्रैवाध्यायसमाप्तिर्दृश्यते ॥

वैशम्पायनः—

शृणु राजन् पुरा वृत्तं सहदेवस्य साहसम् ॥ ८५॥

काननद्वीपगांश्चैव तरसा जित्य चाहवे ।

दक्षिणां च दिशं जित्वा चोलस्य विषयं ययौ ॥ ८६॥

ददर्श पुण्यतोयां वै कावेरीं सरितां वराम् ।

नानापक्षिगणैर्जुष्टां तापसैरुपशोभिताम् ॥ ८७॥

साललोध्रार्जुनैर्बिल्वैर् जम्बूशाल्मलकिंशुकैः ।

कीचकैः कुशकाशैश्च पक्ष्मकैरुपशोभिताम् ॥ ८८॥

अच्छैर्जलैश्शोणनिभां पावनाद्गङ्गया समाम् ॥ ८९

कदम्बैस्सप्तपर्णैश्च काश्मर्यामलकैर्वृताम् ॥ ८९॥

न्यग्रोधैश्च महाशाखैः प्लक्षैरौदुम्बरैरपि ।

शमीपलाशवृक्षैश्च अश्वत्थैः खदिरैर्वृताम् ॥ ९०॥

बदरीभिश्च सम्पन्नाम् अश्वकर्णैश्च शोभिताम् ।

करञ्जतिन्त्रिणीकैश्च तालवृन्तैरलङ्कृताम् ॥ ९१॥

शिरीषैः कुटजैर्निम्बैर् मधूकैः क्षीरकैर्वृताम् ।

पुन्नागैर्बकुलैः कुन्दैश् चम्पकैस्सर्वतो वृताम् ॥ ९२॥

प्रियङ्ग्वशोकतिलकैर् अतिमुक्तैश्च शोभिताम् ।

असनैः कर्णिकारैश्च नागवृक्षैरलङ्कृताम् ॥ ९३॥

केतकीभिः कुरबकैर् जातियूथिककन्दलैः ।

अङ्कोलैः करवीरैश्च पुन्नागैः पाटलैर्वृताम् ॥ ९४॥

क्रमुकैर्नालिकेरैश्च पनसाम्रैश्च शोभिताम् ।
चूतैः पुण्ड्रकपत्रैश्च कदल्याढकसंवृताम् ॥ ९५॥
नीपैश्च वेतसैः कीर्णां नालकुन्दकुशैर्भृताम् ।
एवं बहुविधैर्वृक्षैर् दिव्यैरन्यैश्च शोभिताम् ॥ ९६॥
हंसकारण्डवैः कीर्णां कुररैस्सारसैश्शुकैः ।
चक्रवाकगणैर्जुष्टां प्लवैश्च जलवायसैः ॥ ९७॥
समुद्रकाकैः क्रौञ्चैश्च नादितां जलकुक्कुटैः ।
एवं खगैश्च बहुभिस् सङ्घुष्टां जलचारिभिः ॥ ९८॥
आश्रमैर्बहुभिर्युक्तां चैत्यवृक्षैश्च शोभिताम् ।
सेवितां ब्राह्मणैश्शुभ्रैर् वेदवेदाङ्गपारगैः ॥ ९९॥
क्वचित् तीररुहैर्वृक्षैर् मालाभिरिव शोभिताम् ।
पुष्पगुल्मलतोपेताम् अङ्गनामिव भूषणैः ॥ १००॥
क्वचित् पत्राचितैः पद्मैः क्वचित् सौगन्धिकोत्पलैः ।
नानापुष्परजोध्वस्तां प्रमदामिव भूषिताम् ॥ १०१॥
रमणीयां तथा हृद्यां विहृतामप्सरोगणैः ॥ १०२
प्राणिनां जीवनीं श्रेष्ठां पुलिनद्वीपशोभिताम् ।
कह्लारकुमुदैः फुल्लैः कमलैरुपशोभिताम् ॥ १०३
अपारां स्वादुतोयां वै पुलिनद्वीपशोभिताम् ।
कावेरीं तादृशीं दृष्ट्वा प्रीतिमान् पाण्डवोऽब्रवीत् ॥ १०४

अस्मद्राष्ट्रे यथा गङ्गा कावेरी च तथा इह ॥ १०४॥
सहदेवस्तु तां तीर्त्वा नदीमनुचरैस्सह ।
दक्षिणं तीरमासाद्य गमनायोपचक्रमे ॥ १०५॥
आगतं पाण्डवं तत्र श्रुत्वा विषयवासिनः ।
दर्शनार्थं ययुस्ते तु कौतूहलसमन्विताः ॥ १०६॥
द्रमिलाः पुरुषा राजन् स्त्रियश्च प्रियदर्शनाः ।
गत्वा पाण्डुसुतं तत्र ददृशुस्ते मुदाऽन्विताः ॥ १०७॥
सुकुमारं विशालाक्षं व्रजन्तं त्रिदशोपमम् ।
दर्शनीयतमं लोके नेत्रैरनिमिषैरिव ॥ १०८॥
आश्चर्यभूतं ददृशुर् द्रमिडास्ते समाहिताः ।
महासेनोपमं दृष्ट्वा पूजां चक्रुश्च तस्य वै ॥ १०९॥
रत्नैश्च विविधैरिष्टैर् भोगैरन्यैश्च सम्मतैः ।
गीतमङ्गलयुक्ताभिस् स्तुवन्तो नकुलानुजम् ॥ ११०॥
सहदेवस्तु तान् दृष्ट्वा द्रमिलानागतांस्तदा ।
विसृज्य तान् महाराज प्रस्थितो दक्षिणां दिशम् ॥ १११॥
दूतेन तरसा चोलं विजित्य द्रमिडेश्वरम् ।
ततो रत्नान्युपादाय पाण्ड्यस्य विषयं ययौ ॥ ११२॥
दर्शने सहदेवस्य न च तृप्ता नराः परे ।
गच्छन्तमनुगच्छन्तः प्रीत्या कौतूहलान्विताः ॥ ११३॥

ततो माद्रीसुतो राजन् मृगव्रातान् व्यलोकयत् ।
गजान् वनचरानन्यान् व्याघ्रान् कृष्णमृगान् बहून् ॥ ११४॥
शुकान् मयूरान् दृष्ट्वा तु गृध्रानारण्यकुक्कुटान् ॥ ११५
ततो देशं समासाद्य श्वशुरस्य महीपतेः ।
प्रेषयामास माद्रेयो दूतान् पाण्ड्याय वै तदा ॥ ११६
प्रतिजग्राह तस्याज्ञां सम्प्रीत्या मलयध्वजः ॥ ११६॥
भार्या रूपवती जिष्णोः पाण्ड्यस्य तनया शुभा ।
चित्राङ्गदेति विख्याता द्रमिला योषितां वरा ॥ ११७॥
आगतं सहदेवं तु सा श्रुत्वाऽन्तः पुरे पितुः ।
प्रेषयामास सम्प्रीत्या पूजां रत्नानि वै बहु ॥ ११८॥
पाण्ड्योऽपि बहुरत्नानि दूतैस्सह मुमोच ह ।
मणिमुक्ताप्रवालांश्च शङ्खशुक्तियुतान् बहून् ॥ ११९॥
तां दृष्ट्वा प्रीतिमान् पूजां पाण्डवोऽथ मुदा नृप ।
भ्रातुः पुत्रे बहून् रत्नान् अददाद् बभ्रुवाहने ॥ १२०॥
पाण्ड्यं द्रमिडराजानं श्वशुरं मलयध्वजम् ।
स दूतैस्तं वशे कृत्वा मणल्लूरेश्वरं तदा ॥ १२१॥
ततो रत्नान्युपादाय द्रमिडैरावृतो ययौ ।
अगस्त्यस्यालयं दिव्यं देवलोकसमं गिरिम् ॥ १२२॥
स तं प्रदक्षिणं कृत्वा मलयं भरतर्षभ ।

लङ्घयित्वा तु माद्रेयस् ताम्रपर्णीं नदीं शुभाम् ॥ १२३॥

प्रसन्नसलिलां दिव्यां सुशीतां चन्दनोद्वहाम् ।
समुद्रतीरमासाद्य न्यविशन् पाण्डुनन्दनः* ॥ १२४॥

सहदेवस्ततो राजन् मन्त्रिभिस्सह भारत ।
सम्प्रधार्य महाबाहुस् सचिवैर्बुद्धिमत्तरैः ॥ १२५॥

अनुमान्य स तां राजन् सहदेवस्त्वरान्वितः ।
चिन्तयामास राजेन्द्र भ्रातुः पुत्रं घटोत्कचम् ॥ १२६॥

ततश्चिन्तितमात्रे तु राक्षसः प्रत्यदृश्यत ।
अतिदीर्घो महाकायस् सर्वाभरणभूषितः ॥ १२७॥

नीलजीमूतसङ्काशश् तप्तकाञ्चनकुण्डलः ।
विचित्रहारकेयूरः किङ्किणीमणिभूषितः ॥ १२८॥

हेममाली महादंष्ट्रः किरीटी [1]कुक्षिबन्धनः ।
ताम्रकेशो हरिश्मश्रुर् भीमाक्षः कनकाङ्गदः ॥ १२९॥

रक्तचन्दनदिग्धाङ्गः सूक्ष्माम्बरधरो बली ।
जवेन स ययौ तत्र चालयन्निव मेदिनीम् ॥ १३०॥

ततो दृष्ट्वा जना राजन् आयान्तं पर्वतोपमम् ।
भयाद्धि दुद्रुवुस्सर्वे सिंहात् क्षुद्रमृगा यथा ॥ १३१॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥
1. अ-ग—रक्तलोचनः

आससाद च माद्रेयं पुलस्त्यं रावणो यथा ॥ १३२

अभिवाद्य ततो राजन् सहदेवं घटोत्कचः ।

प्रह्वः कृताञ्जलिस्तस्थौ किं कार्यमिति चाब्रवीत् ॥ १३३

तं मेरुशिखराकारम् आगतं पाण्डुनन्दनः ।

सम्परिष्वज्य बाहुभ्यां मूर्ध्न्युपाघ्राय चासकृत् ॥ १३४

पूजयित्वा सहामात्यः प्रीतो वाक्यमुवाच ह ॥ १३४॥

सहदेवः—

गच्छ लङ्कां पुरीं वत्स करार्थं मम शासनात् ।

तत्र दृष्ट्वा महात्मानं राक्षसेन्द्रं विभीषणम् ॥ १३५॥

रत्नानि राजसूयार्थं विविधानि बहूनि च ।

उपादाय च सर्वाणि प्रत्यागच्छ महाबल ॥ १३६॥

नो चेदेवं वदेः पुत्र समर्थमिदमुत्तरम् ॥ १३७

विष्णोर्भुजबलं वीक्ष्य राजसूयमथारभत् ॥ १३७॥

कौन्तेयो भ्रातृभिस्सार्धं सर्वं जानीहि साम्प्रतम् ।

स्वस्ति तेऽस्तु गमिष्यामि सर्वं वैश्रवणानुज ॥ १३८॥

इत्युक्त्वा शीघ्रमागच्छ मा भूत् कालस्य पर्ययः ॥ १३९

वैशम्पायनः—

पाण्डवेनैवमुक्तस्तु मुदा युक्तो घटोत्कचः ।

तथेत्युक्त्वा महाराज प्रतस्थे दक्षिणां दिशम् ॥ १४०

ययौ प्रदक्षिणं कृत्वा सहदेवं घटोत्कचः ।
लङ्कामभिमुखो राजन् समुद्रमवलोकयत् ॥ १४१
कूर्मग्राहझषाकीर्णं नक्रैर्मीनैस्तथाऽऽकुलम् ।
शुक्तिव्रातैस्समाकीर्णं शङ्खानां निचयाकुलम् ॥ १४२
स दृष्ट्वा रामसेतुं च चिन्तयन् रामविक्रमम् ।
प्रणम्य तमतिक्रम्य याम्यां वेलामलोकयत् ॥ १४३
गत्वा पारं समुद्रस्य दक्षिणं स घटोत्कचः ।
ददर्श लङ्कां राजेन्द्र नाकपृष्ठोपमां शुभाम् ॥ १४४
प्राकारेणावृतां रम्यां शुभद्वारैश्च शोभिताम् ।
प्रासादैर्बहुसाहस्रैश् श्वेतरक्तैश्च सङ्कुलाम् ॥ १४५
तापनीयगवाक्षेण मुक्ताजालान्तरेण च ।
हैमराजतजालेन दान्तजालैश्च शोभिताम् ॥ १४६
हर्म्यगोपुरसम्बाधां रुक्मतोरणसङ्कुलाम् ।
दिव्यदुन्दुभिनिर्ह्रादाम् उद्यानवनशोभिताम् ॥ १४७
पुष्पगन्धैश्च सङ्कीर्णां रमणीयमहापथाम् ।
नानारत्नैश्च सम्पूर्णाम् इन्द्रस्येवामरावतीम् ॥ १४८
विवेश स पुरीं लङ्कां राक्षसैश्च निषेविताम् ॥ १४८॥
ददर्श राक्षसव्रातान् शूलप्रासधरान बहून् ।

नानावेषधरान् दक्षान् नारीश्च प्रियदर्शनाः ॥ १४९॥
दिव्यमाल्याम्बरधरा दिव्याभरणभूषिताः ।
मदरक्तान्तनयनाः पीनश्रोणिपयोधराः ॥ १५०॥
भैमसेनिं ततो दृष्ट्वा हृष्टास्ते विस्मयं गताः ।
आससाद गृहं राज्ञ इन्द्रस्य सदनोपमम् ॥ १५१॥
स द्वारपालमासाद्य वाक्यमेतदुवाच ह ॥ १५२

घटोत्कचः—

कुरूणामृषभो राजा पाण्डुर्नाम महाबलः ।
कनीयांस्तस्य दायादस् सहदेव इति श्रुतः ॥ १५३
[1]कृष्णमित्रस्य तु गुरो राजसूयार्थमुद्यतः ॥ १५३॥
तेनाहं प्रेषितो दूतः करार्थं कौरवस्य च ।
द्रष्टुमिच्छामि पौलस्त्यं त्वं क्षिप्रं मां निवेदय ॥ १५४॥

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा द्वारपालो महीपतेः ।
तथेत्युक्त्वा विवेशाथ भवनं स निवेदकः ॥ १५५॥
साञ्जलिस्स समाचष्ट सर्वां दूतगिरं तदा ॥ १५६
द्वारपालवचश्श्रुत्वा राक्षसेन्द्रो विभीषणः ।
उवाच वाक्यं धर्मात्मा समीपं मे प्रवेश्यताम् ॥ १५७

1. इदमर्धं—अ—कोशे नास्ति

एवमुक्तस्तु राजेन्द्र धर्मज्ञेन महात्मना ।
अथ निष्क्रम्य सम्भ्रान्तो द्वार्स्थो हैडिम्बमब्रवीत् ॥ १५८
एहि दूत नृपं द्रष्टुं क्षिप्रं प्रविश च स्वयम् ।
द्वारपालवचश्श्रुत्वा प्रविवेश घटोत्कचः ॥ १५९
स प्रविश्य ददर्शाथ राक्षसेन्द्रस्य मन्दिरम् ॥ १५९॥
ततः कैलाससङ्काशं तप्तकाञ्चनतोरणम् ।
प्राकारेण परिक्षिप्तं गोपुरैश्चापि शोभितम् ॥ १६०॥
हर्म्यप्रासादसम्बाधं नानारत्नसमन्वितम् ॥ १६१
काञ्चनैस्तापनीयैश्च स्फाटिकै राजतैरपि ।
वज्रवैडूर्यगर्भैश्च स्तम्भैर्दृष्टिमनोहरैः ॥ १६२
नानाध्वजपताकाभिस् सुवर्णाभिश्च चित्रितम् ॥ १६२॥
चित्रमाल्याघृतं रम्यं तप्तकाञ्चनवेदिकम् ॥ १६३
तान् दृष्ट्वा तत्र सर्वान् स भैमसेनिर्मनोरमान् ।
प्रविशन्नेव हैडिम्बश् शुश्राव मुरवस्वनम् ॥ १६४
तन्त्रीगीतसमाकीर्णं समतालमिताक्षरम् ।
दिव्यदुन्दुभिनिर्ह्रादं वादित्र[1]शतसङ्कुलम् ॥ १६५
स श्रुत्वा मधुरं शब्दं प्रीतिमानभवत् तदा ॥ १६५॥
ततो विगाह्य हैडिम्बो बहुकक्ष्यां मनोरमाम् ।

1. अ-क—सततं शुभम्

स ददर्श महात्मानं द्वार्स्थेन भरतर्षभ ॥ १६६॥

तं विभीषणमासीनं काञ्चने परमासने ।
दिव्ये भास्करसङ्काशे मुक्तामणिविभूषिते ॥ १६७॥

दिव्याभरणचित्राङ्गं दिव्यरूपधरं विभुम् ।
दिव्यमाल्याम्बरधरं दिव्यगन्धोक्षितं शुभम् ॥ १६८॥

विभ्राजमानं वपुषा सूर्यवैश्वानरप्रभम् ।
उपोपविष्टं सचिवैर् देवैरिव शतक्रतुम् ॥ १६९॥

यक्षैर्महारथैर्दिव्यैर् नारीभिः प्रियदर्शनैः ।
गीर्भिर्मङ्गलयुक्ताभिः पूज्यमानं यथाविधि ॥ १७०॥

चामरे व्यजने चाग्र्ये हेमदण्डे महाधने ।
गृहीते वरनारीभ्यां धूयमाने च मूर्धनि ॥ १७१॥

अर्चिष्मन्तं श्रिया जुष्टं कुबेरवरुणोपमम् ।
धर्मे चैव स्थितं नित्यम् अद्भुतं राक्षसेश्वरम् ॥ १७२॥

राममिक्ष्वाकुनाथं वै स्मरन्तं मनसा सदा ।
दृष्ट्वा घटोत्कचो राजन् ववन्दे तं कृताञ्जलिः ॥ १७३॥

प्रह्वस्तस्थौ महावीर्यश् शक्रं चित्ररथो यथा ॥ १७४

तं दूतमागतं दृष्ट्वा राक्षसेन्द्रो विभीषणः ।
पूजयित्वा यथान्यायं सान्त्वपूर्वं वचोऽब्रवीत् ॥ १७५

विभीषणः—

कस्य वंशे नु सञ्जातः करमिच्छन् महीपतिः ।

तस्यानुजान् समस्तांश्च पुरं देशं च तस्य वै ॥ १७६

त्वां च कार्यं च तत् सर्वं श्रोतुमिच्छामि तत्त्वतः ॥ १७६॥

विस्तरेण मम ब्रूहि सर्वानेतान् पृथक् पृथक्* ॥ १७७

वैशम्पायनः—

एवमुक्तस्तु हैडिम्बः पौलस्त्येन महात्मना ।

कृताञ्जलिरुवाचाथ सान्त्वयन् राक्षसाधिपम् ॥ १७८

घटोत्कचः—

सोमस्य वंशे राजाऽऽसीन् पाण्डुर्नाम महाबलः ।

पाण्डोः पुत्राश्च पञ्चासन् छक्रतुल्यपराक्रमाः ॥ १७९

तेषां ज्येष्ठस्तु नाम्नाऽभूद् धर्मपुत्र इति श्रुतः ।

अजातशत्रुर्धर्मात्मा धर्मो विग्रहवानिव ॥ १८०

ततो युधिष्ठिरो राजा प्राप्य राज्य [1]मकारयत् ।

गङ्गाया दक्षिणे तीरे नगरे नागसाह्वये ॥ १८१

तद्दत्वा धृतराष्ट्राय शक्रप्रस्थं ययौ ततः ।

भ्रातृभिस्सह राजेन्द्र शक्रप्रस्थे प्रमोदते ॥ १८२

गङ्गायमुनयोर्मध्ये तावुभौ नगरोत्तमौ ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. क-ख-ग-घ—मपालयत्

नित्यं धर्मे स्थितो राजा शक्रप्रस्थे प्रशासति ॥ १८३

तस्यानुजो महाबाहुर् भीमसेनो महाबलः ।
महातेजा महावीर्यस् सिंहतुल्यस्स पाण्डवः ॥ १८४

दशनागसहस्राणां बले तुल्यस्स पाण्डवः ।
तस्यानुजोऽर्जुनो नाम महावीर्यपराक्रमः ॥ १८५

सुकुमारो महासत्वो लोके वीर्येण विश्रुतः ।
कार्तवीर्यसमो वीर्ये सागरप्रतिमो बले ॥ १८६

जामदग्न्यसमो ह्यस्त्रे सङ्ख्ये रामसमोऽर्जुनः ।
रूपे शक्रसमः पार्थस् तेजसा भास्करोपमः ॥ १८७

देवदानवगन्धर्वैः पिशाचोरगराक्षसैः ।
मानुषैश्च समस्तैश्च अजेयः फल्गुनो रणे ॥ १८८

तेन तत् खाण्डवं दावं तर्पितं जातवेदसे ।
तरसा तर्पयित्वा तं शक्रं देवगणैस्सह ॥ १८९

लब्धान्यस्त्राणि दिव्यानि [1]तर्पयित्वा हुताशनम् ॥ १८९॥
तेन लब्धा महाराज दुर्लभा दैवतैरपि ।
[2]वासुदेवस्य भगिनी सुभद्रा नाम विश्रुता ॥ १९०॥

---

1. ग—गाण्डीवं सरथं तदा । अ—गाण्डीवं सरथं तथा ।
2 ग—देवदेवस्य भगिनीं लब्धवान् धनदानुज ।
सा सर्वेणानवद्याङ्गी दैवतैरतिदुर्लभा ।
अनुजा वृष्णिवीरस्य सुभद्रा नाम विश्रुता ॥ [अधिकः पाठः]

अर्जुनस्यानुजो राजन् नकुलश्चेति विश्रुतः ।
दर्शनीयतमो लोके मूर्तिमानिव मन्मथः ॥ १९१॥

तस्यानुजो महातेजास् सहदेव इति श्रुतः ।
तेनाहं प्रेषितो राजन् सहदेवेन मारिष ॥ १९२॥

अहं घटोत्कचो नाम भीमसेनसुतो बली ।
मम माता महाभागा हिडिम्बा नाम राक्षसी ॥ १९३॥

पार्थानामुपकारार्थं चरामि पृथिवीमिमाम् ॥ १९४

आसीत् पृथिव्यास्सर्वस्या महीपालो युधिष्ठिरः ।
राजसूयं क्रतुश्रेष्ठम् आहर्तुमुपचक्रमे ॥ १९५

सन्दिदेश च स भ्रातॄन् करार्थं सर्वतोदिशम् ॥ १९५॥
[1]वृष्णिवीरेण सहितस् सन्दिदेशानुजान् नृपः ।
उदीचीमर्जुनस्तूर्णं करार्थं समुपाययौ ॥ १९६॥

गत्वा शतसहस्राणि योजनानि महाबलः ।
जित्वा सर्वान् नृपान् युद्धे हत्वा च तरसा वशी ॥ १९७॥

स्वर्गद्वारमुपागम्य रत्नान्यादाय वै भृशम् ।
अश्वांश्च विविधान् दिव्यान् सर्वानादाय फल्गुनः ॥ १९८॥

धनं बहुविधं राजन् धर्मपुत्राय वै ददौ ॥ १९९

भीमसेनो हि राजेन्द्र जित्वा प्राचीं दिशं बलात् ।

1. अ—कोश इदमर्धं नास्ति

वशे कृत्वा महीपालान् पाण्डवाय धनं ददौ ॥ २००

दिशं प्रतीचीं नकुलः करार्थं प्रययौ तथा ॥ २००॥

सहदेवो दिशं याम्यां जित्वा सर्वान् महीक्षितः ।

मां सन्दिदेश राजेन्द्र करार्थमिह सत्कृतः ॥ २०१॥

पार्थानां चरितं तुभ्यं सङ्क्षेपात् समुदाहृतम् ॥ २०२

[1]तमवेक्ष्य महाराज धर्मराजं युधिष्ठिरम् ।

पावकं राजसूयं च भगवन्तं हरिं प्रभुम् ॥ २०३

एतानवेक्ष्य धर्मज्ञ करं त्वं दातुमर्हसि* ॥ २०३॥

वैशम्पायनः—

तेन तद्भाषितं श्रुत्वा राक्षसेन्द्रो विभीषणः ।

[2]प्रीतिमानभवद्राजन् धर्मात्मा सचिवैस्सह ॥ २०४॥

स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् ।

तच्च कालकृतं धीमान् इत्यमन्यत स प्रभुः ॥ २०५॥

ततो ददौ विचित्राणि कम्बलानि कुथानि च ।

दान्तकाञ्चनपर्यङ्कान् मणिहेमविचित्रितान् ॥ २०६॥

भूषणानि विचित्राणि महार्हाणि बहूनि च ।

प्रवालानि च शुभ्राणि मणींश्च विविधान् बहून् ॥ २०७॥

---

1. ग—अन्यदुक्तं च राजेन्द्र भारतेनैवमादितः ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

2. ग—शासनं प्रतिजग्राह धर्मात्मा सचिवैस्सह ।

काञ्चनानि च भाण्डानि कलशानि घटानि च ।
[1]कटाहान्यपि चित्राणि द्रोण्यश्चैव सहस्रशः ॥ २०८॥
राजतानि च भाण्डानि चित्राणि च बहूनि च ।
शस्त्राणि रुक्मचित्राणि मणिमुक्तैर्विचित्रितान् ॥ २०९॥
यज्ञस्य तोरणे युक्तान् ददौ तालांश्चतुर्दश ॥ २१०
रुक्मपङ्कजपुष्पाणि शिबिका मणिभूषिताः ।
मुकुटानि महार्हाणि हेमवर्णांश्च कुण्डलान् ॥ २११
हेमपुष्पाण्यनेकानि रुक्ममाल्यानि चापरान् ।
शङ्खांश्च चन्द्रसङ्काशान् छतावर्तान् विचित्रिणः ॥ २१२
चन्दनानि च मुख्यानि रुक्मरत्नान्यनेकशः ।
वासांसि च महार्हाणि कम्बलानि बहून्यपि ॥ २१३
अन्यांश्च विविधान् राजन् रत्नानि च बहूनि च ।
स ददौ सहदेवाय तदा राजा विभीषणः ॥ २१४
विभीषणं च राजानम् अभिवाद्य कृताञ्जलिः ।
प्रदक्षिणं परीत्यैव निर्जगाम घटोत्कचः ॥ २१५
तानि सर्वाणि रत्नानि अष्टाशीतिर्निशाचराः ।
आजह्रुस्समुदा राजन् हैडिम्बेन तदा सह ॥ २१६
रत्नान्यादाय सर्वाणि प्रतस्थे स घटोत्कचः ॥ २१६॥

---

1. क-ख-घ-ङ—कोशेषु इदमर्धं नास्ति ।

ततो रत्नान्युपादाय हैडिम्बो राक्षसैस्सह ।
जगाम तूर्णं लङ्कायास् सहदेवपदं प्रति ॥ २१७॥
आसेदुः पाण्डवं सर्वे लङ्घयित्वा महोदधिम् ॥ २१८
सहदेवो ददर्शाथ रत्नाहारान् निशाचरान् ।
आगतान् भीमसङ्काशान् हैडिम्बं च तथा नृप ॥ २१९
द्रमिला नैर्ऋतान दृष्ट्वा दुद्रुवुस्ते भयार्दिताः ॥ २१९॥
भैमसेनिस्ततो गत्वा माद्रेयं प्राञ्जलिस्स्थितः ॥ २२०
प्रीतिमानभवद्दृष्ट्वा रत्नौघं तं च पाण्डवः ।
तं परिष्वज्य पाणिभ्यां दृष्ट्वा तान् प्रीतिमानभूत् ॥ २२१
विसृज्य द्रमिलान् सर्वान् गमनायोपचक्रमे ।
न्यवर्तत ततो धीमान सहदेवो नराधिपः ॥ २२२
एवं विजित्य तरसा सान्त्वेन विजयेन च ।
करदान् पार्थिवान् कृत्वा प्रत्यागच्छदरिन्दमः ॥ २२३
रत्नसारमुपादाय ययौ सह निशाचरैः ।
इन्द्रप्रस्थं विवेशाथ कम्पयन्निव मेदिनीम् ॥ २२४
दृष्ट्वा युधिष्ठिरं राजन् सहदेवः कृताञ्जलिः ।
प्रह्वोऽभिवाद्य तस्थौ स पूजितश्चैव तेन वै ॥ २२५
लङ्काप्राप्तान धनौघांश्च दृष्ट्वा तान् दुर्लभान् बहून् ।
प्रीतिमानभवद्राजा विस्मयं च ययौ तदा ॥ २२६

धर्मराजाय तत् सर्वं निवेद्य भरतर्षभ ।
कोटीसहस्रमधिकं हिरण्यस्य महात्मने ॥ २२७

विचित्रांस्तु मणींश्चैव गोजाविमहिषांस्तथा ॥ २२७॥
[1]कृतकर्मा सुखं राजन्नुवास जनमेजय ॥ २२८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
॥ २३ ॥ दिग्विजयपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये २२८ श्लोकाः]

---

## ॥ अष्टाविंशोऽध्यायः ॥

---

नकुलस्य पश्चिमदिग्विजयः ॥ १ ॥

---

वैशम्पायनः—

नकुलस्य च वक्ष्यामि कर्माणि विजयं तथा ।
वासुदेवजितामाशां यथाऽसावजयत् पुनः ॥ १

निर्याय खाण्डवप्रस्थात् प्रतीचीं दिशमच्युतः ।
उद्दिश्य मतिमान् प्रायान्महत्या सेनया सह ॥ २

सिंहनादेन महता योधानां गर्जितेन च ।
रथनेमिनिनादेन कम्पयन् वसुधामिमाम् ॥ ३

---

1. अ-ख-च—कृतवर्मा

ततो बहु धनं रम्यं गवाश्वबहुधान्यवत् ।
कार्तिकेयस्य दयितं [1]रोहिणीकमुपाद्रवन् ॥ ४

तत्र युद्धं महद्वृत्तं शूरैर्मत्तमयूरकैः ।
मरुभूमिं स कार्त्स्न्येन तथा च बहुधान्यकम् ॥ ५

शैरीषकं च हैमं च वशे चक्रे महाद्युतिः ॥ ५॥
[2]लिलन्धान् वटधानांश्च दूतैरेव जिगाय तान् ॥ ६

शिबींस्त्रिगर्तानम्बष्ठान् मालवान् पञ्च कर्पटान् ।
तथा [3]मध्यनिकायांश्च औपावृतगणानथ ॥ ७

पुनश्च परिवृत्याथ पुष्करारण्यवासिनः ।
गणानुत्सवसङ्केतान् अजयत् पाण्डवर्षभः ॥ ८

सिन्धुकूलाश्रिता ये च ग्रामणीया महाबलाः ।
शूद्राभीरगणाश्चैव ये चाश्रित्य सरस्वतीम् ॥ ९

वर्तयन्ति च ये मत्स्यैर् ये च पर्वतवासिनः ।
कृत्स्नं पञ्चनदं चैव मित्रभोगं तथैव च ॥ १०

तथा सिंहनदं चैव तथैव परपत्तनान् ।

---

1. अ-क—रौहीतक। ग—रौद्रतक
2. क-ग—सिलीन्ध्रान्। ख-घ—एलधान् वटधारांश्च।
अ—लिलिधान् पाटधानांश्च
3. क—मध्यमिकायांश्च औपाव्रतगणानि च।
ख—मध्यनियामांश्च औपाव्रतगणानि च।

दूतैरेव वशे चक्रे नकुलः कुलनन्दनः ॥ ११
उत्तर[1]ज्योपिकं चैव तथा वेण्णाकटं पुरम् ।
द्वारपालं च तरसा वशे चक्रे महाद्युतिः ॥ १२
[2]रामठान् हारहूणांश्च प्रतीच्याश्चैव ये नृपाः ।
तान् सर्वान् स वशे चक्रे नकुलः पाण्डवर्षभः ॥ १३
अरणं चैव रोमं च यवनानां पुराणि च।
लम्बकान् देशकांश्चैव बन्धकांश्च नरोत्तमः ॥ १४
दूतैरेव वशे चक्रे करं चैनानदापयत् ॥ १४॥
ततस्थः प्रेषयामास वासुदेवाय चाभिभूः ।
स चास्य यादवैस्साधं प्रतिजग्राह शासनम् ॥ १५॥
ततश्शाकलमभ्येत्य मद्राणां पुटभेदनम् ।
मातुलं प्रीतिपूर्वेण शल्यं चक्रे वशे वशी ॥ १६॥
तस्मिन् स सत्कृतो राज्ञा सत्कारार्हो विशाम्पते ।
रत्नानि भूरीण्यादाय सम्प्रतस्थे युधां पतिः ॥ १७॥
ततस्सागरकुक्षिस्थान् म्लेच्छान् परमदारुणान् ।
पह्लवान् बर्बरांश्चैव तान् सर्वाननयद्वशम् ॥ १८॥
ततो रत्नान्युपादाय वशे कृत्वा च पार्थिवान् ।

---

1. क—ज्योतिकं चैव तथा वेण्णातटं । ख-घ—बेण्णाटकं पुरम् ।
अ—ज्योतिकं चैव ।
2. क—रमकान् । अ-ख—रमणान्

न्यवर्तत कुरुश्रेष्ठो नकुलश्चित्रमार्गवित् ॥ १९॥

करभाणां सहस्राणि कोशं तस्य महात्मनः ।

ऊहुर्दश महाराज कृच्छ्रादिव महाधनम् ॥ २०॥

इन्द्रप्रस्थगतं वीरम् अभ्यगच्छद् युधिष्ठिरम् ।

हृष्टो माद्रीसुतश्श्रीमान् धनं तस्मै न्यवेदयत् ॥ २१॥

एवं प्रतीचीं नकुलो दिशं वरुणपालिताम् ।

अजयद् वासुदेवेन निर्जितां भरतर्षभ ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ २३ ॥ दिग्विजयपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये २२॥ श्लोकाः]

[समाप्तं च दिग्विजयपर्व]

---

## ॥ एकोनत्रिंशोऽध्यायः ॥

(राजसूयपर्व)

**श्रीकृष्णस्याज्ञया राजसूयोद्योगः ॥ १ ॥**

---

**वैशम्पायनः—**

[1]एवं निर्जित्य पृथिवीं भ्रातरः कुरुनन्दन ।

वर्तमानास्स्वधर्मेण शशासुः पृथिवीमिमाम् ॥ १

---

1. अ—कोश इदं सार्धश्लोकचतुष्टयं नास्ति

चतुर्भिर्भीमसेनाद्यैर् भ्रातृभिस्सहितो नृपः ।
अनुगृह्य प्रजास्सर्वास् सर्ववर्णानगोपयत् ॥ २
अविरोधेन सर्वेषां हितं चक्रे युधिष्ठिरः ॥ २॥
क्रीयतां दीयतां सर्वं मुक्त्वा कोपं बलं विना ।
साधुधर्मेति पार्थस्य नान्यच्छ्रूयत भाषितम् ॥ ३॥
एवंवृत्ते जगत् तस्मिन् पितरीवान्वरज्यत ।
न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता ॥ ४॥
रक्षणाद्धर्मराजस्य सत्यस्य परिपालनात् ।
शत्रूणां क्षपणाच्चैव स्वकर्मनिरताः प्रजाः ॥ ५॥
बलीनां सम्यगादानाद् धर्मतश्चानुशासनात् ।
निकामवर्षी पर्जन्यस् स्फीतो जनपदोऽभवत् ॥ ६॥
सर्वारम्भास्सम्प्रवृत्ता नीरुजो निरुपद्रवाः ।
स्वादुसस्या च पृथिवी बहुपुष्पफला द्रुमाः ॥ ७॥
ब्राह्मणा यज्ञसन्तानाः कृषिगोरक्षणं वणिक् ।
विशेषोत्सवमेवैतत् सञ्जज्ञे राजकर्मणा ॥ ८॥
दस्युभ्यो वञ्चकेभ्यो वा प्रतिरोधात् परस्परम् ।
राजवल्लभतश्चैव श्रूयते न मृषा क्रिया ॥ ९॥
अवर्षं चातिवर्षं च व्याधिपावकमूर्छनम् ।
सर्वमेतत् तदा नासीद् धर्मनित्ये युधिष्ठिरे ॥ १०॥

मनस्तुष्टिं कथं गच्छेद् इत्येवं मनसा नराः ।
सर्वात्मना प्रियाण्येव कर्तुं समुपचक्रमुः ॥ ११॥
धर्म्यैर्धनागमैस्तस्य ववृधे निचयो महान् ॥ १२
कर्तुं [1]यद्धि न शक्येत क्षयं वर्षशतैरपि ।
कोशस्य च परीमाणं गोष्ठस्य च महीपतिः ॥ १३
विज्ञाय राजा कौन्तेयो यज्ञायैव मनो दधे ॥ १३॥
सुहृदश्चैव तं सर्वे पृथक्च सहचाब्रुवन् ।
यज्ञकालस्तव विभो क्रियतामत्र साम्प्रतम् ॥ १४॥
अथैवं ब्रुवतामेव तेषामभ्याययौ हरिः ।
ऋषिः पुराणो वेदात्मा दृश्यश्चात्मनि जानताम् ॥ १५॥
जगतस्तस्थुषां श्रेष्ठः प्रभवश्चाप्ययश्च ह ।
भूतभव्यभवन्नाथः केशवः केशिसूदनः ॥ १६॥
प्रधानस्सर्वलोकानां भोजवृष्ण्यन्धकाग्रणीः ।
सर्वेषामिष्टदो लोके आपत्स्वभयदोऽरिहा ॥ १७॥
बलाधिकारे निक्षिप्य सम्मान्यानकदुन्दुभिम् ॥ १८
उच्चावचमुपादाय धर्मराजाय माधवः ।
धनौघं पुरुषव्याघ्रो बलेन महता वृतः ॥ १९
तं धनौघमपर्यन्तं रत्नसागरमक्षयम् ।

---

1. अ-क—यस्य न शक्येत क्षयो

नादयन् रथघोषेण प्रविवेश पुरोत्तमम् ॥ २०
असूर्यमिव सूर्येण निवातमिव वायुना ।
कृष्णेन समुपेतेन जहृषे भारतं पुरम् ॥ २१
स पृष्ट्वा कुशलं चैव सुखासीनं युधिष्ठिरः ।
धौम्यद्वैपायनमुखैर् ऋत्विग्भिः पुरुषर्षभः ॥ २२
भीमार्जुनयमैश्चापि सहितः कृष्णमब्रवीत् ॥ २२॥

युधिष्ठिरः—

त्वत्कृते पृथिवी सर्वा मद्वशे कृष्ण वर्तते ।
धनं च बहु वार्ष्णेय त्वत्प्रसादादुपार्जितम् ॥ २३॥
सोऽहमिच्छामि तत् सर्वं विधिवद्देवकीसुत ।
उपयोक्तुं द्विजाग्र्येषु हव्यवाहे च माधव ॥ २४॥
तदहं यष्टुमिच्छामि दाशार्ह सहितस्त्वया ।
अनुजैश्च महाबाहो [1]तन्माऽनुज्ञातुमर्हसि ॥ २५॥
स दीक्षापय गोविन्द त्वमात्मानं महाभुज ।
त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहम् ॥ २६॥
मां त्वमप्यनुजानीहि सहैभिरनुजैर्विभो ।
अनुज्ञातस्त्वया कृष्ण प्राप्नुयां क्रतुमुत्तमम् ॥ २७॥

वैशम्पायनः—

तं कृष्णः प्रत्युवाचेदं बहूक्त्वा गुणविस्तरम् ॥ २८

---

1. ख-घ—तमनुज्ञातुमर्हसि

श्रीभगवान्—

त्वमेव राजशार्दूल सम्राडर्हो महाक्रतुम् ।
सम्प्राप्नुहि त्वया प्राप्ते कृतकृत्यास्ततो वयम् ॥ २९
यजस्वाभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते ।
नियुङ्क्ष्व चापि मां कृत्ये सर्वं कर्तास्मि ते वचः ॥ ३०

युधिष्ठिरः—

सफलः कृष्ण सङ्कल्पस् सिद्धिश्च नियता मम ।
यस्य मे त्वं हृषीकेश यथेप्सितमवस्थितः ॥ ३१

वैशम्पायनः—

अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिस्सह ।
[1]ईजितुं राजसूयाय साधनान्युपचक्रमे ॥ ३२
तत आज्ञापयामास पाण्डवोऽरिनिबर्हणः ।
सहदेवं युधां श्रेष्ठं मन्त्रिणश्चैव सर्वशः ॥ ३३

युधिष्ठिरः—

अस्मिन् क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः ।
तथोपकरणं सर्वं मङ्गलानि च सर्वशः ॥ ३४
अथ यज्ञार्थसम्भारान् धौम्योक्तान् क्षिप्रमेव हि ।
समानयन्तु पुरुषा यथायोगं यथाक्रमम् ॥ ३५
इन्द्रसेनो विशोकश्च रुक्मश्चार्जुनसारथिः ।

1. ख-ग-घ—ईहितुं

[1]समीको ध्वजसेनश्च पञ्च सारथिपुङ्गवाः ॥ ३६
अन्नाद्याहरणे युक्तास् सन्तु मत्प्रियकाम्यया ॥ ३६॥
सर्वे भक्ष्याश्च पेयाश्च रसगन्धसमन्विताः ।
मनोहराः प्रीतिकरा द्विजानां कुरुसत्तम ॥ ३७॥

वैशम्पायनः—

तद्वाक्यसमकालं तु सर्वं कृतमवेदयत् ।
सहदेवो युधां श्रेष्ठो धर्मराजे महात्मनि ॥ ३८॥
ततो द्वैपायनो राजन् ऋत्विजस्समुपानयत् ।
वेदानिव महाभागान् साक्षान्मूर्तिमतो द्विजान् ॥ ३९॥
[2]स्वयं ब्रह्मत्वमकरोत् तस्य सत्यवतीसुतः ॥ ४०
मूर्तिमान् सामवेदोऽथ वेदवेदाङ्गपारगः ।
धनञ्जयानामृषभस् सुसामा सामगोऽभवत् ॥ ४१
याज्ञवल्क्यो बभूवास्य ब्रह्मिष्ठोऽध्वर्युसत्तमः ॥ ४१॥
पैलो होता वसोः पुत्रो रैभ्यो ब्राह्मणसत्तमः ॥ ४२
एतेषां शिष्यवर्गाश्च पुत्राश्च भरतर्षभ ।
बभूवुर्ऋत्विजस्सर्वे वेदवेदाङ्गपारगाः ॥ ४३
स्वयं च भगवान् व्यासश् शिष्यैस्सर्वैः पुरस्कृतः ।
कृष्णद्वैपायनो राजन् सादस्यमकरोत् प्रभुः ॥ ४४

1. क—शमीको । अ—समीरो 2. अ—कोश इदमर्धं नास्ति ।

[1]ते प्रीयमाणाः पुण्याहं वाचयित्वा महाव्रताः ।
[2]शास्त्रोक्तं योजयामासुस् तद्देवयजनं महत् ॥ ४५

तत्र चक्रुरनुज्ञाताश् शरणान्यथ शिल्पिनः ।
रत्नवन्ति विशालानि वेश्मानीव दिवौकसाम् ॥ ४६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
॥ २४ ॥ राजसूयपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ४६ श्लोकाः]

---

## ॥ त्रिंशोऽध्यायः ॥

आमन्त्रितानां सर्वेषामागमनम् ॥ १ ॥ तत्तदधिकारेषु तेषां तेषां नियमनम् ॥ २ ॥ राजसूययागानुष्ठानम् ॥ ३ ॥

---

वैशम्पायनः—
तत आज्ञापयामास स राजा राजसत्तमः ।
सहदेवं तदा सद्यो मन्त्रिणं कुरुसत्तम ॥ १

आमन्त्रणार्थं दूतांस्त्वं प्रेषयस्वाशुगान् द्रुतम् ।
उपश्रुत्य वचो राज्ञस् स दूतान् प्राहिणोत् तदा ॥ २

आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान भूमिपानपि ।

---

1. अ-क-ग—ते पूजयित्वा पुण्याहमीरयित्वा
2. क—शास्त्रोक्तं मापयामासुः ।
अ—शास्त्रोक्तं पूजयामास सुदेवयजनं महत् ।

विशश्च मान्याञ्शूद्रांश्च सर्वानानयतेति च ॥ ३
ते सर्वान् पृथिवीपालान् पाण्डवेयस्य शासनात् ।
आमन्त्रयाम्बभूवुस्ते प्रेषयामास चापरान् ॥ ४

दूताश्च वाहनैर्जग्मू राष्ट्राणि सुबहून्यपि ॥ ४॥
ततो युधिष्ठिरो राजा प्रेषयामास पाण्डवम् ।

नकुलं हास्तिनपुरं भीष्माय भरतर्षभ ॥ ५॥
बाह्लिकाय सपुत्राय भूरिश्रवसभीष्मयोः ।

द्रोणाय धृतराष्ट्राय विदुराय कृपाय च ॥ ६॥
भ्रातृणां चैव सर्वेषां येऽनुरक्ता युधिष्ठिरे ॥ ७

ततस्ते तु यथाकालं कुन्तीपुत्रं युधिष्ठिरम् ।
दीक्षयाञ्चक्रिरे विप्रा राजसूयाय भारत ॥ ८

ज्येष्ठे मूले त्वमावास्यां मृगाजिनसमावृतः ।
रौरवाजिनसंवीतो नवनीताक्तदेहवान् ॥ ९

दीक्षितस्स तु धर्मात्मा धर्मराजो युधिष्ठिरः ।
जगाम यज्ञायतनं वृतो विप्रैस्सहस्रशः ॥ १०

भ्रातृभिर्ज्ञातिभिश्चैव सुहृद्भिस्साचिवैस्तथा ।
क्षत्रियैश्च मनुष्यैश्च नानादेशसमागतैः ॥ ११
अमात्यैश्च नृपश्रेष्ठो धर्मो विग्रहवानिव ॥ ११॥

आजग्मुर्ब्राह्मणास्तत्र विषयेभ्यस्ततस्ततः ।
सर्वविद्यासु निष्णाता वेदवेदाङ्गपारगाः ॥ १२॥
तेषामावसथांश्चक्रुर् धर्मराजस्य शासनात् ।
बह्वन्नाच्छादनैर्युक्तान् सगणानां पृथक् पृथक् ॥ १३॥
सर्वर्तुगुणसम्पन्नान् शिल्पिनोऽथ सहस्रशः ॥ १४
तेषु ते न्यवसन् राजन् ब्राह्मणा भृशसत्कृताः ।
कथयन्तः कथा बह्वीः पश्यन्तो नटनर्तकान् ॥ १५
भुञ्जतां चाथ विप्राणां ददतां च महात्मनाम् ।
अनिशं श्रूयते चात्र मुदितानां महास्वनः ॥ १६
दीयतां दीयतामेषां भुज्यतां भुज्यतामिति ।
एवंप्रकारास्सञ्जल्पाश् श्रूयन्ते स्मात्र नित्यशः ॥ १७
गवायुतसहस्राणि शयनानां शतानि च ।
रुक्मस्य योषितां चैव धर्मराजः पृथग् ददौ ॥ १८
प्रावर्ततैवं यज्ञस्स पाण्डवस्य महात्मनः ।
पृथिव्यामेकवीरस्य शक्रस्येव त्रिविष्टपे* ॥ १९
तत आमन्त्रिता राजन् राजानस्सत्कृतास्तदा ।
पुरेभ्यः प्रययुस्स्वेभ्यो विमानेभ्य इवामराः ॥ २०
ते वै दिग्भ्यस्समापेतुः पार्थिवास्तत्र भारत ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥

समादाय महार्हाणि रत्नानि विविधानि च ॥ २१

तच्छ्रुत्वा धर्मराजस्य यज्ञं यज्ञविदस्तदा ।
राजानश्शतशस्तुष्टैर् मनोभिर्मनुजर्षभ ॥ २२

बहु वित्तं समादाय विविधाः पार्थिवा ययुः ।
द्रष्टुकामास्सभां चैव धर्मराजं च पाण्डवम् ॥ २३

नकुलो हास्तिनपुरं गत्वा परपुरञ्जयः ।
प्रयतः प्राञ्जलिर्भूत्वा भारतानानयत् तदा ॥ २४

भीष्मश्च धृतराष्ट्रश्च विदुरश्च महामतिः ।
दुर्योधनपुरोगाश्च भ्रातरस्सर्वे एव ते ॥ २५

सत्कृत्यामन्त्रितास्सर्वे कृपद्रोणमुखा नृपाः ।
प्रययुः प्रीतमनसो यज्ञं ब्रह्मपुरस्सराः ॥ २६

गान्धारराजश्शकुनिस् सुबलश्च महाबलः ।
अचलो वृषकश्चैव कर्णश्च ददतां वरः ॥ २७

ऋतश्शल्यो मद्रराजो बाह्लिकश्च महारथः ।
सोमदत्तोऽथ कौरव्यो भूरिर्भूरिश्रवाश्शलः ॥ २८

अश्वत्थामा कृपो द्रोणस् सैन्धवश्च जयद्रथः ।
यज्ञसेनस्सपुत्रश्च साल्वश्च वसुधाधिपः ॥ २९

प्राग्ज्योतिषश्च नृपतिर् भगदत्तो महायशाः ॥ २९॥

सह सर्वैस्तथा म्लेच्छैस् सागरानूपवासिभिः ।
पार्वतीयाश्च राजानो राजा चैव बृहद्बलः ॥ ३०॥

पौण्ड्रको वासुदेवश्च वङ्गः कालिङ्गकस्तथा ।
आकर्षाः कुन्तलाश्चैव [1]वानवास्यो वृकस्तथा ॥ ३१॥

द्रामिलास्सिंहलाः पाण्ड्या राजा काश्मीरकस्तथा ॥ ३२

कुन्तिभोजो महातेजास् [2]सुभ्रूश्च सुमहाबलः ।
बाह्लिकाश्चापरे शूरा राजानस्सर्वे एव ते ॥ ३३

विराटस्सह पुत्राभ्यां पाञ्चालाश्च महारथाः ।
राजानो राजपुत्राश्च नानाजनपदेश्वराः ॥ ३४

शिशुपालो महावीर्यस् सह पुत्रेण भारत ।
आगच्छत् पाण्डवेयस्य यज्ञं सङ्ग्राम[3]दुर्जयः ॥ ३५

रामश्चैवानिरुद्धश्च बभ्रुश्च सहसारणः ।
गदप्रद्युम्नसाम्बाश्च चारुदेष्णश्च वीर्यवान् ॥ ३६

उन्मुखो विपृथुश्चैव वीरः प्राद्युम्निरेव च ।
वृष्णयो निखिलाश्चान्ये समागच्छन् महारथाः ॥ ३७

एते चान्ये च बहवो राजानो मध्यदेशजाः ।
आजग्मुः पाण्डुपुत्रस्य राजसूयं महाक्रतुम् ॥ ३८

---

1. अ—पावनान्यो नृपस्तथा । ग—पानपाश्योऽन्धकस्तथा
2. सुष्मश्च । क—सुह्मश्च । ग—सुबाहुश्च
3. अ-क—दुर्मदः

ददुस्तेषामावसथान् धर्मराजस्य शासनात् ।
बहुकक्षान्वितान् राजन् दीर्घिकावृक्षशोभितान् ॥ ३९
तथा धर्मात्मजस्तेषां चक्रे पूजामनुत्तमाम् ।
सत्कृताश्च महीपालास् सुखमूषुर्नराधिपाः ॥ ४०
कैलासशिखरप्रख्यैर् नभस्स्थलविलेखिभिः ।
सर्वतस्संवृतैर्नद्धैः प्राकारैस्सुकृतैस्सितैः ॥ ४१
सुवर्णजालविततैर् मणिकुट्टिमभूषितैः ।
सुखारोहणसोपानैर् महा[1]सनपरिग्रहैः ॥ ४२
स्रग्दामभिरवच्छन्नैर् अगरूत्तमधूपितैः ।
हंसवर्णैस्सुबहुभिर् आयोजनसुगन्धिभिः ॥ ४३
असम्बाधसुखद्वारैश् शयनासनशोभितैः ।
बहुधातुपिनद्धाङ्गैर् हिमवच्छिखरैरिव ॥ ४४
[2]विश्रान्तैस्तैस्ततस्सर्वैर् भूमिपैर्भूरिदक्षिणैः ।
वृतं सहस्रैर्बहुभिर् धर्मराजो युधिष्ठिरः ॥ ४५
तत् सदः पार्थिवैः कीर्णं ब्राह्मणैश्च महात्मभिः ।
भ्राजते स्म महाराज नाकपृष्ठमिवामरैः* ॥ ४६

1. अ—महानसपरिच्छदैः । क—धनपरिच्छदैः ।
ख-घ—सनपरिच्छदैः
2. अ—विश्रुतास्ते ततस्सर्वे भूमिपा भूरिदक्षिणाः ।
क—विश्रान्तास्ते ततस्सर्वे भूमिपा भूरिदक्षिणाः ॥
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

ततस्त्वाज्ञापयामास पाण्डवोऽरिनिबर्हणः ।
सहदेवं कुरुश्रेष्ठं मन्त्रिणश्चैव सर्वशः ॥ ४७

अस्मिन् क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः ।
[1]अभिसंज्ञाय सम्भारान् धौम्योक्तान् पुरुषर्षभ ॥ ४८
सर्वमानय नः क्षिप्रं सहदेव यथातथम् ॥ ४८॥

इन्द्रसेनो विशोकश्च रुक्मश्चार्जुनसारथिः ।
अन्नाद्ये व्यापृतास्सन्तु सहदेव तवाज्ञया ॥ ४९॥

उपार्जितान् सर्वकामान् सुगन्धरसमिश्रितान् ।
मनोहरान् प्रीतिकरान् अन्नाद्येऽर्थे सुसंस्कृतान् ॥ ५०॥

हव्यकव्यानि देवानाम् अन्यानसुररक्षसाम् ।
अवलोकय कृष्णाद्य एतत् सर्वं तवानघ ॥ ५१॥
तिष्ठेत् कृष्णान्तिके सोयम् अर्जुनः कार्यसिद्धये ॥ ५२

पितामहं गुरुं चाथ प्रत्युद्गम्य युधिष्ठिरः ।
अभिवाद्योपसङ्गृह्य वाक्यमेतदुवाच ह ॥ ५३

भीष्मो द्रौणिः कृपो द्रोणो दुर्योधनविविंशती ।
अस्मिन यज्ञे भवन्तो माम् अनुगृह्णन्तु सर्वशः ॥ ५४

इदं वसुगृहं चैव यदिहास्ति धनं मम ।

1. ख-घ—अभियज्ञांश्च । क—अथ याज्ञांश्च

प्रीणयन्तु भवन्तो मां यथेष्टमनियन्त्रिताः ॥ ५५

एवमुक्त्वा स तान् राजा दीक्षितः पाण्डवाग्रजः ।
न्ययोजयद्यथायोगम् अधिकारेष्वनन्तरम् ॥ ५६

भक्ष्यभोज्याधिकारेषु युयुत्सुं समयोजयत् ॥ ५६॥

पङ्क्त्यारोपणकर्मान्त उच्छिष्टापनये पुनः ।
सात्यकिं भीमसेनं च महानसविचारणे ॥ ५७॥

भोजनावेक्षणे चैव दुश्शासनमयोजयन् ॥ ५८

प्रतिग्रहे ब्राह्मणानाम् अश्वत्थामानमुक्तवान् ।
राज्ञां तु प्रतिपूजार्थं सञ्जयं स न्ययोजयन् ॥ ५९

कृताकृतपरिज्ञाने भीष्मद्रोणौ महामती ॥ ५९॥

हिरण्यस्य सुवर्णस्य रत्नानां चान्ववेक्षणे ।
दक्षिणानां च वै दाने कृपं राजा न्ययोजयत् ॥ ६०॥

तथाऽन्यान् पुरुषव्याघ्रांम् तस्मिंस्तस्मिन् न्ययोजयत् ॥ ६१

[1]बाह्लीको धृतराष्ट्रश्च सोमदत्तो जयद्रथः ।
नकुलेन समाहूतास् स्वामिवन् तत्र मेनिरे ॥ ६२

---

1 ग—सात्यकिं भीमसेनं च महादानाय योजयत् ।

[अधिकः पाठः]

क्षत्ता सूक्ष्ममव्ययं चक्रे घृतादि[1] मधुरादिकम् ।
दुर्योधनस्त्वर्हणानि प्रतिजग्राह सर्वशः ॥ ६३

कुन्ती साध्वी च गान्धारी स्त्रीणां कुर्वन्तु चार्चनं ।
अन्यास्सर्वास्स्नुषास्तासां सन्देशं यान्तु मा चिरम् ॥ ६४

सर्वलोकाः परावृत्ताः प्रहृष्टास्तत्र भारत ।
द्रष्टुकामास्सभां चैव धर्मराजं च पाण्डवम् ॥ ६५

न कश्चिदवहत् तत्र सहस्रावरमर्हणम् ।
रत्नैश्च बहुभिस्तत्र धर्मराजमवर्धयन् ॥ ६६

कथं तु मम कौरव्यो रत्नदानैस्समाप्नुयात् ।
यज्ञमित्येव राजानस् स्पर्धमाना ददुर्धनम् ॥ ६७

भवनैस्सविमानाग्र्यैस् सोदकैर्बहुसंघृतैः ।
लोक्यै राजविमानैश्च ब्राह्मणावसथैस्सह ॥ ६८

कृतैरावसथैर्दिव्यैर् विमानप्रतिमैस्तथा ।
विचित्रै रत्नवद्भिश्च ऋद्ध्या परमया युतैः ॥ ६९

राजभिश्च समावृत्तैर् अतीव श्रीसमृद्धिभिः ।
अशोभत तदा राजन् कौन्तेयस्य महाध्वरः ॥ ७०

ऋद्ध्या च वरुणं देवं स्पर्धमानो युधिष्ठिरः ।

---

1. अ-क-ग—मरिचादिकम्

षडग्निनाऽथ यज्ञेन सोऽयजद्दक्षिणावता ॥ ७१
सर्वाञ्जनान् सर्वकामैस् समृद्धैस्समतर्पयत् ॥ ७१॥

अन्नवान् बहुभक्ष्यश्च भुक्तवज्जनसंवृतः ।
[1]रत्नोपहारकर्मण्यो बभूव स महानृपः ॥ ७२॥

इध्माज्यसोमाहुतिभिर् [2]मन्त्राक्षरसमन्वितैः ।
तस्मिन् वै ततृपुर्देवास् तते यज्ञे महर्षिभिः ॥ ७३॥

यथा देवास्तथा विप्रा दक्षिणाभिर्महाधनैः ।
ततृपुस्सर्ववर्णाश्च तस्मिन् यज्ञे मुदाऽन्विताः ॥ ७४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

॥ २४ ॥ राजसूयपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ७४॥ श्लोकाः]

[समाप्तं च राजसूयपर्व]

---

1. अ—अन्नोपहारकर्मण्यो बभूव स समागमः ।
ग—अन्नोपहारसम्पन्नो बभूव
2. अ-क-ख-घ—मन्त्रशिक्षा

## ॥ एकत्रिंशोऽध्यायः ॥

(अथार्घाभिहरणपर्व)

अभिषेचनदिने ब्राह्मणादीनामन्तर्वेदिप्रवेशः ॥ १ ॥ भूभारक्षपणे नारदचिन्तनम् ॥ २ ॥ पूर्वं संक्षिप्योक्तायाः कृष्णागमनकथायाः किञ्चिद्विस्तरेण कथनम् ॥ ३ ॥ सहदेवेन भीष्माज्ञया श्रीकृष्णस्याग्रपूजाकरणम् ॥ ४ ॥ शिशुपालेन श्रीकृष्णस्याग्रपूजाया असहनम् ॥ ५ ॥

---

वैशम्पायनः—

ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिस्सह ।
अन्तर्वेदिं प्रविविशुस् सदस्यार्थं महर्षयः ॥ १

नारदप्रमुखास्तस्याम् अन्तर्वेद्यां महात्मनः ।
समासीनाश्शुशुभिरे तत्र वै राजभिस्सह ॥ २

समेता ब्रह्मभवने देवैर्देवर्षयो यथा ॥ २॥
कर्मान्तरमुपासन्तो जजल्पुरमितौजसः ॥ ३

एवमेतन्न चाप्येवम् एवं चैतन्न चान्यथा ।
इत्यूचुर्बहवस्तत्र वितण्डानाः परस्परम् ॥ ४

कृशानर्थांस्ततः केचिद् अकृशांस्तत्र कुर्वते ।
अकृशांश्च कृशांश्चक्रुर् हेतुभिश्शास्त्रनिश्चितैः ॥ ५

तत्र मेधाविनः केचिद् अर्थमन्यैः प्रपूजितम् ।
विचिक्षिपुर्यथा श्येना नभोगतमिवामिषम् ॥ ६

केचिद्धर्मार्थसंयुक्ताः कथास्तत्र महाव्रताः ।
रेमिरे कथयन्तश्च सर्ववेदविदां वराः ॥ ७

सा वेदिर्वेदसम्पन्नैर् महर्षिद्विजपार्थिवैः ।
आबभासे समाकीर्णा नक्षत्रैर्द्यौरिवामला ॥ ८

न तस्यां सन्निधौ शूद्रः कश्चिदासीन्न चाव्रतः ।
अन्तर्वेद्यां महाराज युधिष्ठिरनिवेशने ॥ ९

तां तु लक्ष्मीवतो लक्ष्मीं तथा यज्ञविधानजाम् ।
तुतोष नारदः पश्यन् धर्मराजस्य धीमतः ॥ १०

अथ चिन्तां समापेदे स मुनिर्मनुजाधिप ।
नारदस्तु तदा पश्यन् सर्वक्षत्रसमागमम् ॥ ११

सस्मार च पुरावृत्तां कथां तां पुरुषर्षभ ।
अंशावतरणे योऽसौ ब्रह्मणो भवनेऽभवत् ॥ १२

देवानां सङ्गमं तं तु विज्ञाय कुरुनन्दन ।
नारदः पुण्डरीकाक्षं जगाम मनसा हरिम् ॥ १३

साक्षात् स विबुधारिघ्नः क्षितौ नारायणो विभुः ।
प्रतिज्ञां पालयन् धीमाञ् जातः परपुरञ्जयः ॥ १४

सन्दिदेश पुरा योऽसौ विबुधान् भूतकृत् स्वयम् ।
अन्योन्यमभिनिघ्नन्तः पुनर्लोकानवाप्स्यथ ॥ १५

इति नारायणश्शम्भुर् भगवाञ्जगतः प्रभुः ।

आदिश्य विबुधान् सर्वान् अजायत यदोः कुले ॥ १६

क्षितावन्धकवृष्णीनां वंशे वंशभृतां वरः ।
परया शुशुभे लक्ष्म्या नक्षत्राणामिवोडुराट् ॥ १७

यस्य बाहुबलं सर्वे सुरास्सेन्द्रा उपासते ।
सोऽयं मानुषरूपेण हरिरास्ते जनार्दनः ॥ १८

अहो बत महद्भूतं स्वयंभूर्यदिदं स्वयम् ।
आदास्यति पुनः क्षत्रम् एवं बलसमन्वितम् ॥ १९

इत्येतां नारदश्चिन्तां चिन्तयामास धर्मवित् ।
हरिं नारायणं ज्ञात्वा यज्ञैरिज्यं तमीश्वरम् ॥ २०

तस्मिन् धर्मविदां श्रेष्ठो धर्मराजस्य धीमतः ।
महाध्वरे महाबाहुस् तस्थौ स बहुमानवान्* ॥ २१

ततस्समुदिता मुख्यैर् गुणैर्गुणवतां वराः ।
बहवो भावितात्मानः पृथक् पृथगरिन्दमाः ॥ २२

आत्मकृत्यमिति ज्ञात्वा पाञ्चालास्तत्र सर्वशः ।
समीयुर्वृष्णयश्चैव तदाऽनीकाग्रहारिणः ॥ २३

सदारास्सजनामात्या वहन्तो रत्नसञ्चयान् ।
विकृष्टत्वाच्च देशस्य गुरुभारतया च ते ॥ २४

ययुः प्रमुदिताः पश्चाद् राजभिर्न समं ययुः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

बलशेषं समुदितं परिगृह्य समन्ततः ॥ २५
राज्ञां चक्रायुधश्शौरिर् अमित्रगणमर्दनः ।
बलाधिकारे निक्षिप्तं सम्मान्यानकदुन्दुभिम् ॥ २६
सम्प्रायाद्यादवश्रेष्ठो यजमाने युधिष्ठिरे ॥ २६॥
उच्चावचमुपादाय धर्मराजाय माधवः ।
धनौघं पुरतः कृत्वा खाण्डवप्रस्थमाययौ ॥ २७॥
तत्र यज्ञागतान् सर्वाश् चैद्यवक्रपुरोगमान् ।
भूमिपालगणान् सर्वान् सप्रभानिव तोयदान् ॥ २८॥
मेघकायान्निश्श्वसतो यूथपानिव यूथपः ।
बलिनस्सिंहसङ्काशान् महीमावृत्य तिष्ठतः ॥ २९॥
ततो जनौघसम्बाधं राजसागरमव्ययम् ।
नादयन् रथघोषेणाभ्युपायान्मधुसूदनः ॥ ३०॥
असूर्यमिव सूर्येण निवातमिव वायुना ।
कृष्णेन समुपेतेन जहर्षे भारतं पुरम् ॥ ३१॥
ब्राह्मणक्षत्रियाणां हि पूजार्थं [1]सर्वधर्मवित् ।
सहदेवो विशेषज्ञो माद्रीपुत्रः कृतोऽभवत् ॥ ३२॥
प्रभवन्तं तु भूतानां भास्वन्तमिव तेजसा ।
प्रविशन्तं यज्ञभूमिं [2]सितस्यावरजं विभुम् ॥ ३३॥

---

1. अ—ह्यथ । क—ह्यर्थं　　2 ब—बलस्यावरजं । ख—सुतस्यावरजं

तेजोराशिमृषिं [1]विप्रम् अदृश्यं वै विजानताम् ।
वयोऽधिकानां वृद्धानां मार्गमात्मनि तिष्ठताम् ॥ ३४॥

जगतस्तस्थुषश्चैव प्रभवाप्ययमच्युतम् ।
अनन्तमन्तं शत्रूणाम् अमित्रगणमर्दनम् ॥ ३५॥

प्रभवं सर्वभूतानाम् आपत्स्वभयमच्युतम् ।
भविष्यं भावनं भूतं द्वारवत्यामरिन्दमम् ॥ ३६॥

स दृष्ट्वा कृष्णमायान्तं प्रतिपूज्यामितौजसम् ।
यथार्हं केशवे वृत्तिं प्रत्यपद्यत पाण्डवः ॥ ३७॥

ज्यैष्ठ्यकानिष्ठ्यसंयोगं सम्प्रधार्य गुणागुणैः ।
आरिराधयिषुर्धर्मैः पूजयित्वा द्विजोत्तमान् ॥ ३८॥

महदादित्यसङ्काशम् आसनं च जगत्पतेः ।
ददौ नासादितं कैश्चित् तस्मिन्नुपविवेश सः ॥ ३९॥

ततो भीष्मोऽब्रवीद्राजन् धर्मराजं युधिष्ठिरम् ।
क्रियतामर्हणं राज्ञां यथार्हमिति भारत ॥ ४०॥

आचार्यमृत्विजं चैव संयुजं तु युधिष्ठिर ।
स्नातकं च प्रियं चाहुष् षडर्घार्हान् नृपं तथा ॥ ४१॥
एतानर्हानधिगतान् आहुस्संवत्सरोषितान् ॥ ४२

त इमे कालपूगस्य महतोऽस्मानुपागताः ।

---

1. अ-ख-घ—दृश्यमदृश्यमविजानताम् । ग—विप्रमदृश्यमविजानताम्

एषामेकैकशो राजन्नर्घ्यमानीयतामिति ॥ ४३
अथ चैषां वरिष्ठो यस् तस्यार्घ्यमुपकल्प्यताम् ॥ ४३॥

युधिष्ठिरः—

कस्मै भवान् मन्यतेऽर्घ्यम् एकस्मै कुरुनन्दन ।
आनीयमाने युक्तं च तन्मे ब्रूहि पितामह ॥ ४४॥

वैशम्पायनः—

ततो भीष्मश्शान्तनवो बुद्ध्या निश्चित्य भारत ।
वार्ष्णेयं मन्यते कृष्णम् अर्हणीयमरिन्दमः ॥ ४५॥

भीष्मः—

एष ह्येषां समेतानां तेजोबलपराक्रमैः ।
मध्ये तपन्निवाभाति ज्योतिषां रविरंशुमान् ॥ ४६॥

असूर्यमिव सूर्येण निवातमिव वायुना ।
भासितं ह्लादितं चैव कृष्णेनेदं सदो हि नः ॥ ४७॥

वैशम्पायनः—

तस्मै भीष्माभ्यनुज्ञातस् सहदेवः प्रतापवान् ।
उपजह्रे च विधिवद् वार्ष्णेयायार्घ्यमुत्तमम् ॥ ४८॥

गामर्घ्यं मधुपर्कं च ह्यानीयोपाहरत् तदा ।
चरणावस्पृशच्छौरेस् सहदेवो विशाम्पते ॥ ४९॥

केशवश्चाप्युपाघ्राय मूर्ध्नि शस्त्रभृतां वरः ।
सहदेवमथोवाच कच्चिद्वः कुशलं गृहे ॥ ५०॥

सोऽपि तं तु तथेत्याह सर्वं ननु तवाज्ञया ॥ ५१
एतस्मिन्नन्तरे राजन् इदमासीदथाद्भुतम् ॥ ५१॥
तां दृष्ट्वा क्षत्रियास्सर्वे पूजां कृष्णस्य भूयसीम् ।
सम्प्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन् ॥ ५२॥
प्रतिजग्राह तां कृष्णश् शास्त्रदृष्टेन कर्मणा ॥ ५३
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥ ५३॥
उपालभ्य स भीष्मं च धर्मराजं च संसदि ।
अवाक्षिपद्वासुदेवं चेदिराजो महाबलः ॥ ५४॥
तेषामाकारभावज्ञस् सहदेवो न चक्षमे ॥ ५५
[1]मानिनां बलिनां राज्ञां पुरस्सन्दर्शिते पदे ।
पुष्पवृष्टिर्महत्यासीत् सहदेवस्य मूर्धनि ॥ ५६
जन्मप्रभृति वृष्णीनां सुनीथश्शत्रुरब्रवीत् ॥ ५६॥

सुनीथः—
प्रष्टा वियोनिजो राजा प्रतिवक्ता नदीसुतः ।
प्रतिग्रहीता गोपालः प्रदाता च वियोनिजः ॥ ५७॥
सदस्या मूकवत् सर्वे आसतेऽत्र किमुच्यते ॥ ५८

वैशम्पायनः—
इत्युक्त्वा स विहस्याशु पाण्डवं पुनरब्रवीत् ॥ ५८॥

शिशुपालः—
अति पश्यसि वा सर्वान् न वा पश्यसि पाण्डव ।

1. क-ग-ङ—कोशेषु अर्धद्वयं नास्ति ।

तिष्ठत्स्वन्येषु पूज्येषु गोपमर्चितवानसि ॥ ५९॥

एते चैवोभये तात कार्यस्य तु विनाशके ।
अतिदृष्टिरदृष्टिर्वा तयोः किं त्वं समास्थितः ॥ ६०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ २५ ॥ अर्घाभिहरणपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ६०॥ श्लोकाः]

---

## ॥ द्वात्रिंशोऽध्यायः ॥

शिशुपालेन श्रीकृष्णनिन्दा ॥ १ ॥ सदसो निर्गमनं च ॥ २ ॥

---

शिशुपालः—

नायमर्हति गोविन्दस् तिष्ठत्स्विह महात्मसु ।
महीपतिषु कौरव्य अराजा पार्थिवार्हणम् ॥ १

नायं युक्तस्समाचारः पाण्डवेषु महात्मसु ।
यत् कामाद्देवकीपुत्रं पाण्डवार्चितुमर्हसि ॥ २

बाला यूयं न जानीध्वं धर्मं सूक्ष्मं हि पाण्डवाः ।
अयमत्राभ्यतिक्रान्त आपगेयोऽल्पदर्शनः ॥ ३

त्वादृशो धर्मयुक्ते हि कुर्वाणः प्रियकाम्यया ।

भवत्यभ्यधिकं भीष्मो लोकेष्ववमतस्सताम् ॥ ४

कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम् ।
अर्हणामर्हति तथा यथा युष्माभिरर्चितः ॥ ५

अथवा मन्यसे कृष्णं स्थविरं भरतर्षभ ।
वसुदेवे स्थिते वृद्धे कथमर्हति तत् सुतः ॥ ६

[1]अथवा वासुदेवोऽयं प्रियकामोऽनुवृत्तवान् ।
द्रुपदे तिष्ठति कथं माधवोऽर्हति पूजनम् ॥ ७

आचार्यं मन्यसे कृष्णम् अथवा कुरुपुङ्गव ।
द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि ॥ ८

ऋत्विजं मन्यसे कृष्णम् अथवा कुरुपुङ्गव ।
द्वैपायने स्थिते विप्रे कथं कृष्णोऽर्चितस्त्वया ॥ ९

भीष्मे शान्तनवे राजन् स्थिते पुरुषसत्तमे ।
स्वच्छन्दमृत्युके तस्मिन् कथं कृष्णोऽर्चितस्त्वया ॥ १०

कृपे च भरताचार्ये कथं कृष्णोऽर्चितस्त्वया ॥ १०॥

अश्वत्थाम्नि स्थिते वीरे सर्वशास्त्रविशारदे ।
कथं कृष्णस्त्वया राजन्नर्चितो यदुनन्दनः ॥ ११॥

द्रुमे किम्पुरुषाचार्ये कथं कृष्णस्त्वयाऽर्चितः ॥ १२

1. अ—अथवा वसुदेवोपि यथा पुत्रे सुवृत्तवान् ।
क—वासुदेवोऽपि यथा पुत्रोऽनु

अयं पार्थादनवमो धनुर्वेदे पराक्रमे ।
एकलव्ये स्थिते राजन् कथं कृष्णस्त्वयाऽर्चितः ॥ १३

भगदत्ते महावीर्ये जयत्सेने च मागधे ।
कालिङ्गे च स्थिते राजन् कथं कृष्णस्त्वयाऽर्चितः ॥ १४

पूर्वदेशाधिपे वीरे कौसलेन्द्रे बृहद्बले ।
विराटे च स्थिते वीरे कथं कृष्णोऽर्चितस्त्वया ॥ १५

[1]भीष्मके च दुराधर्षे पाण्ड्ये च कृतधन्वनि ।
नृपे च रुक्मिणि श्रेष्ठे दन्तवक्रे च पार्थिवे ॥ १६
शल्ये मद्राधिपे चैव कथं कृष्णस्त्वयाऽर्चितः ॥ १६॥

[2]सुराष्ट्राधिपतौ वीरे मालवे च स्थिते नृपे ।
कृतक्षणे च वैदेहे कथं कृष्णस्त्वयाऽर्चितः ॥ १७॥

अयं च सर्वराज्ञां यो बलश्लाघी महारथः ।
जामदग्न्यस्य दयितश् शिष्यो विप्रस्य भारत ॥ १८॥

येनात्मबलमाश्रित्य जरासन्धो युधा जितः ।
तं कर्णं समतिक्रम्य कथं कृष्णस्त्वयाऽर्चितः ॥ १९॥

विन्दानुविन्दावावन्त्यौ काम्भोजं च सुदक्षिणम् ।
स्थिते साल्वे च राजेन्द्रे कथं कृष्णोऽर्चितस्त्वया ॥ २०॥

---

1. क—दरदे च महावीरे कथं कृष्णोऽर्चितस्त्वया । [अधिकः पाठः]
2. अ—कोशे अर्धद्वयं नास्ति

अस्मिन् पार्थसखे राजन् गन्धर्वाणां महीपतौ ।
स्थिते चित्ररथे वीरे कथं कृष्णस्त्वयाऽर्चितः ॥ २१॥
बाह्लीकं स्थविरं वीरं कौरवाणां महारथम् ।
सौमदत्तिं महावीर्यं सोमदत्तं महारथम् ॥ २२॥
शकुनिं सौबलं चैव सिन्धुराजं महाबलम् ।
एतानवमतान् कृत्वा कथं कृष्णोऽर्चितस्त्वया ॥ २३॥
न हि चर्त्विङ् न चाचार्यो न राजा मधुसूदनः ।
न स्नातको न जामाता कथं कृष्णोऽर्चितस्त्वया ॥ २४॥
अर्चितश्च कुरुश्रेष्ठ किमन्यत् प्रियकाम्यया ॥ २५
अथवाऽप्यर्चनीयोऽयं युष्माभिर्वृष्णिपुङ्गवः ।
किं राजभिरिहानीतैर् अवमानाय भारत ॥ २६
वयं तु न भयादस्य कौन्तेयस्य महात्मनः ।
प्रयच्छाम करान् सर्वे न लोभान्न च सान्त्वनात् ॥ २७
अस्य धर्मप्रधानस्य पार्थिवत्वं चिकीर्षतः ।
करानस्मै प्रयच्छाम सोऽयमस्मान् न मन्यते ॥ २८
किमन्यदवमानाद्धि यदीत्थं राजसंसदि ।
अप्राप्तलक्षणं कृष्णम् अर्घ्येणार्चितवानसि ॥ २९
अकस्माद्धर्मपुत्रस्य धर्मात्मेति यशो गतम् ।
को हि धर्मच्युते पूजाम् एवं युक्तां प्रयोजयेत् ॥ ३०

योऽयं वृष्णिकुले जातो राजानं हतवान् पुरा ।
जरासन्धं महात्मानम् अन्यायेन दुरात्मवान् ॥ ३१

अद्य धर्मात्मता चैव व्यपकृष्टा युधिष्ठिरात् ।
कृपणत्वं निविष्टं च कृष्णेऽर्घ्यस्य निवेदनात् ॥ ३२

यदि भीताश्च कौन्तेयाः कृपणाश्च तपस्विनः ।
राज्ञां तु मध्ये पूजां [1]ते कृतवन्तो गरीयसीम् ॥ ३३
ननु त्वयाऽपि बोद्धव्यं यां पूजां माधवार्हसि ॥ ३३॥

अथवा कृपणैरेताम् उपनीतां जनार्दन ।
पूजामनर्हः कस्मात् त्वं अभ्यनुज्ञातवानसि ॥ ३४॥

अयुक्तामात्मनः पूजां त्वं कस्माद्बहुमन्यसे ।
हविषः प्राप्य निष्यन्दं प्राशितुं श्वेव निर्जने ॥ ३५॥

न [2]त्वयं पार्थिवेन्द्राणाम् अवमानः प्रयुज्यते ।
त्वामेव कुरवो व्यक्तं प्रहसन्ते जनार्दन ॥ ३६॥

क्लीबे दारक्रिया यादृग् अन्धे वा रूपदर्शनम् ।
अराज्ञो राजवत् पूजा तथा ते मधुसूदन ॥ ३७॥

दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः ।
वासुदेवोऽप्ययं दृष्टस् सर्वमेतद्यथातथम् ॥ ३८॥

---

1. अ-क—त्वं कृतवन्तो हि भूयसीम् ।
2. अ-ख-घ—न्वयं

वैशम्पायनः—

इत्युक्त्वा शिशुपालस्तान् उत्थाय परमासनात् ।
निर्ययौ सदसस्तस्मात् सहितो राजभिस्तदा ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ २५ ॥ अर्घाभिहरणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

[अस्मिन्नध्याये ३९॥ श्लोकाः ]

## ॥ त्रयस्त्रिंशोऽध्यायः ॥

शिशुपालं सान्त्वयन्तं युधिष्ठिरं निवार्य भीष्मेण श्रीकृष्णमाहात्म्यकथनम् ॥ १ ॥ श्रीकृष्णस्याग्रपूजामसहमानानां शिरसि पदमाहितमिति सहदेववचनकथनम् ॥ २ ॥

वैशम्पायनः—

ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत् ।
उवाच चैनं मधुरं सान्त्वपूर्वमिदं वचः ॥ १

युधिष्ठिरः—

नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान् ॥ १॥
अधर्मश्च परो राजन् [1]पारुष्यं तु निरर्थकम् ॥ २

न हि धर्मं परं जातु नावबुद्ध्येत पार्थिवः ।
भीष्मं शान्तनवं त्वेनं मा वमंसीरतोऽन्यथा ॥ ३

1. अ—परुषं च निरर्थकम्। क—परुषश्च निरर्थकः।
ख—परुषं तु निरर्थकम्। ग-घ—पौरुषं च निरर्थकम्।

पश्य चैतान् महीपालांस् त्वत्तो वृद्धतमान् बहून् ।
मृष्यन्ते चार्हणां कृष्णे तद्वत् त्वं क्षन्तुमर्हसि ॥ ४

वेद तत्त्वेन कृष्णं हि भीष्मश्चेदिपते भृशम् ।
न ह्येनं त्वं तथा वेत्थ यथैनं वेद कौरवः ॥ ५

भीष्मः—

न चास्यानुनयो देयो नायमर्हति सान्त्वनाम् ।
लोकवृद्धतमे कृष्णे योऽर्हणां नानुमन्यते ॥ ६

क्षत्रियः क्षत्रियाञ्जित्वा रणे रणकृतां वरः ।
यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ॥ ७

अस्यां च समितौ राज्ञाम् एकमप्यजितं युधि ।
न पश्यामि महीपालं कृष्णेनाक्लिष्टकर्मणा ॥ ८

न हि केवलमस्माकम् अर्चितव्यो जनार्दनः ।
त्रयाणामपि लोकानाम् अर्चनीयो जनार्दनः ॥ ९

कृष्णेन विजिता युद्धे बहवः क्षत्रियर्षभाः ।
जगत् सर्वं च वार्ष्णेये निखिलेन प्रतिष्ठितम् ॥ १०

तस्मात् सत्स्वपि वृद्धेषु [1]सम्पूज्यः कृष्ण एव सः ।
एवं वक्तुं न चार्हस्त्वं मा भूत् ते बुद्धिरीदृशी ॥ ११

ज्ञानवृद्धा मया राजन् बहवः पर्युपासिताः ।

---

1. अ-क—कृष्णमर्चाम नेतरान् ।

[1]यस्य राजन् प्रभावज्ञाः पुरा सर्वे च रक्षिताः ॥ १२
तेषां कथयतां शौरेर् अहं गुणवतो गुणान् ।
समागतानामश्रौषं बहून् बहुमतान् सताम् ॥ १३
कर्माण्यपि च यान्यस्य जन्मप्रभृति धीमतः ।
बहूनि कथ्यमानानि नरैर्भूयश्श्रुतानि मे ॥ १४
[2]न केवलं भयात् कामाच् चेदिराज जनार्दनम् ।
न सम्बन्धं पुरस्कृत्य कृतार्थं वाऽपि कञ्चन ॥ १५
अर्चयामोऽर्चितं सद्भिर् भुवि भौमसुखावहम् ॥ १५॥
यशश्शौर्यं बलं चास्य विज्ञायार्चां प्रयुञ्ज्महे ॥ १६
न हि कश्चिदिहास्माभिस् सुखं लोऽच्य परीक्ष्य वै ।
गुणैरन्यानतिक्रम्य हरिरर्च्यतमो मतः ॥ १७
ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ।
वैश्यानां धान्यधनवान् शूद्राणामेव जन्मतः ॥ १८
युज्येते तौ च कृष्णे वै हेतू द्वावपि सम्मतौ ॥ १८॥
नृणां हि लोके कश्चास्ति विशिष्टः केशवादृते ॥ १९
दानं दाक्ष्यं श्रुतं वीर्यं ह्रीः कीर्तिर्बुद्धिरुत्तमा ।
सन्नतिश्श्रीर्धृतिः पुष्टिस् तुष्टिश्च नियताऽच्युते ॥ २०

1. क-ख-ग-घ-ङ—कोशेषु इदमध नास्ति
2. अ—कोशे अर्धपञ्चकम् नोपलभ्यते ।

तमिमं सर्वसम्पन्नम् आचार्यं पितरं गुरुम् ।
[1]अर्च्यमर्चितमर्चामस् सर्वे सम्मन्तुमर्हथ ॥ २१

ऋत्विग्गुरुस्तथाऽऽचार्यस् स्नातको नृपतिः प्रियः ।
सर्वमेतद्धृषीकेशस् तस्मादभ्यर्चितोऽच्युतः ॥ २२

कृष्ण एव हि लोकानाम् उत्पत्तिरपि चाप्ययः ।
कृष्णस्य हि कृते भूतम् इदं विश्वं चराचरम् ॥ २३

[2]एष प्रकृतिरव्यक्ता कर्ता चैव सनातनः ।
परश्च सर्वभूतेभ्यस् तस्माद्वृद्धतमोऽच्युतः ॥ २४

बुद्धिर्मनो महान् वायुस् तेजोऽम्भः खं मही च या ।
चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ॥ २५

आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहाश्च ये ।
दिशश्च विदिशश्चैव सर्वं कृष्णे प्रतिष्ठितम् ॥ २६

एष रुद्रश्च सर्वात्मा ब्रह्मा चैष सनातनः ।
अक्षरः क्षररूपेण मानुषत्वमुपागतः ॥ २७

अयं तु पुरुषो बालश् शिशुपालो न बुध्यते ।
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते ॥ २८

यो हि धर्मान् विचिनुयाद् उत्कृष्टं मतिमान् नरः ।

---

1. अ—अर्च्यमच्युतमर्चामः । क-ख-ध—अभ्यर्चतर
2. अ-ख—एकप्रकृतिरव्यक्तः

स वै पश्येद्यथा धर्मं न तथा चेदिराडयम् ॥ २९

सवृद्धबालेष्वथवा पार्थिवेषु महात्मसु ।
को नार्हं मन्यते कृष्णं को वाऽप्येनं न पूजयेत् ॥ ३०

अथेमां दुष्कृतां पूजां शिशुपालो व्यवस्यति ।
सुकृतां वा यथान्यायं तथाऽयं कर्तुमर्हति ॥ ३१

वैशम्पायनः—
एवमुक्ते तु गाङ्गेये शिशुपालश्चुकोप ह ।
क्रुद्धं सुनीथं दृष्ट्वाऽथ सहदेवोऽब्रवीत् तदा ॥ ३२

सहदेवः—
नीतिपूर्वमिदं सर्वं चेदिराज मया कृतम् ।
न मे विमतिरस्तीह कारणं चात्र मे शृणु ॥ ३३

स पार्थिवानां सर्वेषां गुरुः कृष्णो बलेन वै ।
तस्मादभ्यार्चितोऽर्घ्यार्हस् सर्वे सम्मन्तुमर्हथ ॥ ३४

यो वा न सहते राज्ञां कश्चित् सबलवाहनः ।
क्षिप्रं युद्धाय निर्यातु शक्तश्चेदत्र मे युधि ॥ ३५
[1]तस्य मूर्ध्नि सुसंन्यस्तं राज्ञस्सव्यं पदं मया ॥ ३५॥
एवमुक्तो मया हेतुर् उत्तरं प्रब्रवीतु मे ॥ ३६

वैशम्पायनः—
ततो न व्याजहारैषां कश्चिद् बुद्धिमतां सताम् ।

1. अ—कोशे इदमर्धं नास्ति

मानिनां बलिनां राज्ञां मध्ये सन्दर्शिते पदे ॥ ३७
[1]पुष्पवृष्टिर्महत्यासीत् सहदेवस्य मूर्धनि ॥ ३७॥

एवमुक्ते सुनीथस्य सहदेवेन केशवे ।
स्वभावरक्ते नयने भूयो रक्ते बभूवतुः ॥ ३८॥

तस्य कोपं समुद्भूतं ज्ञात्वा भीष्मः प्रतापवान् ।
आचचक्षे पुनस्तस्मै कृष्णस्यैवोत्तमान् गुणान् ॥ ३९॥

स सुनीथं समामन्त्र्य तांश्च सर्वान् महीक्षितः ।
उवाच वदतां श्रेष्ठ इदं मतिमतां वरः ॥ ४०॥

सहदेवेन राजानो यदुक्तं केशवं प्रति ।
तत् तथेति विजानीध्वं भूयश्चात्र निबोधत ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

॥ २५ ॥ अर्घाभिहरणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये ४१॥ श्लोकाः]

---

1. अ—कोशे इदमर्धं नास्ति

## ॥ चतुस्त्रिंशोऽध्यायः ॥

श्रीकृष्णमहिम्नो विस्तरेण कथनाय भीष्मं प्रति युधिष्ठिरप्रार्थना ॥१॥ भीष्मेण विष्णोर्जगत्सृष्टिकथाकथनम् ॥ २ ॥ मधुकैटभवधकथनम् ॥ ३ ॥

वैशम्पायनः—

ततो भीष्मस्य तच्छ्रुत्वा वचः काले युधिष्ठिरः ।
[1]उवाच मतिमान् भीष्मं ततः कौरवनन्दनः ॥ १

युधिष्ठिरः—

विस्तरेणास्य देवस्य कर्माणीच्छामि सर्वशः ।
श्रोतुं भगवतस्तानि प्रब्रवीहि पितामह ॥ २

कर्मणामानुपूर्व्यं च प्रादुर्भावांश्च मे विभोः ।
यथा च प्रकृतिः कृष्णे तन्मे ब्रूहि पितामह ॥ ३

वैशम्पायनः—

एवमुक्तस्तदा भीष्मः प्रोवाच भरतर्षभम् ।
युधिष्ठिरममित्रघ्नं तस्मिन् क्षत्रसमागमे ॥ ४

समक्षं वासुदेवस्य देवस्येव शतक्रतोः ।
कर्माण्यसुकराण्यन्यैर् आचचक्षे जनाधिप ॥ ५

शृण्वतां पार्थिवानां च धर्मराजस्य चान्तिके ।
इदं मतिमतां श्रेष्ठः कृष्णं प्रति विशाम्पते ॥ ६

---

1 अ—ज्ञापनार्थाय सर्वेषां भीष्मं पुनरथाब्रवीत् ।

साम्नैवामन्त्र्य राजेन्द्रं चेदिराजमरिन्दमम् ।
भीमकर्मा ततो भीष्मो भूयस्स इदमब्रवीत् ॥ ७
कुरूणां चापि राजानं युधिष्ठिरमुवाच ह ॥ ७॥

भीष्मः—

वर्तमानामतीतां च शृणु राजन् युधिष्ठिर ।
ईश्वरस्योत्तमस्यैनां कर्मणां गहनां गतिम् ॥ ८॥
अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान् प्रभुः ॥ ९
पुरा नारायणो देवस् स्वयम्भूः प्रपितामहः ।
सहस्रशीर्षः पुरुषो ध्रुवोऽव्यक्तस्सनातनः ॥ १०
सहस्राक्षस्सहस्रास्यस् सहस्रचरणो विभुः ।
सहस्रबाहुस्साहस्रो देवो नामसहस्रवान ॥ ११
सहस्रमुकुटो देवो विश्वरूपो महाद्युतिः ।
अनेकवर्णो देवादिर् अव्यक्ता[1]द्वै परे स्थितः ॥ १२
असृजत् सलिलं पूर्वं स च नारायणः प्रभुः ।
ततस्तु भगवांस्तोये ब्रह्माणमसृजत् स्वयम् ॥ १३
ब्रह्मा चतुर्मुखो लोकान् सर्वांस्तानसृजत् स्वयम् ।
आदिकाले पुरा ह्येवं सर्वलोकस्य चोद्भवः ॥ १४
पुराऽथ प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।

1. अ–दुपरि स्थितः। क–ख–घ—परः स्मृतः

ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ॥ १५

आभूतसम्प्लवे प्राप्ते प्रलीने प्रकृतौ महान् ।
एकस्तिष्ठति सर्वात्मा स तु नारायणः प्रभुः ॥ १६

नारायणस्य चाङ्गानि सर्वदैवानि भारत ॥ १६॥

शिरस्तस्य दिवं राजन् नाभिः खं चरणौ मही ।
अश्विनौ कर्णयोर्देवौ चक्षुषी शशिभास्करौ ॥ १७॥

इन्द्रवैश्वानरौ देवौ मुखं तस्य महात्मनः ।
अन्यानि सर्वदैवानि तस्याङ्गानि महात्मनः ॥ १८॥

सर्वं व्याप्य हरिस्तस्थौ [1]सूत्रं मणिगणानिव ॥ १९

आभूतसम्प्लवान्तेऽथ दृष्ट्वा सर्वं तमोऽन्वितम् ।
नारायणो महायोगी सर्वज्ञः परमात्मवान् ॥ २०

ब्रह्मभूतस्तदाऽऽत्मानं ब्रह्माणमसृजत् स्वयम् ॥ २०॥

सोऽध्यक्षस्सर्वभूतानां प्रभूतः प्रभवोऽच्युतः ॥ २१

सनत्कुमारं रुद्रं च [2]मनुं चैव तपोधनान् ।
[3]सर्वमेवासृजद्ब्रह्मा ततो लोकान् प्रजास्तथा ॥ २२

ते च तद्व्यसृजंस्तत्र प्राप्ते काले युधिष्ठिर ।
तेभ्योऽभवन्महात्मभ्यो बहुधा ब्रह्म शाश्वतम् ॥ २३

---

1. अ-ख-घ—सूत्रे मणिगणा इव
2. अ-क—सप्तर्षींश्च
3. अ-क-ग—पूर्वं

कल्पानां बहुकोट्यश्च समतीता हि भारत ।
आभूतसम्प्लवाश्चैव बहु कोट्योऽतिचक्रमुः ॥ २४
मन्वन्तरयुगेऽजस्रं सङ्कल्पा भूतसम्प्लवाः ।
चक्रवत् परिवर्तन्ते सर्वं विष्णुमयं जगत् ॥ २५
सृष्ट्वा चतुर्मुखं देवं देवो नारायणः प्रभुः ।
स लोकानां हितार्थाय क्षीरोदे वसति प्रभुः ॥ २६
ब्रह्मा च सर्वदेवानां लोकस्य च पितामहः ।
ततो नारायणो देवस् सर्वस्य प्रपितामहः* ॥ २७
अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान् प्रभुः ।
[1]नारायणो जगच्चक्रे प्रभवाप्ययसंहितः ॥ २८
एष नारायणो भूत्वा हरिरासीद्युधिष्ठिर ।
[2]ब्रह्माणं शशिसूर्यौ च धर्मं चैवासृजत् स्वयम् ॥ २९
बहुशस्सर्वभूतात्मा प्रादुर्भवति कार्यतः ।
प्रादुर्भावांस्तु वक्ष्यामि दिव्यान् देवगणैर्युतान् ॥ ३०
सुप्त्वा युगसहस्रं स प्रादुर्भवति कार्यवान् ॥ ३०॥
पूर्णे युगसहस्रेऽथ देवदेवो जगत्पतिः ।
ब्रह्माणं कपिलं चैव परमेष्ठिं तथैव च ॥ ३१॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
1. क—नरनारायणौ भूत्वा प्रभवाप्ययसंहितौ ।
2. अ-क—ब्रह्मा च शक्रस्सूर्यश्च धर्मश्चैव सनातनः ।

देवान् सप्त ऋषींश्चैव शङ्करं च महायशाः ।
सनत्कुमारं भगवान् मनुं चैव प्रजापतिम् ॥ ३२॥
पुरा चक्रे ऽथ [1]देवादीन् प्रदीप्ताग्निसमप्रभः ॥ ३३
येन चार्णवमध्यस्थौ नष्टे स्थावरजङ्गमे ।
नष्टदेवासुरनरे प्रणष्टोरगराक्षसे ॥ ३४
योद्धुकामौ सुदुर्धर्षौ भ्रातरौ मधुकैटभौ ।
हतौ भगवता तेन तयोर्दत्त्वा वृतं वरम् ॥ ३५
भूमिं बद्ध्वा कृतौ पूर्वं मृन्मयौ द्वौ महासुरौ ।
कर्णस्रोतोद्भवौ तौ तु विष्णोस्तस्य महात्मनः ॥ ३६
महार्णवे प्रस्वपतश् शैलराजसमौ स्थितौ ।
तौ विवेश स्वयं वायुर् ब्रह्मणा साधु चोदितः ॥ ३७
तौ दिवं छादयित्वा तु ववृधाते महासुरौ ।
वायुप्राणौ तु तौ दृष्ट्वा ब्रह्मा पर्यामृशच्छनैः ॥ ३८
एकं मृदुतरं विद्धि कठिनं विद्धि चापरम् ॥ ३८॥
नामनी तु तयोश्चक्रे स विभुस्सलिलोद्भवः ।
मृदुस्त्वयं मधुर्नाम कठिनः कैटभस्त्वयम् ॥ ३९॥
तौ दैत्यौ कृतनामानौ चेरतुर्बलगर्वितौ ॥ ४०
तौ पुराऽथ दिवं सर्वां प्राप्तौ राजन् महासुरौ ।

1. अ-क—देवादिः

प्रच्छाद्याथ दिवं सर्वां चेरतुर्मधुकैटभौ ॥ ४१
[1]सर्वमेकार्णवं लोकं योद्धुकामौ सुनिर्भयौ ॥ ४१॥
तौ गतावसुरौ दृष्ट्वा ब्रह्मा लोकपितामहः ।
एकार्णवाम्बुनिचये तत्रैवान्तरधीयत ॥ ४२॥
स पद्मे पद्मनाभस्य नाभिदेशात् समुत्थिते ॥ ४३
आसीदादौ स्वयं जन्म तत् पङ्कजमपङ्कजम् ।
पूजयामास वसतिं ब्रह्मा लोकपितामहः ॥ ४४
तावुभौ जलगर्भस्थौ नारायणचतुर्मुखौ ।
बहून् वर्षायुतानप्सु शयानौ न चकम्पतुः ॥ ४५
अथ दीर्घस्य कालस्य तावुभौ मधुकैटभौ ।
आजग्मतुस्तौ तं देशं यत्र ब्रह्मा व्यवस्थितः ॥ ४६
तौ दृष्ट्वा लोकनाथस्तु कोपात् संरक्तलोचनः ।
उत्पपाताथ शयनात् पद्मनाभो महाद्युतिः ॥ ४७
तद्युद्धमभवद्घोरं तयोस्तस्य च वै तदा ।
एकार्णवे तदा घोरे त्रैलोक्ये जलतां गते ॥ ४८
[2]तदभूत् तुमुलं युद्धं वर्षसङ्घान् सहस्रशः ।
न च तावसुरौ युद्धे तदा श्रममवापतुः ॥ ४९

1. अ—कोशे सार्धश्लोकचतुष्टयं नास्ति
2. अ—तथाऽभूत्तुमुलं युद्धं वर्षपूगास्सहस्रशः ।

अथ दीर्घस्य कालस्य तौ दैत्यौ युद्धदुर्मदौ ।
ऊचतुः प्रीतमनसौ देवं नारायणं प्रभुम् ॥ ५०
प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोः ।
आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ॥ ५१
हतौ च तव पुत्रत्वं प्राप्नुयाव सुरोत्तम ।
यो ह्यावां युधि निर्जेता तस्यावां विहितौ सुतौ ॥ ५२
तयोस्स वचनं श्रुत्वा तदा नारायणः प्रभुः ।
तौ प्रगृह्य मृधे दैत्यौ दोर्भ्यां तौ समपीडयत् ॥ ५३
ऊरुभ्यां निधनं चक्रे तावुभौ मधुकैटभौ ।
तौ हतौ चाप्लुतौ तोये वपुर्भ्यामेकतां गतौ ॥ ५४
मेदौ मुमुचतुर्दैत्यौ मथ्यमानौ जलोर्मिभिः ॥ ५४॥
मेदसा तज्जलं व्याप्तं ताभ्यामन्तर्दधे तदा ।
नारायणश्च भगवान् असृजद्विविधाः प्रजाः ॥ ५५॥
दैत्ययोर्मेदसा छन्ना सर्वा राजन् वसुन्धरा ।
तदाप्रभृति कौन्तेय मेदिनीति स्मृता मही ॥ ५६॥
प्रभावात् पद्मनाभस्य शाश्वती च कृता नृणाम् ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

॥ २५ ॥ अर्घाभिहरणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये ५७ श्लोकाः]

---

## ॥ पञ्चत्रिंशोऽध्यायः ॥

**वराहावतारकथनम् ॥ १ ॥ नृसिंहावतारकथनम् ॥ २ ॥ वामनावतारकथनम् ॥ ३ ॥ दत्तात्रेयावतारकथनम् ॥ ४ ॥ परशुरामावतारकथा ॥ ५ ॥ रामावतारकथा ॥ ६ ॥**

---

**भीष्मः—**

प्रादुर्भावसहस्राणि समतीतान्यनेकशः ।
यथाशक्ति तु वक्ष्यामि शृणु तान् कुरुनन्दन ॥ १
पुरा कमलनाभस्य स्वपतस्सागराम्भसि ।
पुष्करे यत्र सम्भूता देवा ऋषिगणैस्सह ॥ २
एष पौष्करिको नाम प्रादुर्भावः प्रकीर्तितः ।
पुराणः कथ्यते यत्र वेदश्रुतिसमाहितः ॥ ३
वाराहस्तु श्रुतिमुखः प्रादुर्भावो महात्मनः ॥ ३॥
यत्र विष्णुस्सुरश्रेष्ठो वाराहं रूपमास्थितः ।
उज्जहार महीं तोयात् सशैलवनकाननाम् ॥ ४॥
वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥ ५॥
अहोरात्रेक्षणो दिव्यो वेदाङ्गश्श्रुतिभूषणः ।
आज्यनास[1]स्स्रुवतुण्डस् सामघोषस्वनो महान् ॥ ६॥

---

1. अ-ख-ग—स्रुवस्तुण्डः । छ—स्रुवं तुण्डं

धर्मसत्यमयश्श्रीमान् [1]कर्मविक्रमसत्कृतः ।
प्रायश्चित्तनखो धीरः पशुजानुर्महावृषः ॥ ७॥
औद्गात्रहोमलिङ्गोऽसौ पशुबीजमहौषधिः ।
बाह्यान्तरात्मा मन्त्रास्थिविकृतस्सौम्यदर्शनः ॥ ८॥
[2]वेदिस्कन्धो हविर्गन्धो हव्यकव्यादिवेगवान् ।
प्राग्वंशकायो द्युतिमान् नानादीक्षाभिराचितः ॥ ९॥
दक्षिणाहृदयो योगी महा[3]शास्त्रमयो महान् ।
उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्तभूषणः ॥ १०॥
छागपत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः ॥ ११
एवं यज्ञवराहो वै भूत्वा विष्णुस्सनातनः ।
महीं सागरपर्यन्तां सशैलवनकाननाम् ॥ १२
एकार्णवजले [4]भ्रष्टाम् एकार्णवगतः प्रभुः ।
मज्जितां सलिले तस्मिन् स्वदेवीं पृथिवीं तदा ॥ १३
उज्जहार विषाणेन मार्कण्डेयस्य पश्यतः ॥ १३॥
शृङ्गेणेमां समुद्धृत्य लोकानां हितकाम्यया ।

---

1. अ—क्रमविक्रमसत्कृतः। क—क्रयविक्रम।
ख-घ—कर्मवित् कर्मसत्कृतः।
2. अ—हविस्कन्धो। ख-घ—देवस्कन्धो
3. अ-क-ख-ग—सत्तमयो
4. अ-ग—मग्नां भ्रष्टामेकार्णवे प्रभुः। क—दृष्टामेकार्णवगतिः

सहस्रशीर्षो देवो हि निर्ममे जगतीं प्रभुः ॥ १४॥

एवं यज्ञवराहेण भूतभव्यभवात्मना ।
उद्धृता पृथिवी देवी सागराम्बुधरा पुरा ॥ १५॥

निहता दानवास्सर्वे देवदेवेन विष्णुना ॥ १६

वाराहः कथितो ह्येष नारसिंहमथो शृणु ।
यत्र भूत्वा मृगेन्द्रेण हिरण्यकशिपुर्हतः* ॥ १७

(नृसिंहावतारः)

दैत्येन्द्रो बलवान् राजन् सुरारिर्बलगर्वितः ।
हिरण्यकशिपुर्नाम आसीत् त्रैलोक्यकण्टकः ॥ १८

दैत्यानामादिपुरुषो [1]वीर्यवान् धृतिमान् बली ।
प्रविश्य स वनं राजंश् चकार तप उत्तमम् ॥ १९

दशवर्षसहस्राणि शतानि दश पञ्च च ।
जपोपवासस्तस्यासीत् स्थाणुर्मौनव्रतो दृढः ॥ २०

ततो दमशमाभ्यां च ब्रह्मचर्येण चानघ ।
ब्रह्मा प्रीतमनास्तस्य तपसा नियमेन च ॥ २१

ततस्स्वयम्भूर्भगवान् स्वयमागम्य भूपते ।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥ २२

आदित्यैर्वसुभिस्साध्यैर् मरुद्भिर्दैवतैस्सह ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. क-ख-घ—वीर्येणाप्रतिमो

रुद्रैर्विश्वसहायैश्च यक्षराक्षसकिन्नरैः ॥ २३
दिशाभिर्विदिशाभिश्च नदीभिस्सागरैस्तथा ।
नक्षत्रैश्च मुहूर्तैश्च खेचरैश्चापरैर्ग्रहैः ॥ २४
देवर्षिभिस्तपोयुक्तैस् सिद्धैस्सप्तर्षिभिस्तथा ।
राजर्षिभिः पुण्यतमैर् गन्धर्वैरप्सरोगणैः ॥ २५
चराचरगुरुश्श्रीमान् वृतस्सर्वसुरैस्तथा ।
ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यमागम्य चाब्रवीत् ॥ २६

ब्रह्मा—

प्रीतोऽस्मि तव भक्तस्य तपसाऽनेन सुव्रत ।
वरं वरय भद्रं ते यथेष्टं काममाप्नुहि ॥ २७

हिरण्यकशिपुः—

न देवासुरगन्धर्वा न यक्षोरगराक्षसाः ॥
न मानुषाः पिशाचाश्च हन्युर्मां देवसत्तम ॥ २८
[1]ऋषयो वा न मां शापैः क्रुद्धा लोकपितामह ।
शपेयुस्तपसा युक्ता वर एष वृतो मया ॥ २९
न शस्त्रेण नचास्त्रेण गिरिणा पादपेन च ।
न शुष्केण न चार्द्रेण स्यान्न वाऽन्येन मे वधः ॥ ३०
नाकाशे वा न भूमौ वा रात्रौ वा दिवसेऽपि वा ।

1. अ—ऋषयो दानवाश्शापैः क्रुद्धा लोके पितामह ।

नान्तर्वा न बहिर्वापि स्याद्वधो मे पितामह ॥ ३१

पशुभिर्वा मृगैर्न स्यात् पक्षिभिर्वा सरीसृपैः ।
ददासि चेद्वरानेतान् देवदेव वृणोम्यहम् ॥ ३२

ब्रह्मा—

एते दिव्या वरास्तात मया दत्तास्तवाद्भुताः ।
[1]सर्वकामान् वरांस्तात प्राप्स्यसे त्वं न संशयः ॥ ३३

भीष्मः—

एवमुक्त्वा स भगवान् आकाशेन जगाम ह ।
रराज ब्रह्मलोके स ब्रह्मर्षिगणसेवितः ॥ ३४

ततो देवाश्च नागाश्च गन्धर्वा मुनयस्तथा ।
वरप्रदानं श्रुत्वा ते ब्रह्माणमुपतस्थिरे ॥ ३५

देवाः—

वरेणानेन भगवन् बाधिष्यति स नोऽसुरः ।
[2]तत् प्रसीदस्व भगवन् वधोऽस्य प्रविचिन्त्यताम् ॥ ३६

भवान् हि सर्वभूतानां स्वयम्भूरादिकृद्विभुः ।
स्रष्टा च हव्यकव्यानाम् अव्यक्तप्रकृतिर्ध्रुवम् ॥ ३७

भीष्मः—

ततो लोकहितं वाक्यं श्रुत्वा देवः प्रजापतिः ।

---

1. अ—सर्वकामान् वरैस्तात प्राप्स्यसि त्वमसंशयम्। क—यथाकामं
2. अ-ग—कालेनापि प्रसीदस्व

प्रोवाच भगवान् वाक्यं सर्वदेवगणांस्तदा ॥ ३८

ब्रह्मा—

अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलम् ।
तपसोऽन्तेऽस्य भगवान् वधं कृष्णः करिष्यति ॥ ३९

भीष्मः—

एतच्छ्रुत्वा सुरास्सर्वे ब्रह्मणा तस्य वै वधम् ।
स्वानि स्थानानि दिव्यानि जग्मुस्ते वै मुदाऽन्विताः ॥ ४०

लब्धमात्रे वरे चापि सर्वास्ता बाधते प्रजाः ।
हिरण्यकशिपुर्दैत्यो वरदानेन दर्पितः ॥ ४१

राज्यं चकार दैत्येन्द्रो दैत्यसङ्घैस्समावृतः ।
सप्त द्वीपान् वशे चक्रे लोकान् लोकान्तरान् बलात् ॥ ४२

दिव्यलोकान् समस्तान् वै भोगान् दिव्यानवाप सः ।
देवांस्त्रिभुवनस्थांस्तान् पराजित्य महासुरः ॥ ४३

त्रैलोक्यं वशमानीय स्वर्गे वसति दानवः ।
यदा वरमदोन्मत्तो न्यवसद्दानवो दिवि ॥ ४४

अथ लोकान् समस्तांश्च विजित्य स महासुरः ।
भवेयमहमेवेन्द्रस् सोमोऽग्निर्मारुतो रविः ॥ ४५

सलिलं चान्तरिक्षं च नक्षत्राणि दिशो दश ।
अहं क्रोधश्च कामश्च वरुणो वसवोऽ[1]र्यमा ॥ ४६

1. अ-ग-घ—यमः

धनदश्च धनाध्यक्षो यक्षः किम्पुरुषाधिपः ।
एते भवेयमित्युक्त्वा स्वयं भूत्वा बलात् स च ॥ ४७
तेषां गृहीत्वा स्थानानि तेषां कार्याण्यवाप सः ।
इज्यश्चासीन्मखवरैस्[1] स तैर्देवर्षिसत्तमैः ॥ ४८
नरकस्थान् समानीय स्वर्गस्थांस्तांश्चकार सः ॥ ४८॥
एवमादीनि कर्माणि कृत्वा दैत्यपतिर्बली ॥ ४९
आश्रमेषु महाभागान् मुनीन् वै संशितव्रतान् ।
सत्यधर्मपरान् दान्तान् पुरा धर्षितवांश्च सः ॥ ५०
यज्ञीयान् कृतवान् दैत्यान् [2]अयज्ञीयाश्च देवताः ॥ ५०॥
यत्र यत्र सुरा जग्मुस् तत्र तत्र व्रजत्युत ।
स्थानानि देवतानां तु हृत्वा राज्यमपालयत् ॥ ५१॥
पञ्चकोट्यश्च वर्षाणि नियुतान्येकषष्टि च ।
षष्टिश्चैव सहस्राणां जग्मुस्तस्य दुरात्मनः ॥ ५२॥
एतद्वर्षं स दैत्येन्द्रो भोगैश्वर्यमवाप सः ॥ ५३
तेनातिबाध्यमानास्ते दैत्येन्द्रेण बलीयसा ।
ब्रह्मलोकं सुरा जग्मुस् सर्वे शक्रपुरोगमाः ॥ ५४
पितामहं समासाद्य खिन्नाः प्राञ्जलयोऽब्रुवन् ॥ ५४॥

---

1 अ-ग-व—देवकिन्नरसत्तमैः ।
2. अ—न याज्ञीयाश्च देवताः ।　ख—न याज्ञीयांश्च दैवतान्

देवाः—

भगवन् भूतभव्येश नस्त्रायस्व इहागतान् ।
भयं दितिसुताद्घोरं भवत्यद्य दिवानिशम् ॥ ५५॥

भगवन् सर्वभूतानां स्वयम्भूरादिकृद्विभुः ।
स्रष्टा त्वं हव्यकव्यानाम् अव्यक्तः प्रकृतिर्ध्रुवः ॥ ५६॥

ब्रह्मा—

[1]श्रूयतामापदेवं हि दुर्विज्ञेया मयाऽपि च ॥ ५७

नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः ।
अव्यक्तस्सर्वभूतानाम् अचिन्त्यो विभुरव्ययः ॥ ५८

ममापि स तु युष्माकं व्यसने परमा गतिः ॥ ५८॥

नारायणः परोऽव्यक्ताद् अहमव्यक्तसम्भवः ।
मत्तो जज्ञुः प्रजा लोकास् सर्वे देवासुराश्च ते ॥ ५९॥

देवा यथाऽहं युष्माकं तथा नारायणो मम ।
पितामहोऽहं सर्वस्य स विष्णुः प्रपितामहः ॥ ६०॥

तमिमं विबुधा दैत्यं स विष्णुस्संहरिष्यति ।
तस्य नास्ति ह्यशक्यं च तस्माद्व्रजत मा चिरम् ॥ ६१॥

भीष्मः—

पितामहवचश्श्रुत्वा सर्वे ते भरतर्षभ ।

---

1. अ—श्रूयतां परमं दैवं दुर्विज्ञेयं मयाऽपि च ।
   क—श्रूयतां परमं दिव्यं दुर्विज्ञेयं ।
ख-ग-घ—श्रूयतामपरं देवै दुर्विज्ञेयं ममापिच ।

विबुधा ब्रह्मणा सार्धं जग्मुः क्षीरोदधिं प्रति ॥ ६२॥

आदित्या मरुतस्साध्या विश्वे च वसवस्तथा ।
रुद्रा महर्षयश्चैव अश्विनौ च सुरूपिणौ ॥ ६३॥

अन्ये च दिव्या ये राजंस् ते सर्वे सगणास्सुराः ।
चतुर्मुखं पुरस्कृत्य श्वेतद्वीप[1]मुपस्थिताः ॥ ६४॥

[2]गत्वा क्षीरसमुद्रं तं शाश्वतीं परमां गतिम् ।
अनन्तशयनं देवम् अनन्तं दीप्ततेजसम् ॥ ६५॥

शरण्यं त्रिदशा विष्णुम् उपतस्थुस्सनातनम् ॥ ६६

देवं ब्रह्ममयं यज्ञं ब्रह्मदेवं महाबलम् ।
भूतं भव्यं भविष्यच्च प्रभुं लोकनमस्कृतम् ॥ ६७

नारायणं विभुं देवं शरण्यं शरणं गताः ॥ ६७॥

देवाः—

त्रायस्व नोऽद्य देवेश हिरण्यकशिपो[3]र्वधात् ।
त्वं हि नः परमो धाता ब्रह्मादीनां सुरोत्तम ॥ ६८॥

[4]उत्फुल्लपद्मपलाक्ष शत्रुपक्षभयङ्कर ।
क्षयाय दितिवंशस्य शरण्यस्त्वं भवास्य नः ॥ ६९॥

---

1. अ—मुपागताः । ग—मुपाद्रवन्
2. ग—तत्र श्वेतं समासाद्य समुद्रं    3. अ-ख-च—भयात्
4. अ—त्वं फुलाम्बुजपलाक्ष । ख—उत्फुल्लामलपद्माक्ष
ङ—उत्फुल्लामलपलाक्ष ।

भीष्मः—

देवानां वचनं श्रुत्वा तदा विष्णुश्शुचिश्रवाः ।
अदृश्यस्सर्वभूतानां वक्तुमेवोपचक्रमे ॥ ७०॥

श्रीभगवान्—

भयं त्यजध्वममरा अभयं वो ददाम्यहम् ।
तदेवं त्रिदिवं देवाः प्रतिपद्यत मा चिरम् ॥ ७१॥

एषोऽहं सगणं दैत्यं वरदानेन दर्पितम् ।
अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम् ॥ ७२॥

ब्रह्मा—

भगवन् भूतभव्येश खिन्ना ह्येते भृशं सुराः ।
तस्मात् त्वं जहि दैत्येन्द्रं क्षिप्रं कालोऽस्य मा चिरम् ॥ ७३॥

श्रीभगवान्—

क्षिप्रं देवाः करिष्यामि त्वरया दैत्यनाशनम् ।
तस्मात् त्वं विबुधाश्चैव प्रतिपद्यत वै दिवम् ॥ ७४॥

भीष्मः—

एवमुक्त्वा स भगवान् विसृज्य त्रिदिवेश्वरान् ।
नरस्यार्धतनुं कृत्वा सिंहस्यार्धतनुं तथा ॥ ७५॥

नारसिंहेन वपुषा पाणिं [1]निष्पिष्य पाणिना ।
भीमरूपो महातेजा व्यादितास्य इवान्तकः ॥ ७६॥

1. अ-क—संस्पृश्य । ग—सङ्गृह्य

हिरण्यकशिपुं राजन् जगाम हरिरीश्वरः ॥ ७७
दैत्यास्तमागतं दृष्ट्वा नारसिंहं महाबलम् ।
ववर्षुश्शस्त्रवर्षैस्ते सुसङ्क्रुद्धास्तदा हरिम् । ७८
तैर्विसृष्टानि शस्त्राणि [1]भक्षयामास वै हरिः ।
जघान च रणे दैत्यान् सहस्राणि बहून्यपि ॥ ७९
तान् निहत्य च दैत्येन्द्रान् सर्वान् क्रुद्धान् महाबलान् ।
अभ्यधावत् सुसङ्क्रुद्धो दैत्येन्द्रं बलगर्वितम् ॥ ८०
[2]जीमूतघनसङ्काशो जीमूतघननिस्वनः ।
जीमूत इव दीप्तौजा जीमूत इव वेगवान् ॥ ८१
देवारिर्दितिजो दुष्टो नृसिंहं समुपाद्रवत् ॥ ८१॥
दैत्यं सोऽतिबलं [3]दृष्ट्वा क्रुद्धशार्दूलविक्रमम् ।
दृप्तैर्दैत्यगणैर्गुप्तं खरैर्नखमुखैरुत ॥ ८२॥
ततः कृत्वा तु युद्धं वै तेन दैत्येन वै हरिः ।
सन्ध्याकाले महातेजा [4]प्रघाणे च त्वरान्वितः ॥ ८३॥
ऊरौ निधाय दैत्येन्द्रं निर्बिभेद नखैर्हि तम् ।
महाबलं महावीर्यं वरदानेन दर्पितम् ॥ ८४॥

---

1. ख-घ—मोक्षयामास
2. अ-ख-ग—एवं प्रमथमानं तमसुरेन्द्रोऽभ्यधावत । [अधिकः पाठः]
3. अ—दृप्तं शार्दूलसमविक्रमम् । क—दृप्तं दृप्तशार्दूल
4. अ-ख-घ—भवनान्ते

दैत्यश्रेष्ठं सुरश्रेष्ठो जघान तरसा हरिः ॥ ८५

हिरण्यकशिपुं हत्वा सर्वदैत्यांश्च वै तदा ।
विबुधानां प्रजानां च हितं कृत्वा महाद्युतिः ॥ ८६
प्रमुमोद हरिर्देवस् स्थाप्य धर्मं तदा भुवि ॥ ८६॥

एष ते नारसिंहोऽत्र कथितः पाण्डुनन्दन ।
शृणु त्वं वामनं नाम प्रादुर्भावं महात्मनः* ॥ ८७॥

(वामनावतारः)

पुरा त्रेतायुगे राजन् बलिर्वैरोचनोऽभवत् ।
दैत्यानां पार्थिवो वीरो बलेनाप्रतिमो बली ॥ ८८॥

तदा बलिर्महाराज दैत्यसङ्घैस्समावृतः ।
विजित्य तरसा शक्रम् इन्द्रस्थानमवाप सः ॥ ८९॥

तेन वित्रासिता देवा बलिनाऽऽखण्डलादयः ।
ब्रह्माणं तु पुरस्कृत्य गत्वा क्षीरोदधिं तदा ॥ ९०॥

तुष्टुवुस्सहितास्सर्वे देवं नारायणं प्रभुम् ॥ ९१
[1]स तेषां दर्शनं चक्रे विबुधानां हरिस्स्तुतः ॥ ९१॥

प्रसादजं ह्यस्य विभोर् अदित्यां जन्म उच्यते ॥ ९२
अदितेरपि पुत्रत्वम् एत्य यादवनन्दनः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
1. क-ख-ग-घ—तेषां प्रसादं चक्रेऽथ

एष विष्णुरिति ख्यात इन्द्रस्यावरजोऽभवत् ॥ ९३
तस्मिन्नेव च काले तु दैत्येन्द्रो वीर्यवान् बलिः ।
अश्वमेधं क्रतुश्रेष्ठम् आहर्तुमुपचक्रमे ॥ ९४
वर्तमाने तदा यज्ञे दैत्येन्द्रस्य युधिष्ठिर ।
स विष्णुर्वामनो भूत्वा प्रच्छन्नो ब्रह्मवेषधृक् ॥ ९५
मुण्डो यज्ञोपवीती च कृष्णाजिनधरश्शिखी ।
पालाशदण्डं सङ्गृह्य वामनोऽद्भुतदर्शनः ॥ ९६
प्रविश्य स बलेर्यज्ञे वर्तमाने तु दक्षिणाम् ।
देहीत्युवाच दैत्येन्द्रं विक्रमांस्त्रीन् ममैव ह ॥ ९७
दीयतां त्रिपदीमात्रम् इत्ययाचन्महासुरम् ।
स तथेति प्रतिश्रुत्य प्रददौ विष्णवे तदा ॥ ९८
तेन लब्ध्वा हरिर्भूमिं जृम्भयामास वै भृशम् ॥ ९८॥
स शिशुस्सदिवं खं च पृथिवीं च विशाम्पते ।
त्रिभिर्विक्रमणैरेतत् सर्वमाक्रमताभिभूः ॥ ९९॥
बलेर्बलवतो यज्ञे बलिना विष्णुना पुरा ।
विक्रमैस्त्रिभिरक्षोभ्याः क्षोभितास्ते महासुराः ॥ १००॥
विप्रचित्तिमुखाः क्रुद्धा दैत्यसङ्घा महाबलाः ।
नानावक्त्रा महाकाया नानावेषधरा नृप ॥ १०१॥

नानाप्रहरणा रौद्रा नानामाल्यानुलेपनाः ।
स्वान्यायुधानि सङ्गृह्य प्रदीप्ता इव तेजसा ॥ १०२॥
क्रममाणं हरिं तत्र उपावर्तन्त भारत ॥ १०३
प्रमथ्य सर्वान् दैतेयान् पादहस्ततलैस्तु तान् ।
रूपं कृत्वा महाभीमं जहाराशु स मेदिनीम् ॥ १०४
सम्प्राप्य [1]पादमाकाशम् आदित्यसदने स्थितः ।
अत्यरोचत भूतात्मा भास्करं स्वेन तेजसा ॥ १०५
प्रकाशयन् दिशस्सर्वाः प्रदिशश्च महाबलः ।
शुशुभे स महाबाहुस् सर्वलोकान् प्रकाशयन् ॥ १०६
तस्य विक्रमतो भूमि चन्द्रादित्यौ स्तनान्तरे ।
नभः प्रक्रममाणस्य नाभ्यां किल तदा स्थितौ ॥ १०७
परमाक्रममाणस्य जानुभ्यां तौ व्यवस्थितौ ॥ १०७॥
विष्णोरमितवीर्यस्य वदन्त्येवं द्विजातयः ॥ १०८
अथासाद्य कपालं स अण्डस्य तु युधिष्ठिर ।
तच्छिद्रात् स्यन्दिनी तस्य पादाद्भ्रष्टा तु निम्नगा ॥ १०९
ससार सागरं साऽऽशु पावनी सागरङ्गमा ॥ १०९॥
जहार मेदिनीं सर्वां हत्वा दानवपुङ्गवान् ॥ ११०
आसुरीं श्रियमाहृत्य त्रींल्लोकान् स जनार्दनः ।

1. अ-क—दिवं । च—दिशं

सपुत्रदारानसुरान् पाताले तानपातयन् ॥ १११

नमुचिश्शम्बरश्चैव प्रह्लादश्च महामनाः ।
पादपाताभिनिर्धूताः पाताले विनिपातिताः ॥ ११२

महाभूतानि भूतात्मा [1]स विशेषेण वै हरिः ।
कालं च सकलं राजन् गात्रभूतान्यदर्शयत् ॥ ११३

तस्य गात्रे जगत् सर्वम् आनीत[2]मिव दृश्यते ।
न किञ्चिदस्ति लोकेषु यदनाप्तं महात्मना ॥ ११४

तद्धि रूपं महेशस्य देवदानवमानवाः ।
दृष्ट्वा तं मुमुहुस्सर्वे विष्णुतेजोऽभिपीडिताः ॥ ११५

बलिर्बद्धोऽभिमानी च यज्ञवाटे महात्मना ।
विरोचनकुलं सर्वं पाताले विनि[3]पातितम् ॥ ११६

एवंविधानि कर्माणि कृत्वा गरुडवाहनः ।
न विस्मयमुपागच्छत् पारमेष्ठ्येन तेजसा ॥ ११७

स सर्वममरैश्वर्यं सम्प्रदाय शचीपतेः ।
त्रैलोक्यं च ददौ शक्रे विष्णुर्दानवसूदनः ॥ ११८

एष ते वामनो नाम प्रादुर्भावो महात्मनः ।

---

1. अ-क-ख-घ—सविशेषाणि
2. अ—मधिपश्यति। क-ख—मधिदृश्यते
3. अ-क-ग—वेशितम्

वेदविद्भिर्द्विजैरेतत् कथ्यते वैष्णवं यशः ॥ ११९

मानुषेषु यथा विष्णोः प्रादुर्भावं तथा शृणु* ॥ ११९॥

(दत्तात्रेयावतारः)

विष्णोः पुनर्महाराज प्रादुर्भावो महात्मनः ।
दत्तात्रेय इति ख्यात ऋषिरासीन्महायशाः ॥ १२०॥

तेन नष्टेषु वेदेषु क्रियासु च मखेषु च ।
चातुर्वर्ण्ये च सङ्कीर्णे धर्मे शिथिलतां गते ॥ १२१॥

अभिवर्धति चाधर्मे सत्ये नष्टे स्थितेऽनृते ।
प्रजासु क्षीयमाणासु धर्मे चाकुलतां गते ॥ १२२॥

सयज्ञास्सक्रिया वेदाः प्रत्यानीताश्च तेन वै ॥ १२३

चातुर्वर्ण्यमसङ्कीर्णं कृतं तेन महात्मना ॥ १२३॥

स एष वै यदा प्रादाद् हैहयाधिपतेर्वरम् ।
तं हैहयानामधिपस् त्वर्जुनोऽभिप्रसादयत् ॥ १२४॥

वने पर्यचरत् सम्यक् शुश्रूषुरनसूयकः ।
निर्ममो निरहङ्कारो दीर्घकालमतोषयन् ॥ १२५॥

आराध्य दत्तात्रेयं हि अगृह्णात् स वरानिमान् ।
आम्नादाप्ततरान् विप्राद् विद्वान् विद्वन्निषेवितात् ॥ १२६॥

ऋतेऽमरत्वं विप्रेण दत्तात्रेयेण धीमता ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

वरैश्चतुर्भिः प्रवृत इमांस्तत्राभ्यनन्दत ॥ १२७॥
श्रीमान् मनस्वी बलवान् सत्यवागनसूयकः ।
सहस्रबाहुर्भूयासम् एष मे प्रथमो वरः ॥ १२८॥
जरायुजाण्डजं सर्वं सर्वं चैव चराचरम् ।
प्रशास्तुमिच्छे धर्मेण द्वितीयस्त्वेष मे वरः ॥ १२९॥
पितॄन् देवानृषीन् विप्रान् यजेयं विपुलैर्मखैः ।
अमित्रान् निशितैर्बाणैर् घातयेयं रणाजिरे ॥ १३०॥
[1]दत्तात्रेयेह भगवंस् तृतीयो वर एष मे ॥ १३१
यस्य नासीन्न भविता न चास्ति सदृशः पुमान् ।
इह वा दिवि वा लोके स मे हन्ता भवेदिति ॥ १३२
सोऽर्जुनः कृतवीर्यस्य वरः पुत्रो[2]ऽभवद्युधि ।
स सहस्रं सहस्राणां माहिष्मत्यामवर्धत ॥ १३३
पृथिवीमखिलां जित्वा द्वीपांश्चापि समुद्रिणः ।
नभसीव ज्वलन् सूर्यः पुण्यैः कर्मभिरर्जुनः ॥ १३४
इन्द्रद्वीपं कशेरुं च [3]ताम्रद्वीपं गभस्तिमत् ।
[4]गान्धर्वं वारुणं द्वीपं सौम्याक्षमिति च प्रभुः ॥ १३५

---

1. अ—कोश इदमर्धं नास्ति
2. ख-ग-घ-ङ—महाबलः
3. अ—ताम्रपर्णि गभस्तिमान् । क—ताम्रपर्णमगस्तिमत्
4. अ—गन्धर्ववारुणद्वीपं साश्यं नाग इति प्रभुः ।
क—सौम्यमार्षमिति प्रभुः । ख—सौम्यार्षमिति च प्रभुः ।

पूर्वैरजितपूर्वांश्च द्वीपानजयदर्जुनः ॥ १३५॥
सौवर्णं सर्वमप्यासीद् विमानवरमुत्तमम् ।
चतुर्धा व्यभजद्राष्ट्रं तद्विभज्यान्वपालयत् ॥ १३६॥
एकांशेनाहरत् सेनाम् एकांशेनावसद्गृहान् ।
यस्तु तस्य तृतीयांशो राजाऽऽसीज्जनसङ्ग्रहे ॥ १३७॥
आप्तः परमकल्याणस् तेन यज्ञानकल्पयत् ॥ १३८
ये दस्यवो ग्रामचरा अरण्ये च वसन्ति ये ।
चतुर्थेन च सोंशेन तान् सर्वान् प्रत्यषेधयत् ॥ १३९
सर्वेभ्यश्चान्तवासिभ्यः कार्तवीर्योऽहरद्बलिम् ।
आहृतं स्वबलैर्यत्तद् अर्जुनश्चावमन्यते ॥ १४०
काको वा मूषिको वाऽपि तं तमेव न्यबर्हयत् ।
द्वाराणि नापिधीयन्ते राष्ट्रेषु नगरेषु च ॥ १४१
स एव राष्ट्रपालोऽभूत् स्त्रीपालोऽभवदर्जुनः ।
स एवासीदजापालस् स गोपालो विशाम्पते ॥ १४२
स स्मारण्ये मनुष्याणां राजा क्षेत्राणि रक्षति ।
इदं तु कार्तवीर्यस्य बभूवासदृशं जनैः ॥ १४३
न पूर्वे नापरे तस्य गमिष्यन्ति गतिं नृपाः ।
यदर्णवे प्रयातस्य वस्त्रं न परिषिच्यते ॥ १४४

शतं वर्षसहस्राणाम् अनुशिष्यार्जुनो महीम् ।
दत्तात्रेयप्रसादेन एवं राज्यं चकार सः ॥ १४५

एवं बहूनि कर्माणि चक्रे लोकहिताय सः ।

दत्तात्रेय इति ख्यातः प्रादुर्भावस्तु वैष्णवः ॥ १४६
कथितो भरतश्रेष्ठ शृणु भूयो महात्मनः* ॥ १४६॥

[1]यदा भृगुकुले जन्म यदर्थं च महात्मनः ।
जामदग्न्य इति ख्यातः प्रादुर्भावस्तु वैष्णवः ॥ १४७॥

( परशुरामावतारः )

जमदग्निसुतो राजन् रामो नाम स वीर्यवान् ।
हैहयान्तकरो राजन् स रामो बलिनां वरः ॥ १४८॥

कार्तवीर्यो महावीर्यो बलेनाप्रतिमस्तथा ।
रामेण जामदग्न्येन हतो विषममाचरन् ॥ १४९॥

तं कार्तवीर्यं राजानं हैहयानामरिन्दमम् ।
रथस्थं पार्थिवं रामः पातयित्वाऽवधीद्रणे ॥ १५०॥

जम्भस्य यज्ञे हन्ता स ऋत्विजं चैव संस्तरे ।
जम्भस्य मूर्ध्नि भेत्ता च हन्ता च शतदुन्दुभेः ॥ १५१॥

स एष कृष्णो गोविन्दो जातो भृगुषु वीर्यवान् ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. अ—कोश इदमर्धं नास्ति

सहस्रबाहुमुद्धर्तुं सहस्रजितमाहवे ॥ १५२॥

क्षत्रियाणां चतुष्षष्टिम् अयुतानां महायशाः ।
सरस्वत्यां समेतानि एष वै धनुषाऽजयत् ॥ १५३॥

ब्रह्मद्विषां वधे तस्मिन् सहस्राणि चतुर्दश ।
पुनर्जग्राह शूराणाम् अन्तं चक्रे नरर्षभः ॥ १५४॥

ततो दशसहस्रस्य हन्ता पूर्वमरिन्दमः ।
सहस्रं मुसलेनाहन् सहस्रमुदकृन्तत ॥ १५५॥

चतुर्दश सहस्राणि कणधूममपाययत् ।
शिष्टान् ब्रह्मद्विषश्छित्वा ततोऽस्नायत भार्गवः ॥ १५६॥

राम रामेत्यभिक्रुष्टो ब्राह्मणैः क्षत्रियार्दितैः ।
न्यघ्नद्दशसहस्राणि रामः परशुनाऽभिभूः ॥ १५७॥

न ह्यमृष्यत तां वाचम् आर्तैर्भृशमुदीरिताम् ।
भृगो रामाभिधावेति यदाऽक्रन्दन् द्विजातयः ॥ १५८॥

काश्मीरान् दरदान् कुन्तीन् क्षुद्रकान् मालवान्छकान् ।
चेदिकाशिकरूशांश्च ऋषिकान् क्रथकैशिकान् ॥ १५९॥

अङ्गान् वङ्गान् कलिङ्गांश्च मागधान् काशिकोसलान् ।
रात्रायणान् वीतिहोत्रान् किरातान् [1]मार्तिकावतान् ॥ १६०॥

एतानन्यांश्च राजेद्रान् देशे देशे सहस्रशः ।

---

1. अ—कार्तिकेयवान् । ख-ग-ब—कार्ति

निकृत्य निशितैर्बाणैस् सम्प्रदाय विवस्वते ॥ १६१॥
कीर्णा क्षत्रियकोटीभिर् मेरुमन्दरभूषणा ।
त्रिस्सप्तकृत्वः पृथिवी तेन निःक्षत्रिया कृता ॥ १६२॥
कृत्वा निःक्षत्रियां चैव भार्गवस्स महायशाः ।
इन्द्रगोपकवर्णस्य [1]जीवञ्जीवनिभस्य च ॥ १६३॥
पूरयामास सरितः क्षतजस्य सरांसि च ॥ १६४
[2]चकार तर्पणं वीरः पितॄणां तासु तेषु च ॥ १६४॥
सर्वानष्टादश द्वीपान् वशमानीय भार्गवः ।
सोऽश्वमेधसहस्राणि नरमेधशतानि च ॥ १६५॥
इष्ट्वा सागरपर्यन्तां काश्यपाय महीं ददौ ॥ १६६
तस्याग्रेणानु पर्येति भूमिं कृत्वा विपांसुलाम् ॥ १६६॥
ततः कालकृतां सत्यां भार्गवाय महात्मने ।
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ॥ १६७॥
वेदिमष्टादशोत्सेधां हिरण्यस्यातिपौरुषीम् ।
रामस्य जामदग्न्यस्य प्रतिजग्राह काश्यपः ॥ १६८॥
एवमिष्ट्वा महाबाहुः क्रतुभिर्भूरिदक्षिणैः ।
अन्यद्वर्षशतं रामस् [3]सौभे साल्वमयोधयत् ॥ १६९॥

---

1. क-ख-ग-घ-ङ—बन्धुजीव
2. अ—कोश इदमर्धं नास्ति ।
3. अ-क—सौभं । ख-घ—सौभं साङ्कत्य

ततस्स भृगुशार्दूलस् तं सौभं योधयन् प्रभुः ।
सुबन्धुरं रथं राजन्नास्थाय भरतर्षभ ॥ १७०॥
नम्रिकानां कुमारीणां गायन्तीनामुपाश्रृणोत् ॥ १७१
राम राम महाबाहो भृगूणां कीर्तिवर्धन ।
त्यज शस्त्राणि सर्वाणि न त्वं सौभं वधिष्यसि ॥ १७२
चक्रहस्तो गदापाणिर् [1]भीतानामभयङ्करः ।
युधि प्रद्युम्नसाम्बाभ्यां कृष्णस्सौभं वधिष्यति ॥ १७३
तच्छ्रुत्वा पुरुषव्याघ्रस् तत एव वनं ययौ ।
न्यस्य सर्वाणि शस्त्राणि कालकाङ्क्षी महायशाः ॥ १७४
रथं वर्मायुधं चैव शरान् परशुमेव च ।
धनूंष्यप्सु प्रतिष्ठाप्य राजंस्तेपे परं तपः ॥ १७५
ह्रियं प्रज्ञां श्रियं कीर्तिं लक्ष्मीं चामित्रकर्शनः ।
पञ्चाधिष्ठाय धर्मात्मा तं रथं विससर्ज ह ॥ १७६
आदिकाले प्रवृत्तं हि विभजन् कालमीश्वरः ।
नाहनच्छ्रद्धया सौभं न ह्यशक्तो महायशाः ॥ १७७
जामदग्न्य इति ख्यातो यस्त्वसौ भगवानृषिः ।
सोऽस्य भागस्तपस्तेपे भार्गवो लोकविश्रुतः* ॥ १७८

1. अ-क-ग—दीनानां
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

(रामावतारः)

शृणु राजंस्तथा विष्णोः प्रादुर्भावं महात्मनः ।
चतुर्विंशे युगे चापि मार्कण्डेयपुरस्सरः ॥ १७९
तिथौ नावमिके जज्ञे तथा दशरथादपि ।
कृत्वाऽऽत्मानं महाबाहुश् चतुर्धा विष्णुरव्ययः ॥ १८०
लोके राम इति ख्यातस् तेजसा भास्करोपमः ।
प्रसादनार्थं लोकस्य विष्णुस्तस्य सनातनः ॥ १८१
[1]धर्मार्थमेव कौन्तेय जज्ञे तत्र महायशाः ॥ १८१॥
तमप्याहुर्मनुष्येन्द्रं सर्वभूतपतेस्तनुम् ॥ १८२
यज्ञविघ्नं तदा कृत्वा विश्वामित्रस्य भारत ।
सुबाहुर्निहतस्तेन मारीचस्ताडितो भृशम् ॥ १८३
तस्मै दत्तानि शस्त्राणि विश्वामित्रेण धीमता ।
वधार्थं देवशत्रूणां दुर्वाराणि सुरैरपि ॥ १८४
वर्तमाने तदा यज्ञे जनकस्य महात्मनः ।
भग्नं माहेश्वरं चापं क्रीडता लीलया परम् ॥ १८५
[2]ततो विवाहं सीतायाः कृत्वा स रघुवल्लभः ।
[3]नगरीं पुनरासाद्य मुमुदे तत्र सीतया ॥ १८६

1. अ—कर्मार्थमेव
2. अ-ग—ततस्तु सीतां जग्राह भार्यार्थे जानकीं विभुः ॥
3. अ—कोशे अर्धद्वयं नास्ति

कस्यचित्त्वथ कालस्य पित्रा तत्राभिचोदितः ।
कैकेय्याः प्रियमन्विच्छन् वनमभ्यवपद्यत ॥ १८७

यस्समास्सर्वधर्मज्ञश् चतुर्दश वने वसन् ।
लक्ष्मणानुचरो रामस् सर्वभूतहिते रतः ॥ १८८
चतुर्दश वने तप्त्वा तपो वर्षाणि भारत ॥ १८८॥
रूपिणी यस्य पार्श्वस्था सीतेत्यभिहिता जनैः ।
पूर्वोचितत्वात् सा लक्ष्मीर् भर्तारमनुगच्छति ॥ १८९॥
जनस्थाने वसन् कार्यं त्रिदशानां चकार सः ॥ १९०

मारीचं दूषणं हत्वा खरं त्रिशिरसं तथा ।
चतुर्दश सहस्राणि रक्षसां घोरकर्मणाम् ॥ १९१
जघान रामो धर्मात्मा प्रजानां हितकाम्यया ॥ १९१॥
विराधं च कबन्धं च राक्षसौ क्रूरकर्मिणौ ।
जघान च तदा रामो गन्धर्वौ शापविक्षतौ ॥ १९२॥
स रावणस्य भगिनीनासाच्छेदं च कारयत् ।
भार्यावियोगं तं प्राप्य मृगयन् व्यचरद्वनम् ॥ १९३॥
ततस्तमृश्यमूकं स गत्वा पम्पामतीत्य च ।
सुग्रीवं मारुतिं दृष्ट्वा चक्रे मैत्रीं तयोस्स वै ॥ १९४॥
अथ गत्वा स किष्किन्धां सुग्रीवेण तदा सह ।
निहत्य वालिनं युद्धे वानरेन्द्रं महाबलम् ॥ १९५॥

अभ्यषिञ्चत् तदा रामस् सुग्रीवं वानरेश्वरम् ॥　　१९६

ततस्स वीर्यवान् राजंस् त्वरयन् वै समुत्सुकः ।
विचित्य वायुपुत्रेण लङ्कादेशं निवेदितम् ॥　　१९७

सेतुं बद्ध्वा समुद्रस्य वानरैस्सहितस्तदा ।
सीतायाः पदमन्विच्छन् रामो लङ्कां विवेश ह ॥　　१९८

देवोरगगणानां हि यक्षराक्षसपक्षिणाम् ।
तत्रावध्यं राक्षसेन्द्रं रावणं युधि दुर्जयम् ॥　　१९९

[1]युक्तं राक्षसकोटीभिर् भिन्नाञ्जनचयोपमम् ।
दुर्निरीक्ष्यं सुरगणैर् वरदानेन दर्पितम् ॥　　२००

जघान सचिवैस्सार्धं सान्वयं रावणं रणे ॥　　२००॥

त्रैलोक्यकण्टकं वीरं महाकायं महाबलम् ।
रावणं सगणं हत्वा रामो भूतपतिः पुरा ॥　　२०१॥

लङ्कायां तं महात्मानं राक्षसेन्द्रं विभीषणम् ।
अभिषिच्य च तत्रैव अमरत्वं ददौ तदा ॥　　२०२॥

आरुह्य पुष्पकं रामस् सीतामादाय पाण्डव ।
सबलस्स्वपुरं गत्वा धर्मराज्यमपालयत् ॥　　२०३॥

दानवो लवणो नाम मधोः पुत्रो महाबलः ।
शत्रुघ्नेन हतो राजंस् ततो रामस्य शासनात् ॥　　२०४॥

---

1. क-ख-घ—गुप्तं

एवं बहूनि कर्माणि कृत्वा लोकहिताय सः ।
राज्यं चकार विधिवद् रामो धर्मभृतां वरः ॥ २०५॥
[1]दशाश्वमेधानाजह्रे [2]ज्योतिरुक्थ्यान् निरर्गलान् ॥ २०६
नाश्रूयन्ताशुभा वाचो नात्ययः प्राणिनां तदा ।
न वित्तजं भयं चासीद् रामे राज्यं प्रशासति ॥ २०७
प्राणिनां च भयं नासीज् जलानलविधानजम् ।
पर्यदेवन् न विधवा नानाथाः काश्चनाभवन् ॥ २०८
सर्वमासीन् तदा तृप्तं रामे राज्यं प्रशासति ॥ २०८॥
न सङ्करकरा वर्णा नाकृष्टकरकृज्जनः ।
न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥ २०९॥
विशः पर्यचरन् क्षत्रं क्षत्रं नापीडयद्विशः ।
नरा नात्यचरन् भार्या भार्या नात्यचरन् पतीन् ॥ २१०॥
[3]नासीदल्पकृषिर्लोके रामे राज्यं प्रशासति ॥ २११
आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
अरोगाः प्राणिनोऽप्यासन् रामे राज्यं प्रशासति ॥ २१२

---

1. ख-ग-घ-ङ—शताश्व
2. अ—मुक्ताश्वान् सन्निरर्गलान् । क—सानुक्थ्यान् सनिरर्गलान् ।
ग—जाह्नव्यां स निरर्गलान् ।
3. क—सर्वबीजान्यरोहन्त निर्दस्युः पृथिवी तदा ।
राम एवाभवद्भर्ता रामः पालयिता भवत् ॥ [अधिकः पाठः]

ऋषीणां देवतानां च मनुष्याणां तथैव च ।
पृथिव्यां सहवासोऽभूद् रामे राज्यं प्रशासति ॥ २१३
सर्वे ह्यासंस्तृप्तरूपास् तदा तस्मिन् विशाम्पते ।
धर्मेण पृथिवीं सर्वाम् अनुशासति भूमिपे ॥ २१४
तपस्येवाभवन् सर्वे सर्वे धर्ममनुव्रताः ।
पृथिव्यां धार्मिके तस्मिन रामे राज्यं प्रशासति ॥ २१५
नाधर्मिष्ठो नरः कश्चिद् बभूव प्राणिनां क्वचित् ।
प्राणापानौ समावास्तां रामे राज्यं प्रशासति ॥ २१६
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ॥ २१६॥
श्यामो युवा लोहिताक्षो मातङ्गानामिवर्षभः ।
आजानुबाहुस्सुमुखस् सिंहस्कन्धो महाबलः ॥ २१७॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
[1]राज्यं भोगं च सम्प्राप्य शशास पृथिवीमिमाम् ॥ २१८॥
रामो रामो राम इति प्रजानामभवन् कथाः ।
रामभूतं जगदिदं रामे राज्यं प्रशासति ॥ २१९॥
ऋग्यजुस्सामहीनाश्च न तदाऽऽसन द्विजातयः ।
उषित्वा दण्डके कार्यं त्रिदशानां चकार सः ॥ २२०॥
पूर्वापकारिणं सङ्ख्ये पौलस्त्यं मनुजर्षभः ।

---

1. अ—कोश इदमर्धं नास्ति ।

देवगन्धर्वनागानाम् अरिं स निजघान ह ॥ २२१॥

सत्त्ववान् गुणसम्पन्नो दीप्यमानस्स्वतेजसा ॥ २२२

एवमेव महाबाहुर् इक्ष्वाकुकुलवर्धनः ।

रावणं सगणं हत्वा दिवमाक्रमताभिभूः ॥ २२३

इति दाशरथेः ख्यातः प्रादुर्भावो महात्मनः ॥ २२३॥

( कृष्णावतारः )

ततः कृष्णो महाबाहुर् भीतानामभयङ्करः ।

अष्टाविंशे युगे राजन् जज्ञे श्रीवत्सलक्षणः ॥ २२४॥

पेशलश्च वदान्यश्च लोके बहुमतो नृषु ।

स्मृतिमान् देशकालज्ञश् शङ्खचक्रगदासिधृक् ॥ २२५॥

वासुदेव इति ख्यातो लोकानां हितकृत् सदा ।

वृष्णीनां च कुले जातो भूमेः प्रियचिकीर्षया ॥ २२६॥

स नृणामभयं दाता मधुहेति स विश्रुतः ।

शकटार्जुनरामाणां कीलस्थानान्यसूदयत् ॥ २२७॥

कंसादीन् निजघानाजौ दैत्यान् मानुषविग्रहान् ।

अयं लोकहितार्थाय प्रादुर्भावो महात्मनः ॥ २२८॥

( कल्क्यवतारः )

कल्की विष्णुयशा नाम भूयश्चोत्पत्स्यते हरिः ।

कलेर्युगान्ते सम्प्राप्ते धर्मे शिथिलतां गते ॥ २२९॥

पाषण्डिनां गणानां हि वधार्थं भरतर्षभ ।
धर्मस्य च विवृद्ध्यर्थं विप्राणां हितकाम्यया ॥ २३०॥

एते चान्ये च बहवो दिव्या देवगणैर्युताः ।
प्रादुर्भावाः पुराणेषु गीयन्ते ब्रह्मवादिभिः ॥ २३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

॥ ३५ ॥ अर्घाभिहरणपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[अस्मिन्नध्याये २३१॥ श्लोका ]

---

## ॥ षट्त्रिंशोऽध्यायः ॥

श्रीकृष्णावतारमहिमानुवर्णनम् ॥ १ ॥

---

वैशम्पायनः—

एवमुक्तोऽथ कौन्तेयस् ततः पौरवनन्दनः ।
आबभाषे पुनर्भीष्मं धर्मराजो युधिष्ठिरः ॥ १

युधिष्ठिरः—

भूय एव मनुष्येन्द्र उपेन्द्रस्य यशस्विनः ।
जन्म वृष्णिषु विज्ञातुम् इच्छामि वदतां वर ॥ २

यथैव भगवाञ्जातः क्षिताविह जनार्दनः ।
माधवेषु महाबुद्धिस् तन्मे ब्रूहि पितामह ॥ ३

यदर्थं च महातेजा गास्तु गोवृषणेक्षणः ।
ररक्ष कंसस्य वधाल्लोकानामभिरक्षिता ॥ ४

क्रीडता चैव यद्बाल्ये गोविन्देन विचेष्टितम् ।
तदा मतिमतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ ५

**वैशम्पायनः—**

एवमुक्तस्ततो भीष्मः केशवस्य महात्मनः ।
माधवेषु तदा जन्म कथयामास वीर्यवान् ॥ ६

**भीष्मः—**

हन्त ते कथयिष्यामि युधिष्ठिर यथातथम् ।
यतो नारायणस्येह जन्म वृष्णिषु कौरव ॥ ७

पुरा लोके महाराज वर्तमाने कृते युगे ।
आसीत् त्रैलोक्यविख्यातस् सङ्ग्रामस्तारकामयः ॥ ८

विरोचनो मयस्तारो वराहश्श्वेत एव च ।
लम्बः किशोरस्स्वर्भानुर् अरिष्टोऽथ क्षरश्च वै ॥ ९

विप्रचित्तिः प्रलम्बश्च वृत्रजम्भबलादयः ।
नमुचिः कालनेमिश्च प्रह्लाद इति विश्रुतः ॥ १०

एते चान्ये च बहवो दैत्यसङ्घास्सहस्रशः ।
नानाशस्त्रधरा राजन् नानाभूषणवाहनाः ॥ ११

देवतानामभिमुखास् तस्थुर्दैतेयदानवाः ॥ ११॥

देवास्तु युध्यमानास्ते दानवानभ्ययू रणे ॥ १२
आदित्या वसवो रुद्रास् साध्या विश्वे मरुद्गणाः ।
इन्द्रो यमश्च चन्द्रश्च वरुणोऽथ धनेश्वरः ॥ १३
अश्विनौ च महावीर्यौ ये चान्ये देवतागणाः ।
चक्रुर्युद्धं महाघोरं दानवैश्च यथाक्रमम् ॥ १४
युध्यमानास्समेयुश्च देवा दैतेयदानवैः ।
तद्युद्धमभवद्घोरं देवदानवसङ्कुलम् ॥ १५
ताभ्यां बलाभ्यां सञ्जज्ञे तुमुलो विग्रहस्तदा ।
तीक्ष्णैश्शस्त्रैः किरन्तोऽथ अभ्ययुर्देवदानवाः ॥ १६
अघ्नन् देवान् सगन्धर्वान् सयक्षोरगचारणान् ।
दुद्रुवुस्सम्परिश्रान्ताः क्षीणप्रहरणा रणे ॥ १७
ते वध्यमाना दैतेयैर् देवसङ्घास्तदा रणे ।
त्रातारं मनसा जग्मुर् देवं नारायणं प्रभुम् ॥ १८
एतस्मिन्नन्तरे तत्र जगाम हरिरीश्वरः ।
दीपयन् ज्योतिषा भूमिं शङ्खचक्रगदाधरः ॥ १९
तमागतं सुपर्णस्थं विष्णुं लोक[1]गुरुं तथा ।
दृष्ट्वा मुदा युतास्सर्वे भयं त्यक्त्वा रणे सुराः ॥ २०
चक्रुर्युद्धं पुनस्सर्वे देवा दैतेयदानवैः ॥ २०॥
तद्युद्धमभवद्घोरम् अचिन्त्यं रोमहर्षणम् ॥ २१

---

1. अ-ग—नमस्कृतम्

जघ्नुर्दैत्यान् रणे देवास् सर्वे शक्रपुरोगमाः ।
ते वध्यमाना त्रिबुधैर् दुद्रुवुर्दैत्यदानवाः ॥ २२

विद्रुतान् दानवान् दृष्ट्वा तदा भारत संयुगे ।
कालनेमिरिति ख्यातो दानवः प्रत्यदृश्यत ॥ २३

शतप्रहरणो घोरश् शतबाहुश्शताननः ।
शतशीर्षस्स्थितश्श्रीमाञ् छतशृङ्ग इवाचलः ॥ २४

भास्कराकारमकुटश् शिञ्जिताभरणाङ्गदः ।
[1]धूम्रकेशो हरिश्मश्रुर् निर्दष्टोष्ठपुटाननः ॥ २५

त्रैलोक्यान्तरविस्तारी धारयन् विपुलं वपुः ।
तर्जयन् वै रणे देवाञ् छादयन् वै दिशो दश ॥ २६

अभ्यधावत् सुसङ्क्रुद्धो व्यादितास्य इवान्तकः ॥ २६॥
ततश्शस्त्र[2]प्रपातैश्च देवान् धर्षितवान् रणे ॥ २७

अथाभ्ययुस्सुरान् सर्वान् पुनस्ते दैत्यदानवाः ।
आपीडयन् रणे क्रुद्धास् ततो देवान् युधिष्ठिर ॥ २८

ते वध्यमाना विबुधास् समरे कालनेमिना ।
दैत्यैश्चैव महाराज दुद्रुवुस्सहिता दिशः ॥ २९

विद्रुतान् विबुधान् दृष्ट्वा कालनेमिर्महासुरः ।

---

1. अ—धूम्रकेतुर्हरि । ख—धूमकेशो । ग—ताम्रकेशो
2. अ-क—प्रतापैश्च

इन्द्रं यमाग्निवरुणान् वायुं च धनदं रविम् ॥ ३०

एतांश्चान्यान् बलाज्जित्वा तेषां कार्याण्यवाप सः ॥ ३०॥

तान् सर्वांस्तरसा जित्वा कालनेमिर्महासुरः ।
ददर्श गगने विष्णुं सुपर्णस्थं महाद्युतिम् ॥ ३१॥

तं दृष्ट्वा क्रोधताम्राक्षस् तर्जयन्नभ्ययात् तदा ॥ ३२

स बाहुशतमुद्यम्य सर्वास्त्रग्रहणं रणे ।
रोषाद्भारत दैत्येन्द्रो विष्णोरुरसि पातयत् ॥ ३३

दैत्याश्च दानवाश्चैव सर्वे मयपुरोगमाः ।
स्वान्यायुधानि सङ्गृह्य सर्वे विष्णुमताडयन् ॥ ३४

स ताड्यमानोऽतिबलैर् दैत्यैस्सर्वायुधोद्यतैः ।
न चचाल हरिर्युद्धे तोयवर्षैरिवाचलः ॥ ३५

पुनरुद्यम्य सङ्क्रुद्धः कालनेमिर्दृढां गदाम् ।
जघान संयुगे राजन् स विष्णुं गरुडं च वै ॥ ३६

स दृष्ट्वा गरुडं श्रान्तं चक्रमुद्यम्य वै हरिः ।
शतं शिरांसि बाहूंश्च सोऽच्छिनत् कालनेमिनः ॥ ३७

जघानान्यांश्च तान् सर्वान् समरे दैत्यदानवान् ॥ ३७॥

तस्मिन् राजन् रणे दैत्यास् त्रय एव विनिस्सृताः ।
विरोचनो मयश्चैव स्वर्भानुश्च महासुराः ॥ ३८॥

सर्वानशेषान् हत्वा तु विष्णुर्वै दैत्यदानवान् ।
विबुधानामृषीणां च स्वानि स्थानानि वै ददौ ॥ ३९॥
दत्त्वा सुराणां सुप्रीतिं [1]प्राप्य सर्वाणि भारत ।
जगाम ब्रह्मणा सार्धं ब्रह्मलोकं तदा हरिः ॥ ४०॥
ब्रह्मलोकं प्रविश्याथ यत्र नारायणः प्रभुः ।
पौराणां [2]गुह्यसदनं दिव्यं [3]नारायणाश्रयम् ॥ ४१॥
सम्प्रविश्य तदा देवस् स्तूयमानो महर्षिभिः ।
सहस्रशीर्षो भूत्वाऽथ शयनायोपचक्रमे ॥ ४२॥
आदिदेवः पुराणात्मा निद्रावशमुपागतः ।
शेते सुखं सदा विष्णुर् मोहयञ्जगदव्ययः ॥ ४३॥
जग्मुस्तस्याथ वर्षाणि शयानस्य महात्मनः ।
षट्त्रिंशच्छतसाहस्रं मानुषेणेह सङ्ख्यया ॥ ४४॥
ततः कृतयुगत्रेताद्वापरान्ते बुबोध सः ॥ ४५
ब्रह्मादिभिस्सुरैश्चाथ स्तूयमानो महर्षिभिः ।
[4]उत्प्लुत्य शयनाद्विष्णुर् ब्रह्मणा विबुधैस्सह ॥ ४६
देवानां च हितार्थाय ययौ देवसभां प्रति ॥ ४६॥

---

1. अ—व्याप्तसर्वाणि । क—स्थाप्य धर्मांश्च
2. ग—रूपमास्थाय स्वं लोकं प्राप्य भास्वरम् ।
3. अ-क-ख-घ—नारायणाश्रमम् ।
4. अ-ग—उत्पत्य

मेरोश्शिखरविन्यस्तां ज्वलन्तीं तां शुभां सभाम् ।
विविशुस्तां सुरास्सर्वे ब्रह्मणा सह भारत ॥ ४७॥

जग्मुस्तत्र निषेदुस्ते सा निश्शब्दमभूत् तदा ।
तत्र भूमिरुवाचाथ खेदात् करुणभाषिणी ॥ ४८॥

भूमिः—

राज्ञां बलैर्बलवतां खिन्नाऽस्मि भृशपीडिता ।
नित्यं भारपरिश्रान्ता दुःखाज्जीवामि वै सुराः ॥ ४९॥

पुरे पुरे च नृपतिः कोटिसङ्ख्यैर्बलैर्वृतः ।
राष्ट्रे राष्ट्रे च शतशो ग्रामाः कुलसहस्रिणः ॥ ५०॥

भूमिपानां सहस्रैश्च तेषां च बलिनां बलैः ।
ग्रामायुतैश्च राष्ट्रैश्च अहं निर्विवरीकृता ॥ ५१॥
[1]केचिद्दैत्येषु चोत्पन्ना केचिद्राक्षसयोनिषु ॥ ५२

दैत्येशैर्बाध्यमानास्ताः प्रजा नित्यं दुरात्मभिः ।
तस्माद्धारयितुं शक्ता न शक्ष्यामि जनानहम् ॥ ५३

भीष्मः—

भूमेस्तद्वचनं श्रुत्वा देवो नारायणस्तदा ।
व्यादिश्य तान् सुरान् सर्वान् क्षितौ वस्तुं मनो दधे* ॥ ५४

यच्चक्रे भगवान् विष्णुर् वसुदेवकुलोद्वहः ।

---

1. क-ख-ग-ङ—कोशेषु इदमर्धं नास्ति
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

तत् तेऽहं नृप वक्ष्यामि शृणु सर्वमशेषतः ॥ ५५

वासुदेवस्य माहात्म्यं चरितं च महाद्युतेः ॥ ५५॥

हितार्थं सुरमर्त्यानां लोकानां हि हिताय च ।
यदा दिवि विभुस्तात न रेमे भगवानसौ ॥ ५६॥

ततो व्यादिश्य भूतानि भुवि भौमसुखावहः ।
निग्रहार्थाय दैत्यानां चोदयामास वै तदा ॥ ५७॥

मरुतश्च वसूंश्चैव सूर्याचन्द्रमसावुभौ ।
गन्धर्वाप्सरसश्चैव रुद्रादित्यांस्तथाऽश्विनौ ॥ ५८॥

जायध्वं मानुषे लोके सर्वभूतमहेश्वराः ।
जङ्गमानि विशालाक्षो ह्यात्मानं ह्यात्मनाऽसृजत् ॥ ५९॥

जायतामिति गोविन्दस् तिर्यग्योनिगतैरपि ।
तानि सर्वाणि सर्वज्ञस् ससुराणि सुरेश्वरः ॥ ६०॥

त एवमुक्ताः कृष्णेन सर्व एव दिवौकसः ।
दैत्यदानवहन्तारस् सम्भूता भुवनेश्वराः ॥ ६१॥

ययातिवंशजस्याथ वसुदेवस्य धीमतः ।
कुलं पुण्ययशःकर्म भेजे नारायणः प्रभुः ॥ ६२॥

आज्ञापयित्वा रत्यर्थम् अजायत यदोः कुले ॥ ६३

आत्मानमात्मना तात कृत्वा बहुविधं हरिः ।

रत्यर्थमेव गास्तास्तु ररक्ष पुरुषोत्तमः ॥ ६४
अजातशत्रो जातस्तु यथैष भुवि भूमिपः ।
कीर्त्यमानं मया तात निबोध भरतर्षभ* ॥ ६५
सागरास्समकम्पन्त मुदा चेलुश्च पर्वताः ।
जज्वलुश्चाग्नयश्शान्ता जायमाने जनार्दने ॥ ६६
शिवास्सम्प्रववुर्वाताः प्रशान्तमभवद्रजः ।
ज्योतींषि सम्प्रकाशन्ते जायमाने जनार्दने ॥ ६७
देवदुन्दुभयश्चापि सस्वनुर्भृशमम्बरे ।
अभ्यवर्षंस्तदाऽऽगम्य [1]देवताः पुष्पवृष्टिभिः ॥ ६८
गीर्भिर्मङ्गलयुक्ताभिर् अस्तुवन् मधुसूदनम् ।
उपतस्थुस्तदा प्रीताः प्रादुर्भावे महर्षयः ॥ ६९
ततस्तानभिसम्प्रेक्ष्य नारदप्रमुखानृषीन् ।
उपानृत्यन्नुपजगुर् गन्धर्वाप्सरसां गणाः ॥ ७०
उपतस्थे च गोविन्दं सहस्राक्षश्शचीपतिः ।
अभ्यभाषत तेजस्वी महर्षीन् पूजयंस्तदा ॥ ७१

इन्द्रः—

कृत्यानि देवकार्याणि कृत्वा लोकहिताय च ।
स्वलोकं लोककृद्देव पुनर्गच्छस्व तेजसा ॥ ७२

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
1. क—नारदं

भीष्मः—

इत्युक्त्वा मुनिभिस्सार्धं जगाम त्रिदिवेश्वरः ॥ ७२॥

अभ्यनुज्ञाय तान् सर्वान् छादयन् प्रकृतिं पराम् ॥ ७३

वसुदेवस्ततो जातं बालमादित्यसन्निभम् ।

नन्दगोपकुले राजन् भयात् प्रच्छादयद्धरिम् ॥ ७४

नन्दगोपकुले कृष्ण उवास बहुलास्समाः ॥ ७४॥

ततः कदाचित् सुप्तं तं शकटस्य त्वधश्शिशुम् ।

यशोदा सम्परित्यज्य जगाम यमुनां नदीम् ॥ ७५॥

शिशुलीलां ततः कुर्वन् स्वहस्तचरणौ क्षिपन् ।

रुरोद मधुरं कृष्णः पादावूर्ध्वं प्रसारयन् ॥ ७६॥

पादाङ्गुष्ठेन शकटं धारयन्नथ केशवः ।

[1]तत्राथैकेन पादेन पातयित्वा तथा शिशुः ॥ ७७॥

न्युब्जः पयोधराकाङ्क्षी चकार च रुरोद च ॥ ७८

[2]पातितं शकटं दृष्ट्वा भिन्नभाण्डघटीघटम् ।

[3]जनास्ते शिशुना तेन विस्मयं परमं ययुः ॥ ७९

प्रत्यक्षं शूरसेनानां दृश्यते महदद्भुतम् ॥ ७९॥

---

1. अ—दूरे निक्षिप्य शकटं भिन्नभाण्डघटाघटम् ।

2. अ—पातितं शकटं दृष्ट्वा भ्रष्टशक्त्यष्टितोमरौ ।
गतप्राणौ महाकायावसुरावीक्ष्य दुद्रुवुः ॥ [अधिकः पाठः]

3. अ—जनास्ततोपि सम्भ्रान्ता विस्मयं प्रतिपेदिरे ।

शयानेन [1]हतः पक्षी शिशुना तिग्मतेजसा ।
पूतना चापि निहता महाकाया महास्तनी ॥ ८०॥
[2]पश्यतां सर्वदेवानां वासुदेवेन भारत ॥ ८१
ततः काले महाराज संसक्तौ रामकेशवौ ।
विष्णुस्सङ्कर्षणश्चोभौ रिङ्गिणौ समपद्यताम् ॥ ८२
अन्योन्यकिरणग्रस्तौ चन्द्रसूर्याविवाम्बरे ।
विसर्पयेतां सर्वत्र सर्पभोगभुजौ तदा ॥ ८३
रेजतुः पांसुदिग्धाङ्गौ रामकृष्णौ तदा नृप ॥ ८३॥
क्वचिच्च जानुभिस्स्पृष्टौ क्रीडमानौ क्वचिद्वने ।
पिबन्तौ दधिकुल्याश्च मथ्यमाने च भारत ॥ ८४॥
ततस्स बालो गोविन्दो नवनीतं तदा क्षयम् ।
ग्रसमानस्तु तत्रायं गोपीभिर्ददृशेऽथ वै ॥ ८५॥
[3]दाम्नाऽथोलूखले कृष्णो गोपस्त्रीभिश्च बन्धितः ॥ ८६
तदाऽथ शिशुना तेन राजंस्तावर्जुनावुभौ ।
समूलविटपौ भग्नौ तदद्भुतमिवाभवत् ॥ ८७
[4]तत्रासुरौ महाकायौ गतप्राणौ बभूवतुः ॥ ८७॥

---

1. अ—हतौ यक्षि शिशुना निजतेजसा ।
2. अ—कोशे इदमर्धं नास्ति ।
3. अ—ततस्त्वसहमानास्ता विषमं गोपयोषितः ।
महतोलूखलेनैव दामभिस्तमबन्धयन् ॥ [अधिकः पाठः]
4. क-ग-ङ—कोशेषु इदमर्धं नास्ति

ततस्तौ बाल्यमुत्तीर्णौ कृष्णसङ्कर्षणावुभौ ।
तस्मिन्नेव व्रजस्थाने सप्तवर्षौ बभूवतुः ॥ ८८॥
नीलपीताम्बरधरौ पीतश्वेतानुलेपनौ ।
बभूवतुर्वत्सपालौ काकपक्षधरावुभौ ॥ ८९॥
पर्णवाद्यं श्रुतिसुखं वादयन्तौ वराननौ ।
शुशुभाते वनगतावुदीर्णाविव पन्नगौ ॥ ९०॥
मयूराङ्गजकर्णौ तौ पल्लवापीडधारिणौ ।
वनमालापरिक्षिप्तौ सालपोताविवोद्गतौ ॥ ९१॥
अरविन्दकृतापीडौ रज्जुयज्ञोपवीतिनौ ।
[1]शिक्यतुम्बधरौ वीरौ गोपवेणुप्रवादकौ ॥ ९२॥
क्वचिद्धसन्तावन्योन्यं क्रीडमानौ क्वचिद्वने ।
पर्णशय्यासु संसुप्तौ क्वचिन्निद्रान्तरैषिणौ ॥ ९३॥
तौ वत्सान् पालयन्तौ हि शोभयन्तौ महद्वनम् ।
चञ्चूर्यन्तौ रमन्तौ स्म राजन्नेवं तदा शुभौ ॥ ९४॥
ततो बृन्दावनं गत्वा वसुदेवसुतावुभौ ।
गोव्रजं तत्र कौन्तेय चारयन्तौ विजह्रतुः ॥ ९५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ २५ ॥ अर्घाभिहरणपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ९५॥ श्लोकाः]

---

1. क—सशिक्यतुम्बुरुकरौ

## ॥ सप्तत्रिंशोऽध्यायः ॥

कृष्णेन कालियमर्दनम् ॥ १ ॥ बलरामेण धेनुकासुरहननम् ॥ २ ॥ कृष्णेन अरिष्टासुरकंसादिहननम् ॥ ३ ॥ रामकृष्णयोर्विद्याभ्यासः ॥ ४ ॥ कृष्णेन गुरुदक्षिणात्वेन स्वेनोज्जीवितस्य पुत्रस्य समर्पणम् ॥ ५ ॥

---

भीष्मः—

ततः कदाचिद्गोविन्दो ज्येष्ठं सङ्कर्षणं विना ।
चचार तद्वनं रम्यं रम्यरूपो वराननः ॥ १

काकपक्षधरश्श्रीमान् श्यामः पद्मनिभेक्षणः ।
श्रीवत्सेनोरसा युक्तश् शशाङ्क इव लक्ष्मणा ॥ २

रज्जुयज्ञोपवीती स पीताम्बरधरो युवा ।
श्वेतगन्धेन लिप्ताङ्गो नीलकुञ्चितमूर्धजः ॥ ३

राजता बर्हिपत्रेण मन्दमारुतकम्पिना ।
कचिद्गायन् कचित् क्रीडन् कचिन्नृत्यन् कचिद्धसन् ॥ ४

गोपवेषस्स मधुरं गायन् वेणुं च वादयन् ।
प्रह्लादनार्थं तु गवां कचिद्वनगतो युवा ॥ ५

गोकुले मेघकाले तु चचार द्युतिमान् प्रभुः ।
बहुरम्येषु देशेषु वनस्य वनराजिषु ॥ ६

तासु कृष्णो मुदं लेभे क्रीडया भरतर्षभ ।
स कदाचिद्वने तस्मिन् गोभिस्सह परिव्रजन् ॥ ७

भाण्डीरं नाम दृष्ट्वाऽथ न्यग्रोधं केशवो महान् ।
[1]तस्य च्छायानिवासाय मतिं चक्रे तदा प्रभुः ॥ ८

स तत्र वयसा तुल्यैर् वत्सपालैस्सहाऽनघ ।
रेमे स दिवसान् कृष्णः पुरा स्वर्गपुरे यथा ॥ ९

तं क्रीडमानं गोपालाः कृष्णं भाण्डीरवासिनः ।
रमयन्ति स्म बहवो मान्यैः क्रीडनकैस्तदा ॥ १०

अन्ये स्म परिगायन्ति गोपा मुदितमानसाः ।
गोपालाः कृष्णमेवान्ये गायन्ति स्म वनप्रियाः ॥ ११

तेषां सङ्गायतामेव वादयामास केशवः ।
पर्णवाद्यान्तरे वेणुं [2]तुम्बं वीणां च तत्र वै ॥ १२

एवं क्रीडान्तरैः कृष्णो गोपालैर्विजहार सः ॥ १२॥

तेन बालेन कौन्तेय कृतं लोकहितं तदा ।
पश्यतां सर्वभूतानां वासुदेवेन भारत ॥ १३॥

ह्रदे नीपवने तत्र क्रीडितं नागमूर्धनि ॥ १४

शासयित्वा तु कालीयं सर्वलोकस्य पश्यतः ॥ १४॥

विजहार ततः कृष्णो बलदेवसहायवान् ॥ १५

धेनुको दारुणो दैत्यो राजन् रासभविग्रहः ।

---

1. अ—तस्य च्छाये मतिं चक्रे निवासाय तदा प्रभुः ।
   क—तच्छायायां मतिं चक्रे निवासाय
2. अ-क-ख-घ—तुम्बवीणां

तदा तालवने राजन् बलदेवेन वै हतः ॥ १६
ततः कदाचित् कौन्तेय रामकृष्णौ वनं गतौ ।
चारयन्तौ प्रवृद्धानि गोधनानि शुभाननौ ॥ १७
विहरन्तौ मुदा युक्तौ वीक्षमाणौ वनानि वै ।
क्ष्वेलयन्तौ प्रगायन्तौ विचिन्वन्तौ च पादपान् ॥ १८
नामभिर्व्याहरन्तौ च वत्सान् गाश्च परन्तपौ ।
चेरतुर्लोकसिद्धाभिः क्रीडाभिरपराजितौ ॥ १९
तौ देवौ मानुषीं दीक्षां वहन्तौ सुरपूजितौ ।
तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्वनम् ॥ २०
ततः कृष्णो महातेजास् तदा गत्वा तु गोव्रजम् ॥ २०॥
गिरियज्ञं तमेवैष प्रकृतं गोपदारकैः ।
बुभुजे पायसं शौरिर् ईश्वरस्सर्वभूतकृत् ॥ २१॥
तं दृष्ट्वा गोपकास्सर्वे कृष्णमेव समर्चयन् ।
पूज्यमानस्ततो गोपैर् दिव्यं वपुरधारयत् ॥ २२॥
धृतो गोवर्धनो नाम सप्ताहं [1]पर्वतस्तदा ।
शिशुना वासुदेवेन गवार्थमरिमर्दन ॥ २३॥
क्रीडमानस्तदा कृष्णः कृतवान् कर्म दुष्करम् ।
तदद्भुतमिवात्रासीत् सर्वलोकस्य भारत ॥ २४॥

1. अ—सर्वतो महान्। ख—पर्वतो महान्

देवदेवः क्षितिं गत्वा कृष्णं दृष्ट्वा मुदाऽन्वितः ।
गोविन्द इति तं ह्युक्त्वा अभिषिञ्चत् पुरन्दरः ॥ २५॥

इत्युक्त्वाऽऽश्लिष्य गोविन्दं पुरुहूतोऽभ्ययाद्दिवम् ॥ २६

अथारिष्ट इति ख्यातं दैत्यं वृषभविग्रहम् ।
जघान तरसा कृष्णः पशूनां हितकाम्यया ॥ २७

केशिनं नाम दैतेयं राजन् वै हयविग्रहम् ।
तथा वनगतं पार्थ गजायुतबलं हयम् ॥ २८

प्रहितं भोजपुत्रेण जघान पुरुषोत्तमः ॥ २८॥

आन्ध्रं मल्लं च चाणूरं निजघान महासुरम् ॥ २९

सुदामानममित्रघ्नं सर्वसैन्यपुरस्कृतम् ।
[1]बालरूपेण गोविन्दो निजघान च भारत ॥ ३०

बलदेवेन चायत्तस् समाजे मुष्टिको हतः ।
त्रासितश्च तदा कंसस् स हि कृष्णेन भारत ॥ ३१

ऐरावतं युयुत्सन्तं मातङ्गानामिवर्षभम् ।
कृष्णः कुवलयापीडं हतवांस्तस्य पश्यतः ॥ ३२

हत्वा कंसममित्रघ्नस् सर्वेषां पश्यतां तदा ।
अभिषिच्योग्रसेनं तं पित्रोः पादमवन्दत ॥ ३३

---

1 अ—गजरूपेण गोविन्दस्त्रासयामास भारत ।
क—वृकरूपेण गोविन्दं त्रासयानं तु भारत ।

एवमादीनि कर्माणि कृतवान् वै जनार्दनः ।
उवास कतिचित् तत्र दिनानि सहलायुधः* ॥ ३४

ततस्तौ जग्मतुस्तात गुरुं सान्दीपिनिं पुनः ॥ ३४॥

गुरुशुश्रूषया युक्तौ धर्मज्ञौ धर्मचारिणौ ।
व्रतमुग्रं महात्मानौ विचरन्ताव[1] तिष्ठताम् ॥ ३५॥

अहोरात्रचतुष्षष्ट्या षडङ्गं वेदमापतुः ॥ ३६

लेख्यं च गणितं चोभौ प्राप्नुतां यदुनन्दनौ ।
गान्धर्ववेदं वैद्यं च सकलं समवापतुः ॥ ३७

हस्तिशिक्षामश्वशिक्षां द्वादशाहेन चापतुः ।
तावुभौ जग्मतुर्वीरौ गुरुं सान्दीपिनिं पुनः ॥ ३८

धनुर्वेदचिकीर्षार्थं धर्मज्ञौ धर्मचारिणौ ॥ ३८॥

ताविष्वस्त्रवराचार्यम् अभिगम्य प्रणम्य च ।
तेन तौ सत्कृतौ राजन विचरन्ताववन्तिषु ॥ ३९॥

पञ्चाशद्भिरहोरात्रैर् दशाङ्गं सुप्रतिष्ठितम् ।
सरहस्यं धनुर्वेदं सकलं ताववापतुः ॥ ४०॥

दृष्ट्वा कृतास्त्रौ विप्रेन्द्रो गुर्वर्थे तावचोदयत् ॥ ४१

अयाचतार्थं गोविन्दं ततस्सान्दीपिनिर्विभुः ॥ ४१॥

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
1. अ-क-ख—वान्तषु

सान्दीपिनिः—

मम पुत्रस्समुद्रेऽस्मिंस् तिमिना चापवाहितः ।

पुत्रमानय भद्रं ते [1]भक्षितं तिमिना मम ॥ ४२॥

भीष्मः—

आर्ताय गुरवे तत्र प्रतिशुश्राव दुष्करम् ।

अशक्यं [2]त्रिषु लोकेषु कर्तुमन्येन केनचित् ॥ ४३॥

यश्च सान्दीपिनेः पुत्रं जघान भरतर्षभ ।

सोऽसुरस्समरे ताभ्यां [3]समुद्रे विनिपातितः ॥ ४४॥

ततस्सान्दीपिनेः पुत्रः प्रसादादमितौजसः ।

दीर्घकालं गतः प्रेतं पुनरासीच्छरीरवान् ॥ ४५॥

तदशक्यमचिन्त्यं च दृष्ट्वा सुमहदद्भुतम् ।

सर्वेषामेव भूतानां विस्मयस्समजायत ॥ ४६॥

ऐश्वर्याणि च सर्वाणि गवाश्वं च धनानि च ।

सर्वं तदुपजह्राते गुरवे रामकेशवौ ॥ ४७॥

[4]ततस्तं पुत्रमादाय ददौ च गुरवे प्रभुः ॥ ४८

तं दृष्ट्वा पुत्रमायान्तं सान्दीपिनिपुरे जनाः ।

1. अ-ग—कृतकृत्योऽस्मि तेन वै ।
2. अ-क—सर्वभूतेषु
3. क-ख-घ—पाताले । ग—पाताले विनिवेशितः
4. क-ग-ङ—कोशेषु श्लोकद्वयं नास्ति

अशक्यमेतन् सर्वेषाम् अचिन्त्यमिति मेनिरे ॥ ४९
कश्च नारायणादन्यश् चिन्तयेदिदमद्भुतम् ॥ ४९॥

गदापरिघयुद्धेषु सर्वास्त्रेषु च केशवः ।
परमां मुख्यतां प्राप्तस् सर्वलोकेषु विश्रुतः ॥ ५०॥

[1]कश्च नारायणादन्यस् सर्वरत्नविभूषितम् ।
रथमादित्यसङ्काशम् आतिष्ठेत शचीपतेः ॥ ५१॥

कस्य चाप्रतिमो यन्ता वज्रपाणेः प्रियस्सखा ।
मातलिस्सङ्गृहीता स्याद् अन्यत्र पुरुषोत्तमात् ॥ ५२॥

भोजराजतनूजोऽपि कंसस्तात युधिष्ठिर ।
अस्त्रज्ञाने बले वीर्ये कार्तवीर्यसमोऽभवत् ॥ ५३॥

तस्य भोजपतेः पुत्राद् भोजराज्यविवर्धनात् ।
उद्विजन्ते स्म राजानस् सुपर्णादिव पन्नगाः ॥ ५४॥

चित्रकार्मुकनिस्त्रिंशविमलप्रासयोधिनः ।
शतं शतसहस्राणि पदातीनां तु भारत ॥ ५५॥

अष्टौ शतसहस्राणि शूराणामनिवर्तिनाम् ।
अभवन् भोजराजस्य जाम्बूनदमयध्वजाः ॥ ५६॥

---

1. अ—ततः पार्थिवमायान्तं सहितं सर्वराजभिः ।
सरस्वत्यां जरासन्धम् अजयत् पुरुषोत्तमः ॥ [अधिकः पाठः]

स्फुरत्काञ्चनकक्ष्यास्तु गजास्तस्य युधिष्ठिर ॥ ५७

तावन्त्येव सहस्राणि गजानामनिवर्तिनाम् ॥ ५७॥

ते च पर्वतसङ्काशाश् चित्रध्वजपताकिनः ।
बभूवुर्भोजराजस्य नित्यं प्रमुदिता गजाः ॥ ५८॥

स्वलङ्कृतानां [1]शीघ्राणां करेणूनां युधिष्ठिर ।
अभवद्भोजराजस्य द्विस्तावद्धि महद्बलम् ॥ ५९॥

षोडशाश्वसहस्राणि किंशुकाभानि तस्य वै ॥ ६०

अपरस्तु महाव्यूहः किशोराणां युधिष्ठिर ।
आरोहवरसम्पन्नो दुर्धर्षः केनचिद्बलात् ॥ ६१

स च षोडशसाहस्रः कंसभ्रातृपुरस्सरः ।
सुनामा सदृशस्तेन स कंसं पर्यपालयत् ॥ ६२

य आसन् सर्ववर्णास्तु हयास्तस्य युधिष्ठिर ॥ ६२॥
सगणो मिश्रको नाम षष्टिसाहस्र उच्यते ॥ ६३

कंसरोषमहावेगां ध्वजानूपमहाद्रुमाम् ।
मत्तद्विपमहाग्राहां वैवस्वतवशानुगाम् ॥ ६४

शस्त्रजालमहाफेनां सादिवेगमहाजलाम् ।
गदापरिघपाठीनां नानाकवचशैवलाम् ॥ ६५

---

1. अ-ख-घ—दीप्तानां

रथनागमहावर्तां नानारुधिरकर्दमाम् ।
चित्रकार्मुककल्लोलां रथाश्वकलिलह्रदाम् ॥ ६६

महामृधनदीं घोरां योधावर्तननिस्वनाम् ।
को वा नारायणादन्यः कंसहन्ता युधिष्ठिर ॥ ६७

एष शक्ररथे तिष्ठंस् तान्यनीकानि भारत ।
व्यधमद्भोजपुत्रस्य महाभ्राणीव मारुतः ॥ ६८

तं सभास्थं सहामात्यं हत्वा कंसं सहान्वयम् ।
मानयामास मानार्हां देवकीं ससुहृद्गणाम् ॥ ६९

यशोदां रोहिणीं चैव अभिवाद्य पुनः पुनः ।
उग्रसेनं च राजानम् अभिषिच्य जनार्दनः ॥ ७०

अर्चितो यदुमुख्यैश्च भगवान् वासवानुजः ॥ ७०॥

ततः पार्थिवमायान्तं सहितं सर्वराजभिः ।
सरस्वत्यां जरासन्धम् अजयत् पुरुषोत्तमः ॥ ७१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ २५ ॥ अर्घाभिहरणपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये ७१॥ श्लोका·]

---

## ॥ अष्टात्रिंशोऽध्यायः ॥



श्रीकृष्णकृतनरकासुरवधकथनम् ॥ १ ॥



भीष्मः—

शूरसेनपुरं त्यक्त्वा सर्वयादवनन्दनः ।
द्वारकां भगवान् कृष्णः प्रत्यपद्यत केशवः ॥ १

प्रत्यपद्यत यानानि रत्नानि च बहूनि च ।
यथार्हं पुण्डरीकाक्षो [1]नैर्ऋतान् प्रतिपालयन् ॥ २

तत्र विघ्नं चरन्ति स्म दैतेयास्सह दानवैः ।
ताञ्जघान महाबाहुर् वरमत्तान् महासुरान् ॥ ३

स विघ्नमकरोत् तत्र नरको नाम नैर्ऋतः ।
त्रासनस्सुरसङ्घानां विदितो वः प्रभावतः ॥ ४

स भूम्यां मूर्तिलिङ्गस्थस् सर्वदेवासुरान्तकः ।
मानुषाणामृषीणां च प्रतीपमकरोत् तदा ॥ ५

त्वष्टुर्दुहितरं भौमः [2]कशेरुमगमत् तदा ।

1. अ—नैर्ऋतान् प्रत्यपादयत् । ङ—नैर्ऋताव् प्रत्यपद्यत ।
ख—नैर्ऋतान् प्रत्यपद्यत ।
2. क—कुशेशयगतस्तदा । ग—क्रीडारामगतां तदा ।

गजरूपेण जग्राह रुचिराङ्गीं चतुर्दशीम् ॥ ६
प्रमथ्य च जहारैतां हृत्वा च नरकोऽब्रवीत् ।
नष्टशोकभयाबाधः प्राग्ज्योतिषपतिस्तदा ॥ ७

नरकः—

यानि देवमनुष्येषु रत्नानि विविधानि च ।
बिभर्ति च मही कृत्स्ना सागरेषु च यद्वसु ॥ ८
अद्यप्रभृति तद्देवि सहितास्सर्वनैर्ऋताः ।
तवैवोपहरिष्यन्ति दैत्याश्च सह दानवैः ॥ ९

भीष्मः—

एवमुत्तमरत्नानि बहूनि विविधानि च ।
स जहार तदा भौमस् स्त्रीरत्नानि च भारत ॥ १०
गन्धर्वाणां च याः कन्या जहार नरको बलात् ॥ १०॥
याश्च देवमनुष्याणां सप्त चाप्सरसां गणाः ।
चतुर्दशसहस्राणां चैकविंशच्छतानि च ॥ ११॥
एकवेणीधरास्सर्वास् सतां मार्गमनुव्रताः ॥ १२
तासामन्तःपुरं भौमो ऽकारयन्मणिपर्वते ।
औदकायामदीनात्मा मुरस्य विषयं प्रति ॥ १३
ताश्च प्राग्ज्योतिषो राजा मुरस्य दश चात्मजाः ।
नैरृताश्च यथा मुख्याः पालयन्त उपासते ॥ १४

स एष तपसां पारे वरदत्तो महीसुतः ।
अदितिं धर्षयामास कुण्डलार्थं युधिष्ठिर ॥ १५
न घासुरगणैस्सर्वैस् सहितैः कर्म तत् पुरा ।
कृतपूर्वं महाघोरं यदकार्षीन्महासुरः ॥ १६
यं मही सुषुवे देवी यस्य प्राग्ज्योतिषं पुरम् ।
विषयान्तपालाश्चत्वारो यस्यासन् युद्धदुर्मदाः ॥ १७
आदेवयानमावृत्य पन्थानं पर्यवस्थिताः ।
त्रासनास्सुरसङ्घानां विरूपै राक्षसैस्सह ॥ १८
हयग्रीवो निसुम्भश्च घोरः पञ्चजनस्तथा ।
मुरः पुत्रसहस्रैश्च वरदत्तो महासुरः ॥ १९
तद्वधार्थं महाबाहुर् एष चक्रगदासिधृत् ।
जातो वृष्णिषु देवक्यां वासुदेवो जनार्दनः ॥ २०
तस्यास्य पुरुषेन्द्रस्य लोकप्रथिततेजसः ।
निवासो द्वारका तात विदितो वः [1]प्रधानतः ॥ २१
अतीव हि पुरी रम्या द्वारका वासवक्षयात् ।
[2]अति वै राजते पृथ्व्यां प्रत्यक्षं ते युधिष्ठिर ॥ २२
तस्मिन् देवपुरप्रख्ये सा सभा वृष्ण्युपाश्रया ।

---

1. ख-घ—प्रभावतः
2. अ—अतिवैरान्दमा वृद्धाः। घ-ख—अतीव राजते

या दाशार्हेति विख्यात: योजनायतविस्तृता ॥ २३

तत्र वृष्ण्यन्धकास्सर्वे रामकृष्णपुरोगमाः ।
लोकयात्रामिमां कृत्स्नां परिरक्षन्त आसते ॥ २४

तत्रासीनेषु सर्वेषु कदाचिद्भरतर्षभ ।
दिव्यगन्धा ववुर्वाताः कुसुमानां च वृष्टयः ॥ २५

ततस्सूर्यसहस्राभस् तेजोराशिर्महाद्भुतः ।
मुहूर्तमन्तरिक्षेऽभूत् ततो भूमौ प्रतिष्ठितः ॥ २६

मध्ये तु तेजसस्तस्य पाण्डरं गजमास्थितः ।
वृतो देवगणैस्सर्वैर् वासवः प्रत्यदृश्यत ॥ २७

रामकृष्णौ च राजा च वृष्ण्यन्धकगणैस्सह ।
उत्पत्य सहसा तस्मै नमस्कारमकुर्वत ॥ २८

सोऽवतीर्य गजात् तूर्णं परिष्वज्य जनार्दनम् ।
सस्वजे बलदेवं च राजानं च तमाहुकम् ॥ २९

वासुदेवोद्धवौ चैव विकद्रुं च महामतिम् ।
प्रद्युम्नसाम्बनिशठान् अनिरुद्धं ससात्यकिम् ॥ ३०

गदं सारणमक्रूरं कृतवर्माणमेव च ।
चारुदेष्णं सुदेष्णं च अन्यानपि यथोचितम् ॥ ३१

परिष्वज्य च दृष्ट्वा च भगवान् भूतभावनः ।

[1]वृष्ण्यन्धकमहामात्रान् परिष्वज्याथ वासवः ॥ ३२
प्रगृह्य पूजां तैर्दत्ताम् उवाचावनताननः ॥ ३२॥

इन्द्रः—
अदित्या चोदितः कृष्ण तव मात्राऽहमागतः ।
कुण्डलेऽपहृते तात भौमेन नरकेण च ॥ ३३॥
निर्देशशब्दवाच्यस्त्वं लोकेऽस्मिन् मधुसूदन ।
तस्माज्जहि महाभाग भूमिपुत्रं नरेश्वर ॥ ३४॥

भीष्मः—
तमुवाच महाबाहुः प्रीयमाणो जनार्दनः ।
निर्जित्य नरकं भौमम् आहरिष्यामि कुण्डले ॥ ३५॥
एवमुक्त्वा तु गोविन्दो राममेवाभ्यभाषत ।
प्रद्युम्नमनिरुद्धं च साम्बं चाप्रतिमं बले ॥ ३६॥
एतांश्चोक्त्वा तदा तत्र वासुदेवो महायशाः ।
अथारुह्य सुपर्णं वै शङ्खचक्रगदासिधृत् ॥ ३७॥
ययौ तदा हृषीकेशो देवानां हितकाम्यया ॥ ३८
तं प्रयान्तममित्रघ्नं देवास्सहपुरन्दराः ।
पृष्ठतोऽनुययुः प्रीतास् स्तुवन्तो विष्णुमच्युतम् ॥ ३९
सोऽग्र्यान् रक्षोगणान् हत्वा नरकस्य महासुरान् ।
क्षुरान्तान् मौरवान् पाशान् षट्सहस्रं ददर्श सः ॥ ४०

1. अ—कोशे इदमर्धं नास्ति

सञ्छिद्य पाशांस्त्वस्त्रेण मुरं हत्वा सहान्वयम् ।
शिलासङ्घानतिक्रम्य निसुम्भमवपोथयत् ॥ ४१

यस्सहस्रसमस्त्वेकस् सर्वान् देवानयोधयत् ।
तं जघान महावीर्यं हयग्रीवं महाबलम् ॥ ४२

[1]अपारतेजा दुर्धर्षस् सर्वयादवनन्दनः ।
मध्ये लोहितगङ्गायां भगवान् देवकीसुतः ॥ ४३

औदकायां विरूपाक्षं जघान भरतर्षभ ।
पञ्च पञ्चजनान् घोरान् नरकस्य महासुरान् ॥ ४४

ततः प्राग्ज्योतिषं नाम दीप्यमानमिव श्रिया ।
पुरमासादयामास तत्र युद्धमवर्तत ॥ ४५

महद्दैत्रासुरं युद्धं यद्वृत्तं भरतर्षभ ।
युद्धं [2]न स्यात् समं तेन लोकविस्मयकारकम् ॥ ४६

चक्रलाङ्गलसञ्छन्नाश् शक्तिखड्गहतास्तदा ।
निपेतुर्दानवास्तत्र समासाद्य जनार्दनम् ॥ ४७

अष्टौ शतसहस्राणि दानवानां परन्तप ।
निहत्य पुरुषव्याघ्रः पातालविवरं ययौ ॥ ४८

त्रासनं सुरसङ्घानां नरकं पुरुषोत्तमः ।

---

1. अ—अपरान्तेषु दुर्धर्ष। ग—अपरान्ते तु दुर्धर्ष
2. अ-ख-ग-घ—तत्स्यात्

योधयत्यतितेजस्वी मधुवन्मधुसूदनः ॥ ४९

तद्युद्धमभवद्घोरं तेन भौमेन भारत ।
कुण्डलार्थे सुरेशस्य नरकेण महात्मना ॥ ५०

मुहूर्तं लालयित्वाऽथ नरकं मधुसूदनः ।
प्रवृत्तचक्रं चक्रेण प्रममाथ [1]बलाद्बली ॥ ५१

चक्रप्रमथितं तस्य पपात सहसा भुवि ।
उत्तमाङ्गं हताङ्गस्य वृत्रे वज्रहते यथा ॥ ५२

भूमिस्तु पतितं दृष्ट्वा ते वै प्रादाच्च कुण्डले ।
प्रदाय च महाबाहुम् इदं वचनमब्रवीत् ॥ ५३

भूमिः—
सृष्टस्त्वयैव [2]मधुहंस् त्वयैव निहतः प्रभो ।
यथेच्छसि तथा क्रीडन् प्रजास्तस्यानुपालय ॥ ५४

श्रीभगवान्—
देवानां च मुनीनां च पितॄणां च महात्मनाम् ।
उद्वेजनीयो भूतानां ब्रह्मद्विट् पुरुषाधमः ॥ ५५

लोकद्विष्टस्सुतस्ते तु देवारिर्लोककण्टकः ।
सर्वलोकनमस्कार्याम् अदितिं बाधते बली ॥ ५६

कुण्डले दर्पसम्पूर्णस् ततोऽसौ निहतोऽसुरः ॥ ५६॥

1. ग-घ-ङ—महान् बली
2. अ-ग—नरकः

नैव मन्युस्त्वया कार्यो यत कृतं मयि भामिनि ।
[1]मत्प्रभावाच्च ते पुत्रो लब्धवान् गतिमुत्तमाम् । ५७॥
तस्माद्गच्छ महाभागे भारावतरणं कृतम्* ॥ ५८

भीष्मः—

निहत्य नरकं भौमं [2]सत्यभामासहायवान् ।
सहितो लोकपालैश्च ददर्श नरकालयम् ॥ ५९

अथास्य गृहमासाद्य नरकस्य यशस्विनः ।
ददर्श धनमक्षय्यं रत्नानि विविधानि च ॥ ६०

मणिमुक्ताप्रवालानि वैडूर्यविकृतानि च ।
[3]अश्मसारानर्कमणीन् विमलान् स्फाटिकानपि ॥ ६१

जाम्बूनदमयान्येव शातकुम्भमयानि च ।
प्रदीप्तज्वलनाभानि शीतरश्मिप्रभाणि च ॥ ६२

हिरण्यवर्णं रुचिरं श्वेतमभ्यन्तरं गृहम् ॥ ६२॥
[4]यदक्षयं गृहे दृष्टं नरकस्य धनं बहु ।
न हि राज्ञः कुबेरस्य तावद्धनसमुच्छ्रयः ॥ ६३॥

1. ग—त्वत्प्रतापाच्च । अ-क-ङ—त्वत्प्रभावाच्च
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
2. अ-क-ब—वासवेन पुरस्कृतः ।
3. क-ख-ग-घ-ङ—महासारान् नवमणीन् विम
4. ख-घ-ङ—यत्तदर्थं । क—यावदर्थंगृहे

दृष्टपूर्वः पुरा साक्षान्महेन्द्रसदनेष्वपि ॥ ६४

हते भौमे निसुम्भे च वासवस्सगणोऽब्रवीत् ।
दाशार्हपतिमासीनम् आहृत्य मणिकुण्डले ॥ ६५

इन्द्रः—

इमानि मणिरत्नानि विविधानि वसूनि च ॥ ६५॥

हेमसूत्रा महाकक्ष्यास् तोमरैर्वीर्यशालिनः ।
भीमरूपाश्च मातङ्गाः प्रवालविकृताः कुथाः ॥ ६६॥

विमलाभिः पताकाभिर् वासांसि विविधानि च ।
ते च विंशतिसाहस्रा द्विस्तावत्यः करेणवः ॥ ६७॥

[1]अष्टौ शतसहस्राणि देशजाश्चोत्तमा हयाः ।
गोभिश्चाविकृतैर्यानैः कामं तव जनार्दन ॥ ६८॥

[2]आविकानि च सूक्ष्माणि शयनान्यासनानि च ।
कामव्याहारिणश्चैव पक्षिणः प्रियदर्शनाः ॥ ६९॥

चन्दनागरुमिश्राणि यानानि विविधानि च ।
तच्च ते प्रापयिष्यामि वृष्ण्यावासमरिन्दम ॥ ७०॥

वसु यत् त्रिषु लोकेषु धर्मेणैवार्जितं त्वया ।
एतत् ते प्रापयिष्यामि वृष्ण्यावासमरिन्दम ॥ ७१॥

1. च—अष्टादशसहस्राणि 2. ङ—कोशे अर्धपञ्चकं नास्ति

भीष्मः—

देवगन्धर्वरत्नानि दैतेयासुरजानि च ।
यानि सन्तीह रत्नानि नरकस्य निवेशने ॥ ७२॥

एतत् तु गरुडे सर्वं क्षिप्रमारोप्य वासवः ।
दाशार्हपतिना सार्धम् उपायान्मणिपर्वतम् ॥ ७३॥

तत्र पुण्या ववुर्वाताः प्रभाश्चित्रास्समुज्ज्वलाः ।
प्रेक्षतां सुरसङ्घानां विस्मयस्समपद्यत ॥ ७४॥

त्रिदशा ऋषयश्चैव चन्द्रादित्यौ यथा दिवि ।
प्रभया तस्य शैलस्य निर्विशेषमिवाभवत् ॥ ७५॥

अनुज्ञातस्तु रामेण वासवेन च केशवः ।
प्रीयमाणो महाबाहुर् विवेश मणिपर्वतम् ॥ ७६॥

तत्र वैडूर्यवर्णानि ददर्श मधुसूदनः ।
सतोरणपताकानि द्वाराणि शरणानि च ॥ ७७॥

चित्रग्रथितमेघाभः प्रबभौ मणिपर्वतः ।
हेमचित्रपताकैश्च प्रासादैरुपशोभितः ॥ ७८॥

हर्म्याणि च विशालानि मणिसोपानवन्ति च ॥ ७९

तत्रस्था वरवर्णाभा ददृशुर्मधुसूदनम् ।
गन्धर्वसुरमुख्यानां प्रिया दुहितरस्तदा ॥ ८०

त्रिविष्टपसमे देशे तिष्ठन्तमपराजितम् ।

परिवव्रुर्महाबाहुम् एकवेणीधरास्स्त्रियः ॥ ८१
सर्वाः काषायवासिन्यस् सर्वाश्च नियतेन्द्रियाः ।
व्रतसन्तापजश्शोको नात्र काश्चिदपीडयत् ॥ ८२
अरजांसि च वासांसि बिभ्रत्यः कौशिकान्यपि ।
समेत्य यदुसिंहस्य चक्रुरस्याञ्जलिं स्त्रियः ॥ ८३
ऊचुश्चैनं हृषीकेशं सर्वास्ताः कमलेक्षणाः ॥ ८३॥

कन्यकाः—

नारदेन समाख्यातम् अस्माकं पुरुषोत्तम ।
आगमिष्यति गोविन्दस् सुरकार्यार्थसिद्धये ॥ ८४॥
सोऽसुरं नरकं हत्वा निसुम्भं मुरमेव च ।
भौमं च सपरीवारं हयग्रीवं च दानवम् ॥ ८५॥
तथा पञ्चजनं चैव प्राप्स्यते धनमक्षयम् ॥ ८६
सोऽचिरेणैव कालेन [1]युष्मन्मोक्ता भविष्यति ॥ ८६॥
एवमुक्त्वाऽगमद्धीमान् देवर्षिर्नारदस्तथा ॥ ८७
त्वां चिन्तयानास्सततं तपो घोरमुपास्महे ।
कालेऽतीते महाबाहुं कदा द्रक्ष्याम माधवम् ॥ ८८
इत्येवं हृदि सङ्कल्पं कृत्वा पुरुषसत्तम ।
तपश्चराम सततं रक्ष्यमाणा हि दानवैः ॥ ८९

1. अ-क-ग—युष्मद्भर्ता । ख—युष्मद्भक्ता

गान्धर्वेण विवाहेन विवाहं कुरु नः प्रियम् ॥ ८९॥

ततोऽस्मत्प्रियकामार्थं भगवान् मारुतोऽब्रवीत् ।
यथोक्तं नारदेनाद्य न चिरात् तद्भविष्यति ॥ ९०॥

भीष्मः—

तासां परमनारीणाम् ऋषभाक्षं पुरस्कृतम् ।
ददृशुर्देवगन्धर्वा गृष्टीनामिव [1]गोपतिम् ॥ ९१॥

तस्य चन्द्रोपमं वक्त्रम् उदीक्ष्य मुदितेन्द्रियाः ।
सम्प्रहृष्टा महाबाहुम् इदं वचनमब्रुवन् ॥ ९२॥

कन्यकाः—

सत्यं बत पुरा वायुर् इदमस्मानिहाब्रवीत् ।
सर्वभूतकृतज्ञश्च महर्षिरपि नारदः ॥ ९३॥

विष्णुर्नारायणो देवश् शङ्खचक्रगदासिधृत् ।
स भौमं नरकं हत्वा भर्ता वो भविता ह्यतः ॥ ९४॥

दिष्ट्या तस्यर्षिमुख्यस्य नारदस्य महात्मनः ।
[2]वचनं दर्शनादेव सत्यं भवितुमर्हति ॥ ९५॥

यत् प्रियं बत पश्याम वक्त्रं चन्द्रोपमं तु ते ।
दर्शनेन कृतार्थास्स्मो वयमद्य महात्मनः ॥ ९६॥

---

1. अ—वृष्टिभामिव गोपतिम् । क—गोष्पतिम्
2. अ—वचनादेव सत्यं नो भर्ता भवितुमर्हसि ।
ग—दिष्ट्या तद्वचनं कृष्ण सत्यं भवितुमर्हति ।

भीष्मः—

उवाच स यदुश्रेष्ठस् सर्वास्ता जातमन्मथाः ॥ ९७

श्रीभगवान्—

यथा ब्रूत विशालाक्ष्यस् तत् सर्वं वो भविष्यति ॥ ९७॥

भीष्मः—

[1]तानि सर्वाणि रत्नानि गमयित्वाऽथ किङ्करैः ।
स्त्रियश्च गमयित्वाऽथ देवर्षिनृपकन्यकाः ॥ ९८॥

वैनतेयभुजे कृष्णो मणिपर्वतमुत्तमम् ।
क्षिप्रमारोपयाञ्चक्रे भगवान् देवकीसुतः ॥ ९९॥

सपक्षिगणमातङ्गं सव्यालमृगपन्नगम् ।
शाखामृगगणैर्जुष्टं सप्रस्तरशिलातलम् ॥ १००॥

न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितम् ।
सप्रपातमहासानुं विचित्रशिखिसङ्कुलम् ॥ १०१॥

तं महेन्द्रानुजश्शौरिश् चकार गरुडोपरि ।
पश्यतां सर्वभूतानाम् उत्पाट्य मणिपर्वतम् ॥ १०२॥

उपेन्द्रं बलदेवं च वासवं च महाबलम् ।
तं च रत्नौघमतुलं [2]पर्वतं च महाबलः ॥ १०३॥

वरुणस्यामृतं दिव्यं छत्रं चन्द्रोपमं शुभम् ॥ १०४

1. क—ततस्ता गरुडे सर्वास्सरत्नधनसञ्चयाः ।
2. अ-ग-घ—कुण्डले रुचिरप्रभे ।

स्वपक्षबलविक्षेपैर् महाद्रिशिखरोपमः ।
दिक्षु सर्वासु संरावं स चक्रे गरुडो वहन् ॥ १०५
आरुजन् पर्वताग्राणि पादपांश्च समुत्क्षिपन् ।
सञ्जहार महाभ्राणि वैश्वानरपथं गतः ॥ १०६
ग्रहनक्षत्रताराणां [1]सप्तर्षीणां स्वतेजसा ।
प्रभाजालमतिक्रम्य चन्द्रसूर्यपथं ययौ ॥ १०७
मेरोश्शिखरमासाद्य मध्यमं मधुसूदनः ।
देवस्थानानि सर्वाणि ददर्श भरतर्षभ ॥ १०८
विश्वेषां मरुतां चैव साध्यानां च युधिष्ठिर ।
भ्राजमानान्यतिक्रम्य [2]अश्विनोश्च परन्तप ॥ १०९
प्राप्य पुण्यतमं स्थानं देवलोकमरिन्दमः ।
शक्रसद्म समासाद्य चावरुह्य जनार्दनः ॥ ११०
सोऽभिवाद्यादितेः पादावर्चितस्सर्वदैवतैः ।
ब्रह्मदक्षपुरोगैश्च प्रजापतिभिरेव च ॥ १११
अदितेः कुण्डले दिव्ये ददावथ तदा विभुः ।
रत्नानि च परार्ध्याणि रामेण सह केशवः ॥ ११२
प्रतिगृह्य च तन् सर्वम् अदितिर्वासवानुजम् ।

---

1. अ-क—सप्तर्षिगणतेजसाम्
2. अ—अश्विनौ च परन्तपः। ख-ग—अर्चितस्सर्वदैवतैः।
   घ—अश्विनौ च परन्तप

पूजयामास दाशार्हं रामं च विगतज्वरा ॥ ११३

शची महेन्द्रमहिषी कृष्णस्य महिषीं तदा ।
सत्यभामां तु सङ्गृह्य अदित्यै वै न्यवेदयत् ॥ ११४

सा तस्यास्सत्यभामायाः कृष्णप्रियचिकीर्षया ।
वरं प्राददेवमाता सत्यायै विगतज्वरा ॥ ११५

अदितिः—

जरां न यास्यसि वधु यावद्वै कृष्णमानुषम् ।
सर्वगन्धगुणोपेता भविष्यसि वरानने ॥ ११६

भीष्मः—

[1]विहृत्य सत्यभामा वै सह शच्या सुमध्यमा ।
शच्याऽपि समनुज्ञाता ययौ कृष्णनिवेशनम् ॥ ११७

सम्पूज्यमानस्त्रिदशैर् महर्षिगणसेवितः ।
द्वारकां प्रययौ कृष्णो देवलोकादरिन्दमः ॥ ११८

सोऽतिपत्य महाबाहुर् दीर्घमध्वानमच्युतः ।
वर्धमानपुरद्वारम् आससाद पुरोत्तमम् ॥ ११९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

॥ २५ ॥ अर्घाभिहरणपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[अस्मिन्नध्याये ११९ श्लोकाः]

---

1. अ—विसृष्टा सत्यभामा वै पौलोम्या च सुमध्यमा ।

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

द्वारकावर्णनम् ॥ १ ॥ रुक्मिणीसत्यभामादिगृहवर्णनम् ॥ २ ॥ रामकृष्णयोर्द्वारकाप्रवेशः ॥ ३ ॥

भीष्मः—

तां पुरीं द्वारकां दृष्ट्वा विभुर्नारायणो हरिः ।
हृष्टस्सर्वार्थसम्पन्नां प्रवेष्टुमुपचक्रमे ॥ १

सोऽपश्यद्वृक्षषण्डांश्च रम्यानारामजान् बहून् ।
समन्ततो द्वारवत्यां नानापुष्पफलान्वितान् ॥ २

अर्कचन्द्रप्रतीकाशैर् मेरुकूटनिभैर्गृहैः ।
[1]द्वारका रचिता रम्यैस् सुकृता विश्वकर्मणा ॥ ३

पद्मषण्डाकुलाभिश्च [2]हंससेवितवारिभिः ।
गङ्गासिन्धुप्रकाशाभिः परिघाभिरलङ्कृता ॥ ४

प्राकारेणार्कवर्णेन पाण्डरेण विराजिता ।
[3]वियन्मूर्ध्नि निविष्टेन द्यौरिवाभ्रपरिच्छदा ॥ ५

नन्दनप्रतिमैश्चापि मिश्रकप्रतिमैर्वनैः ।

1. अ—द्वारकामाचितां रम्यैस् सुकृतां विश्वकर्मणा ।
क—द्वारकामाचितां रम्यां सुकृतां ।
ख-घ—द्वारकामर्चितां काम्यैस् सुकृतां
2. ङ—हंसकारण्डवासिभिः
3. अ—दिवि मूर्ध्नि । क—मेरुमूर्ध्नि । ख-घ—यस्य मूर्ध्नि

भाति चैत्ररथं दिव्यं पितामहवनं यथा ॥ ६

वैभ्राजप्रतिमैश्चैव सर्वर्तुकुसुमोत्कटैः ।
भाति तारापरिक्षिप्ता द्वारका द्यौरिवाम्बरे ॥ ७

भाति रैवतकश्शैलो [1]रम्यसानुर्महाजिरा ।
पूर्वस्यां दिशि रम्यायां द्वारकायां विभूषणम् ॥ ८

दक्षिणस्यां लतावेष्टः पञ्चवर्णो विराजते ।
इन्द्रकेतुप्रतीकाशः पश्चिमां दिशमाश्रितः ॥ ९

सुकक्षो राजतश्शैलश्चित्रपुष्पमहावनः ।
उत्तरस्यां दिशि तथा वेणुमन्तो विराजते ॥ १०

मन्दराद्रिप्रतीकाशः पाण्डरः पाण्डवर्षभ ॥ १०॥

चित्रकम्बलवर्णाभं पाञ्चजन्यवनं तथा ।
सर्वर्तुकवनं चैव भाति रैवतकं प्रति ॥ ११॥

लतावेष्टं समन्तात् तु मेरुप्रभवनं महत् ।
भाति तालवनं चैव पुष्पकं [2]पुण्डरीकवत् ॥ १२॥

सुकक्षं परिवार्यैनं चित्रपुष्पं महावनम् ।
शतपत्रवनं चैव करवीरकुसुम्भि च ॥ १३॥

भाति चैत्ररथं चैव नन्दनं च महावनम् ।

---

1. अ—रत्नसानुशुभाचितः। ख-घ—महागिरिः
2. ख-ग-घ-ङ—पुण्डरीकि च

रमणं भावनं चैव वेणुमन्तं समन्ततः ॥ १४॥

भाति पुष्करिणी रम्या पूर्वस्यां दिशि भारत ।
धनुश्शतपरीणाहा केशवस्य महात्मनः ॥ १५॥

महापुरीं द्वारवतीं पञ्चाशद्भिर्मुखैर्युताम् ।
प्रविष्टो द्वारकां रम्यां भासयन्तीं समन्ततः ॥ १६॥

अप्रमेयां महोत्सेधां महागाधपरिप्लवाम् ।
प्रासादवरसम्पन्नां श्वेतप्रासादशालिनीम् ॥ १७॥

तीक्ष्णयन्त्रशतघ्नीभिर् यन्त्रजालैस्समन्विताम् ।
आयसैश्च महाचक्रैर् ददर्श द्वारकां पुरीम् ॥ १८॥

अष्टौ रथसहस्राणि प्राकारे किङ्किणीकिनः ।
समुच्छ्रितपताकानि यथा देवपुरे तथा ॥ १९॥

अष्टयोजनविस्तीर्णाम् अचलां द्वादशायताम् ।
द्विगुणोपनिवेशां च ददर्श द्वारकां पुरीम् ॥ २०॥

अष्टमार्गां महाकक्ष्यां महाषोडशचत्वराम् ।
एवं मार्गपरिक्षिप्तां साक्षादुशनसा कृताम् ॥ २१॥

व्यूहानामन्तरा मार्गास् सप्त चैव महापथाः ॥ २२

तत्र सा विहिता साक्षान्नगरी विश्वकर्मणा ।
काञ्चनैर्मणिसोपानैर् उपेता जनहर्षिणी ॥ २३

गीतघोषमहाघोषैः [1]प्रासादप्रवरैश्शुभा ॥ २३॥

तस्मिन् पुरवरश्रेष्ठे दाशार्हाणां यशस्विनाम् ।
वेश्मानि जहृषे दृष्ट्वा भगवान् पाकशासनः ॥ २४॥

समुच्छ्रितपताकानि पारिप्लवनिभानि च ।
काञ्चनाभानि भास्वन्ति मेरुकूटनिभानि च ॥ २५॥

सुधापाण्डरशृङ्गैश्च शातकुम्भपरिच्छदैः ।
रत्नसानुगुहाशृङ्गैस् सर्वरत्नविभूषितैः ॥ २६॥

सहर्म्यैस्सार्धचन्द्रैश्च सनिर्यूहैस्सपञ्जरैः ।
सयन्त्रगृहसम्बाधैस् सधातुभिरिवाद्रिभिः ॥ २७॥

मणिकाञ्चन[2]भौमैश्च सुधामृष्टतलैस्तथा ।
जाम्बूनदमयैर्द्वारैर् वैडूर्यविकृतार्गलैः ॥ २८॥

सर्वर्तुसुखसंस्पर्शैर् महाधनपरिच्छदैः ।
रम्यसानुगुहाशृङ्गैर् विचित्रैरिव पर्वतैः ॥ २९॥

पञ्चवर्णसुवर्णैश्च पुष्पवृष्टिसमप्रभैः ।
तुल्यपर्जन्यनिर्घोषैर् नानावर्णैरिवाम्बुदैः ॥ ३०॥

महेन्द्रशिखरप्रख्यैर् विहितैर्विश्वकर्मणा ।
आलिखद्भिरिवाकाशम् अतिचन्द्रार्कभास्वरैः । ३१॥

---

1. अ-क—प्रासादवरचत्वरैः । ख-घ—प्रासादगृहपाटलैः ।
2. ख-घ—भित्तीभिस्सुधामृष्टकुड्यैस्तथा

तैर्दाशार्हमहाभागैर् बभासे भवनह्रदैः ।
चण्डनागाकुलैर्घोरैर् ह्रदैर्भोगवती यथा ॥ ३२॥

कृष्णध्वजोपवाह्यैश्च दाशार्हायुधरोहितैः ।
वृष्णिमत्तमयूरैश्च स्त्रीसहस्रप्रजाकुलैः ॥ ३३॥

वासुदेवेन्द्रपर्जन्यैर् गृहमेघैरलङ्कृता ।
ददृशे द्वारकाऽतीव मेघैर्द्यौरिव संवृता ॥ ३४॥

साक्षाद्भगवतो वेश्म विहितं विश्वकर्मणा ।
ददृशुर्देवदेवस्य चतुर्योजनमायतम् ॥ ३५॥

तावदेव च विस्तीर्णम् अप्रमेयं महाधनैः ।
प्रासादवरसम्पन्नं युक्तं जगतिपर्वतैः ॥ ३६॥

यं चकार महाबाहुस् त्वष्टा वासवचोदितः ।
प्रासादं पद्मनाभस्य सर्वतो योजनायतम् ॥ ३७॥

मेरोरिव गिरेश्शृङ्गम् उच्छ्रितं काञ्चनायुतम् ।
रुक्मिण्याः प्रवरो वासो विहितस्सुमहात्मना ॥ ३८॥

सत्यभामा पुनर्वेश्म सदा वसति पाण्डरम् ।
विचित्रमणिसोपानं यं विदुश्शीतवानिति ॥ ३९॥

विमलादित्यवर्णाभिः पताकाभिरलङ्कृतम् ।
[1]व्यक्तबद्धं वनोद्देशे चतुर्दिशिमहाध्वजम् ॥ ४०॥

1. अ—व्यक्तं बद्धं वनोद्देशैश्चतुर्दैशे महाध्वजैः ।
क—व्यक्तसर्जवनोपेतः चतुर्दशमहाध्वजः ।

स च प्रासादमुख्योऽत्र जाम्बवत्या विभूषितः ।
प्रभया भूषणैश्चित्रैस् त्रैलोक्यमिव भासयन् ॥ ४१॥

यस्तु पाण्डरवर्णाभस् तयोरन्तरमाश्रितः ।
विश्वकर्माकरोदेनं कैलासशिखरोपमम् ॥ ४२॥

जाम्बूनदप्रदीप्ताग्रः प्रदीप्तज्वलनोपमः ।
[1]सागरप्रतिमोऽतिष्ठन्मेरुरित्यभिविश्रुतः ॥ ४३॥

तस्मिन् गान्धारराजस्य दुहिता कुलशालिनी ।
सुकेशी नाम विख्याता केशवेन निवेशिता ॥ ४४॥

पद्मकूट इति ख्यातः पद्मवर्णो महाप्रभः ।
[2]सुप्रभाया महाबाहो निवासः परमार्चितः ॥ ४५॥

यस्तु सूर्यप्रभो नाम प्रासादवर उच्यते ।
लक्ष्मणायाः कुरुश्रेष्ठ स दत्तश्शार्ङ्गधन्वना ॥ ४६॥

वैडूर्यवरवर्णाभः प्रासादो हरितप्रभः ।
[3]सेतुजालाभिरत्रैव तत्रैव च निवेशिता ॥ ४७॥

यं विदुस्सर्वभूतानि हरिरित्येव भारत ।
स मित्रविन्दया वासो देवर्षिगणपूजितः ॥ ४८॥

---

1. अ—कोशे इदमर्धं नास्ति
2. अ—सुस्मिताया महाबाहो हासस्स परमोच्छ्रितः ।
 क—सुभीमाया । ख-घ—स भामाया
3. क-ख-ग-घ-ङ—कोशेषु इदमर्धं नास्ति

महिष्या वासुदेवस्य भूषणं सर्ववेश्मनाम् ॥ ४९

यस्तु प्रासादमुख्योऽत्र विहितस्सर्वशिल्पिभिः ।
अतीव रम्यस्सोऽप्यत्र प्रहसन्निव तिष्ठति ॥ ५०

सुदत्तायास्सुवासस्तु पूजितस्सर्वशिल्पिभिः ।
महिष्या वासुदेवस्य केतुमानिति विश्रुतः ॥ ५१

प्रासादो विरजो नाम विरजस्को महात्मनः ।
उपस्थानगृहं तात केशवस्य महात्मनः ॥ ५२

यस्तु प्रासादमुख्योऽत्र यं त्वष्टा व्यदधात् स्वयं ।
योजनायतविष्कम्भं सर्वरत्नमयं विभोः ॥ ५३

तेषां तु विहितास्सर्वे रुक्मदण्डाः पताकिनः ।
सदने वासुदेवस्य मार्गसञ्जनना ध्वजाः ॥ ५४

घण्टाजालानि तत्रैव सर्वेषां च निवेशने ।
आहृत्य यदुसिंहेन वैजयन्त्यचलो महान् ॥ ५५

हंसकूटस्य यच्छृङ्गं इन्द्रद्युम्नसरो महत् ।
षष्टितालसमुत्सेधम् अर्धयोजनविस्तृतम् ॥ ५६

सकिन्नरमहानादं तदप्यमिततेजसः ।
पश्यतां सर्वभूतानां त्रिषु लोकेषु विश्रुतम् ॥ ५७

आदित्यपथगं यत् तन्मेरोश्शिखरमुत्तमम् ।

जाम्बूनदमयं दिव्यं त्रिषु लोकेषु विश्रुतम् ॥ ५८
तदप्युत्पाट्य कृच्छ्रेण स्वं निवेशनमाहृतम् ।
भ्राजमानं पुरा तत्र सर्वौषधिविभूषितम् ॥ ५९
यमिन्द्रभवनाच्छौरिर् आजहार परन्तपः ।
पारिजातस्स तत्रैव केशवेन निवेशितः ॥ ६०
लेपहस्तशतैर्जुष्टो विमानैश्च हिरण्मयैः ।
विहिता वासुदेवेन ब्रह्मस्थलमहाद्रुमाः ॥ ६१
सालतालाश्वकर्णाश्च शतशाखाश्च [1]रोहिणाः ।
भल्लातककपित्थाश्च [2]चन्द्रवृक्षाश्च चम्पकाः ॥ ६२
खर्जूराः केतकाश्चैव समन्तात् परिरोपिताः ॥ ६२॥
पद्माकुलजलोपेता रक्तास्सौगन्धिकोत्पलाः ।
मणिमौक्तिकवालुकाः पुष्करिण्यस्सरांसि च ॥ ६३॥
तासां परमकूलानि शोभयन्ति महाद्रुमाः ॥ ६४
ये च हैमवता वृक्षा ये च नन्दनजास्तथा ।
आहृत्य यदुसिंहेन तेऽपि तत्र निवेशिताः ॥ ६५
रक्तपीतारुणप्रख्यास् सितपुष्पाश्च पादपाः ।
सर्वर्तुफलपूर्णास्ते तेषु काननसन्धिषु ॥ ६६

1. अ—शोभिताः । क—रोहिणः
2. अ-क—इन्द्र । ख-च—चन्द्रशाखाश्च

सहस्रपत्रपद्माश्च मन्दाराश्च सहस्रशः ।
अशोकाः कर्णिकाराश्च तिलका नागमल्लिकाः ॥ ६७

[1]कुरवा नागपुष्पाश्च चम्पकास्तृणगुल्मकाः ।
सप्तपर्णाः कदम्बाश्च नीपाः कुरवकास्तथा ॥ ६८

केतक्यः केसराश्चैव हिन्तालतलताटकाः ।
[2]तालाः प्रियङ्गुवकुलाः पिण्डिका बीजपूरकाः ॥ ६९

द्राक्षामलकखर्जूरा मृद्वीका जम्बुकास्तथा ।
आम्राः पनसवृक्षाश्च अङ्कोलास्तिलतिन्दुकाः ॥ ७०

लिकुचाम्रातकाश्चैव क्षीरिका कण्टकी तथा ।

नालिकेरेङ्गुदाश्चैव उत्क्रोशकवनानि च ॥ ७१
वनानि च कदल्याश्च जातिमल्लिकपाटलाः ॥ ७१॥

[3]भल्लातककपित्थाश्च तैतभा वन्धुजीवकाः ।
[4]प्रियङ्गुशोककाश्मर्यः प्राचीनाश्चैव सर्वशः ॥ ७२॥

प्रियङ्गुवदरीभिश्च यवैस्स्पन्दनचन्दनैः ।

---

1 अ—तूर्यंगा नागपुष्पाश्च चम्पकासितमल्लिकाः ।
क—कुब्जाका नागवृक्षाश्च चम्पकास्तृणचुल्लिकाः

2. अ—लताः प्रलम्बा वकुलाः पिण्डिमा बीजपूरकाः । क—दाडिमा

3. अ—कुमुदोत्पलपूर्णाश्च वाप्यःकूपास्सहस्रशः ।
[अधिकः पाठः]

4. अ-ख-घ—प्रियालाशोक

[1]शमीबिल्वपलाशैश्च पाटलावटापिप्पलैः ॥ ७३॥
उदुम्बरैश्च द्विदलैः पालाङ्कैः पारिभद्रकैः ।
इन्द्रवृक्षार्जुनैश्चैव अश्वत्थैश्चिरबिल्वकैः ॥ ७४॥
सौभञ्जनकवृक्षैश्च भल्लटैरश्वसाह्वयैः ।
सर्जैस्ताम्बूलवल्लीभिर् लवङ्गैः क्रमुकैस्तथा ॥ ७५॥
वंशैश्च विविधैस्तत्र समन्तात् परिरोपितैः ॥ ७६
[2]ये च नन्दनजा वृक्षा ये च चैत्ररथे वने ।
सर्वे ते यदुनाथेन समन्तात् परिरोपिताः ॥ ७७
[3]कुमुदोत्पलपूर्णाश्च वाप्यः कूपास्सहस्रशः ।
समाकुलमहावाप्यः पीता लोहितवालुकाः ॥ ७८
[4]तस्मिन् गृहवने नद्यः प्रसन्नसलिलह्रदाः ।
फुल्लोत्पलजलोपेता नानाद्रुमसमाकुलाः ॥ ७९
[5]तस्मिन् गृहवरे नद्यो मणिशर्करवालुकाः ।
मत्तबर्हिणसङ्घाश्च कोकिलाश्च मदोद्वहाः ॥ ८०
[6]बभूवुः परमोपेतास् सर्वे जगतिपर्वताः ॥ ८०॥

1. अ—शमीपीलुपलाशैश्च पलाशधवबिल्वकैः ।
क—पीलुपलाशैश्च लवङ्गवट ।
2. अ—कोशे इदमर्धद्वयं नास्ति 3. अ—कोशे इदमर्धं नास्ति
4. अ—कोशे इदमर्धद्वयं नास्ति 5. क—कोशे इदमर्धं नास्ति
6. अ—चकोरनकुला यूथः पोलिणश्शुकशारिकाः । [अधिकः पाठः]

तत्रैव गजयूथानि तत्र गोमहिषास्तथा ।
निवासाश्च कृतास्तत्र वराहमृगपक्षिणाम् ॥ ८१॥
विश्वकर्मकृतश्शैलः प्राकारस्तस्य वेश्मनः ।
व्यक्तकिष्कुशतोद्यामस् सुधाकरसमप्रभः ॥ ८२॥
तेन ते च महाशैलास् सरितश्च सरांसि च ।
परिक्षिप्तानि हर्म्यस्य वनान्युपवनानि च ॥ ८३॥
एवं तच्छिल्पिवर्येण विहितं विश्वकर्मणा ।
प्रविशन्नेव गोविन्दो ददर्श परितो मुहुः ॥ ८४॥
मुमुदे विश्वकर्माणं प्राञ्जलिं प्रणताननम् ।
इन्द्रस्सहामरैश्श्रीमांस् तत्र तत्र विलोकयत् * ॥ ८५॥
एवमालोकयाञ्चक्रुर् द्वारकामृषभास्त्रयः ।
उपेन्द्रबलदेवौ च वासवश्च महायशाः ॥ ८६॥
ततस्तं पाण्डरं शौरिर् मूर्ध्नि तिष्ठन् गरुत्मतः ।
प्रीतश्शङ्खमुपादध्मौ विद्विषां रोमहर्षणम् ॥ ८७॥
तस्य शङ्खस्य शब्देन सागरश्चुक्षुभे भृशम् ।
ररास च नभस्सर्वं तच्चित्रमभवत् तदा ॥ ८८॥
पाञ्चजन्यस्य निर्घोषं निशम्य कुकुरान्धकाः ।
विशोकास्समपद्यन्त गरुडस्य च दर्शनात् ॥ ८९॥
शङ्खचक्रगदापाणिं सुपर्णशिरसि स्थितम् ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

दृष्ट्वा जहृषिरे कृष्णं भास्करोदयतेजसम् ॥ ९०॥
ततस्तूर्यप्रणादश्च भेरीणां च महास्वनः ।
सिंहनादश्च सञ्जज्ञे सर्वेषां पुरवासिनाम् ॥ ९१॥
ततस्ते सर्वदाशार्हास् सर्वे च कुकुरान्धकाः ।
प्रीयमाणास्समाजग्मुर् आलोक्य मधुसूदनम् ॥ ९२॥
[1]वासुदेवं पुरस्कृत्य वेणुशङ्खरवैस्सह ।
उग्रसेनो ययौ राजा वासुदेवनिवेशनम् ॥ ९३॥
आनन्दितुं पर्यचरन् स्वेषु वेश्मसु देवकी ।
रोहिणी च [2]यथोद्देशम् आहुकस्य च यास्स्त्रियः ॥ ९४॥
हता ब्रह्मद्विषस्सर्वे जयन्त्यन्धकवृष्णयः ।
एवमुक्तस्सह स्त्रीभिर् अक्षतैर्मधुसूदनः ॥ ९५॥
ततश्शौरिस्सुपर्णेन स्वं निवेशनमभ्ययात् ।
चकाराथ यथोद्देशम् ईश्वरो मणिपर्वतम् ॥ ९६॥
ततो धनानि रत्नानि सभायां मधुसूदनः ।
निधाय पुण्डरीकाक्षः पितुर्दर्शनलालसः ॥ ९७॥
ततस्सान्दीपिनिं [3]पूर्वम् उपस्पृष्ट्वा महायशाः ।

1. अ—वसुदेवं
2. ख-च—यदा देशं
3. अ—कोशे-पूर्वं ब्राह्मणानां च भारत ।
यथान्यायं वासुदेवः पादौ स्पृष्ट्वा महायशाः ॥ [अधिकः पाठः]

ववन्दे पृथुताम्राक्षः प्रीयमाणो महाभुजः ॥ ९८॥
तथाऽश्रुपरिपूर्णाक्षम् आनन्दगतचेतसम् ।
ववन्दे सह रामेण पितरं वासवानुजः ॥ ९९॥
[1]रामकृष्णौ समाश्लिष्य सर्वे चान्धकवृष्णयः ।
प्रीताः प्रियतमास्सर्वे वसुदेवसुतं प्रति ॥ १००॥
तं तु कृष्णस्समाहृत्य रत्नौघधनसञ्चयम् ।
व्यभजत् सर्ववृष्णिभ्य आदध्वमिति चाब्रवीत् * ॥ १०१॥
यथाश्रेष्ठमुपागम्य सात्वतान् यदुनन्दनः ।
सर्वेषां नाम जग्राह दाशार्हाणामधोक्षजः ॥ १०२॥
ततस्सर्वाणि वित्तानि सर्वरत्नमयानि च ।
व्यभजत् तानि तेभ्योऽथ सर्वेभ्यो यदुनन्दनः ॥ १०३॥
सा केशवमहामात्रैर् महेन्द्रप्रमुखैस्सह ।
शुशुभे वृष्णिशार्दूलैस् सिंहैरिव गिरेर्गुहा ॥ १०४॥
अथासनगतान् सर्वान् उवाच विबुधाधिपः ।
शुभया हर्षयन् वाचा महेन्द्रस्तान् महायशाः ॥ १०५॥
कुकुरान्धकमुख्यांश्च तं च राजानमाहुकम् ॥ १०६

इन्द्रः—
यदर्थं जन्म कृष्णस्य मानुषेषु महात्मनः ।

---

1. क—ताभ्यां च मूर्ध्न्युपाघ्रातः केशवः परवीरहा । [अधिकः पाठः]
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

यत् कृतं वासुदेवेन तद्वक्ष्यामि समासतः ॥ १०७

अयं शतसहस्राणि दानवानामरिन्दमः ।
निहत्य पुण्डरीकाक्षः पातालविवरं ययौ ॥ १०८

यच्च नाधिगतं पूर्वैः प्रह्लादबलिशम्बरैः ।
तदिदं शौरिणा वित्तं प्रापितं भवतामिह ॥ १०९

सपाशं मुरमाक्रम्य पाञ्चजन्यं च धीमता ।
शिलासङ्घानतिक्रम्य निसुम्भस्सगणो हतः ॥ ११०

हयग्रीवश्च विक्रान्तो निहतो दानवो बली ।
मथितश्च मृधे भौमः कुण्डले चाहृते पुनः ॥ १११
प्राप्तं च दिवि देवेषु केशवेन महद्यशः ॥ १११॥

वीतशोकभयाबाधाः कृष्णबाहुबलाश्रयाः ।
यजन्तु विविधैस्सोमैर् मखैरन्धकवृष्णयः ॥ ११२॥

पुनर्बाणवधे शौरिम् आदित्या वसुभिस्सह ।
[1]मन्मुखा हि गमिष्यन्ति साध्याश्च मधुसूदनम् ॥ ११३॥

भीष्मः—

एवमुक्त्वा ततस्सर्वान् आमन्त्र्य कुकुरान्धकान् ।
सस्वजे रामकृष्णौ च वसुदेवं च वासवः ॥ ११४॥

प्रद्युम्नसाम्बनिशठान् अनिरुद्धं च सारणम् ।

1. ङ—मन्मुखाश्चिगमिष्यन्ति ख-च—तन्मुखाभि ।

बभ्रुं झल्लिं गदं भानुं चारुदेष्णं च वृत्रहा ॥ ११५॥

[1]सत्कृत्य सारणाक्रूरौ पुनराभाष्य सात्यकिम् ।
सस्वजे वृष्णिराजानम् आहुकं कुकुराधिपम् ॥ ११६॥

भोजं च कृतवर्माणम् अन्यांश्चान्धकवृष्णिषु ॥ ११७

आमन्त्र्य देवप्रवरो वासवो वासवानुजम् ॥ ११७॥

ततश्श्वेताचलप्रख्यं गजमैरावतं प्रभुः ।
पश्यतां सर्वभूतानां आरुरोह शचीपतिः ॥ ११८॥

पृथिवीं चान्तरिक्षं च दिवं च वरवारणम् ।
मुखाडम्बरनिर्घोषैः पूरयन्तमिवासकृत् ॥ ११९॥

हैमयन्त्रमहाकक्ष्यं हिरण्मयविषाणिनम् ।
मनोहरकुथास्तीर्णं सर्वरत्नविभूषितम् ॥ १२०॥

अनेकशतरत्नाभिः पताकाभिरलङ्कृतम् ।
नित्यस्रुतमदस्रावं क्षरन्तमिव तोयदम् ॥ १२१॥

दिशागजं महामात्रं काञ्चनस्रजमास्थितः ।
प्रबभौ मन्दराग्रस्थः प्रतपन् भानुमानिव ॥ १२२॥

ततो वज्रमयं भीमं प्रगृह्य परमाङ्कुशम् ।
ययौ बलवता सार्धं पावकेन शचीपतिः ॥ १२३॥

तं करेणुगजव्रातैर् विमानैश्च मरुद्गणाः ।

---

1. ङ—सत्कृत्याशावहाक्रूरौ

पृष्ठतोऽनुययुः प्रीताः कुबेरवरुणग्रहाः ॥ १२४॥

स वायुपथमास्थाय वैश्वानरपथं गतः ।
प्राप्य सूर्यपथं देवस् तत्रैवान्तरधीयत * ॥ १२५॥

ततस्सर्वदशार्हाणाम् आहुकस्य च यास्स्त्रियः ।
नन्दगोपस्य महिषी यशोदा लोकविश्रुता ॥ १२६॥

रेवती च महाभागा रुक्मिणी च पतिव्रता ।
सत्या जाम्बवती चोभे गान्धारी शिंशुमाऽपि च ॥ १२७॥

विशोका लक्ष्मणा साध्वी सुमित्रा केतुमा तथा ।
वासुदेवमहिष्योऽन्याश् श्रिया सार्धं ययुस्तदा ॥ १२८॥

विभूतिं द्रष्टुमनसः केशवस्य वराङ्गनाः ।
प्रीयमाणास्सभां जग्मुर् आलोकयितुमच्युतम् ॥ १२९॥

देवकी [1]सर्वदेवीनां रोहिणी च पुरस्कृता ।
ददृशुर्देवमासीनं कृष्णं हलभृता सह ॥ १३०॥

तौ तु पूर्व[2]मुपक्रम्य रोहिणीमभिवाद्य च ।
अभ्यवादयतां देवौ देवकीं रामकेशवौ ॥ १३१॥

देवकीं सप्तदेवीनां यथाश्रेष्ठं च मातरः ।
ववन्दे सह रामेण भगवान् वासवानुजः ॥ १३२॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
1. क—सत्यदेवीनां । अ—सप्तदेवीनां 2. अ—मभिक्रम्य

अथासनवरं प्राप्य वृष्णिदारपुरस्कृता ।
उभावङ्कगतौ चक्रे देवकी रामकेशवौ ॥ १३३॥

सा ताभ्यामृषभाक्षाभ्यां पुत्राभ्यां शुशुभे तदा ।
देवकी देवमातेव मित्रेण वरुणेन च ॥ १३४॥

ततः प्राप्ता यशोदाया दुहिता वै क्षणेन हि ।
जाज्वल्यमाना वपुषा प्रभयाऽतीव भारत ॥ १३५॥

एकानङ्गेति यामाहुः कन्यां तां कामरूपिणीम् ।
यत्कृते सगणं कंसं जघान पुरुषोत्तमः ॥ १३६॥

ततस्स भगवान् रामस् तामुपाक्रम्य भामिनीम् ।
मूर्ध्न्युपाघ्राय सव्येन परिजग्राह पाणिना ॥ १३७॥

तां च तत्रोपसङ्गृह्य प्रियामिव सखीं समाम् ।
दक्षिणेन कराग्रेण परिजग्राह माधवः ॥ १३८॥

ददृशुस्तां सभामध्ये भगिनीं रामकृष्णयोः ।
रुक्म[1]पद्मशयां पद्मां श्रीमिवोत्तमनागयोः ॥ १३९॥

अथाक्षतमहावृष्ट्या लाजपुष्प[2]घृतैरपि ।
वृष्णयोऽवाकिरन् प्रीतास् सङ्कर्षणजनार्दनौ ॥ १४०॥

सबालास्सहवृद्धाश्च सज्ञातिकुलबान्धवाः ।

---

1. ग-अ—पद्माशयां पद्मां श्रीरिवो
 ख-घ—पद्मशयां पद्मा श्रीरिवो ।
2. क-ख-ग—घृतैरपि

उपोपविविशुः प्रीता वृष्णयो मधुसूदनम् ॥ १४१॥
पूज्यमानो महाबाहुः पौराणां रतिवर्धनः ।
विवेश पुरुषव्याघ्रस् स्ववेश्म मधुसूदनः ॥ १४२॥
रुक्मिण्या सहितो देव्या प्रमुमोद सुखी सुखम् ॥ १४३
अनन्तरं च सत्याया जाम्बवत्याश्च भारत ।
सर्वासां च यदुश्रेष्ठः सर्वकालविहारवान् ॥ १४४
जगाम च हृषीकेशो रुक्मिण्या स्वं निवेशनम् ॥ १४४॥
एष तात महाबाहो विजयश्शार्ङ्गधन्वनः ।
एतदर्थं च जन्माहुर् मानुषेषु महात्मनः ॥ १४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ २५ ॥ अर्घाभिहरणपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये १४५॥ श्लोकाः]

---

## ॥ चत्वारिंशोऽध्यायः ॥

---

**रुद्रवरगर्वितेन बाणासुरेण स्वतनूजया उषया सह गूढं रममाणस्य अनिरुद्धस्य कारागृहप्रापणम् ॥१॥ नारदाद्विदितपौत्रवृत्तान्तेन कृष्णेन बाणं निर्जित्य उषया सह अनिरुद्धानयनम् ॥ २ ॥ भीष्मेण कृष्णमाहात्म्योपसंहारः ॥ ३ ॥**

---

भीष्मः—
द्वारकायां ततः कृष्णस् स्वदारेषु दिवानिशम् ।
सुखं लब्ध्वा महाराज प्रमुमोद महायशाः ॥ १

पौलस्य कारणाच्चक्रे विबुधानां हितं तदा ।
सवासवैस्सुरैस्सर्वैर् [1]दुष्करं भरतर्षभ ॥ २

बाणो नामाभवद्राजा बलेर्ज्येष्ठसुतो बली ।
वीर्यवान भरतश्रेष्ठ स च बाहुसहस्रवान ॥ ३

ततश्चक्रे तपस्तीव्रं [2]सत्येन मनसा नृप ।
रुद्रमाराधयामास स च बाणस्समा बहु ॥ ४
तस्मै बहुवरा दत्ताश् शङ्करेण महात्मना ॥ ४॥
तस्माल्लब्ध्वा वरान् बाणो दुर्लभान् ससुरैरपि ।
स शोणितपुरे राज्यं चकाराप्रतिमो बली ॥ ५॥
त्रासिताश्च सुरास्सर्वे तेन बाणेन पाण्डव ॥ ६
विजित्य विबुधान् सर्वान् सेन्द्रान् बाणस्समा बहु ।
अशासत महद्राज्यं कुबेर इव भारत ॥ ७
[3]ऋद्ध्यर्थं कुरुते यत्नं तस्य चैवोशना कविः ॥ ७॥
ततो राजन्नुषा नाम बाणस्य दुहिता तथा ।
[4]रूपेणाप्रतिमा लोके मेनकायास्सुता यथा ॥ ८॥
अथोपायेन कौन्तेय अनिरुद्धो महाद्युतिः ।
प्राद्युम्निस्तामुषां प्राप्य प्रच्छन्नः प्रमुमोद ह ॥ ९॥

---

1. अ—दुस्तरं　2. अ—सत्त्वेन
3. अ—कोशे इदमर्धं नास्ति　4. अ—कोशे इदमर्धं नास्ति

अथ बाणो महातेजास् तदा तत्र युधिष्ठिर ।
तं गुह्यनिलयं ज्ञात्वा प्राद्युम्निं सुतया सह ॥ १०॥
गृहीत्वा कारयामास वस्तुं कारागृहे बलात् ॥ ११
सुकुमारस्सुखार्होऽथ तदा दुःखमवाप सः ।
बाणेन खेदितो राजन्ननिरुद्धो मुमोह च ॥ १२
एतस्मिन्नेव काले तु नारदो मुनिपुङ्गवः ।
द्वारकां प्राप्य कौन्तेय कृष्णं दृष्ट्वा वचोऽब्रवीत् ॥ १३

नारदः—

कृष्ण कृष्ण महाबाहो यदूनां कीर्तिवर्धन ।
त्वत्पौत्रो बाध्यमानोऽथ बाणेनामिततेजसा ॥ १४
कृच्छ्रं प्राप्तोऽनिरुद्धो वै शेते [1]कारागृहे सदा ॥ १४॥

भीष्मः—

एवमुक्त्वा सुरर्षिर्वै बाणस्याथ पुरं ययौ ।
नारदस्य वचश्श्रुत्वा ततो राजञ्जनार्दनः ॥ १५॥
आहूय बलदेवं वै प्रद्युम्नं च महाद्युतिम् ।
आरुरोह गरुत्मन्तं ताभ्यां सह जनार्दनः ॥ १६॥
ततस्सुपर्णमारुह्य त्रयस्ते पुरुषर्षभाः ।
जग्मुः क्रुद्धा महावीर्या बाणस्य नगरं प्रति ॥ १७॥

1 ख-ग-घ—कन्यागृहे

अथासाद्य महाराज तत्पुरीं ददृशुश्च ते ।
ताम्रप्राकारसंवीतां रूप्यद्वारैश्च शोभिताम् ॥ १८॥
हेमप्रासादसम्वाधां मुक्तामणिविचित्रिताम् ।
उद्यानवनसम्पन्नां नृत्तगीतैश्च शोभिताम् ॥ १९॥
तोरणैः पक्षिभिः कीर्णां पुष्करिण्या च शोभिताम् ।
तां पुरीं स्वर्गसङ्काशां हृष्टपुष्टजनाकुलाम् ॥ २०॥
दृष्ट्वा मुदा युतां हैमां विस्मयं परमं ययुः ॥ २१
तस्य बाणपुरस्यासन् द्वारस्था देवतास्सदा ।
[1]महेश्वरो गुहश्चैव भद्रकाली च पावकः ॥ २२
एता वै देवता राजन् ररक्षुस्तां पुरीं सदा ॥ २२॥
अथ कृष्णो बलाज्जित्वा द्वारपालान् युधिष्ठिर ।
[2]सुसङ्क्रुद्धो महातेजाश् शङ्खचक्रगदाधरः ॥ २३॥
आससादोत्तरद्वारं शङ्करेणाभिपालितम् ॥ २४
तत्र तस्थौ महातेजाश् शूलपाणिर्महेश्वरः ।

---

1. क-ख-ग-घ-ङ—एकस्मिन्नयो राजन्नन्यस्मिन् क्रौञ्चदर्पहा ।
महेश्वरस्स्वयं राजन् दक्षिणद्वारि तस्थिवान् ॥
संस्थिता: पश्चिमद्वारि रुद्राः भूतगणाः खगाः ॥
[अधिकः पाठः]

2. अ-कोशे इदमर्धं नास्ति

पिनाकं सशरं गृह्य बाणस्य हितकाम्यया ॥ २५
ज्ञात्वा तमागतं कृष्णं व्यादितास्यमिवान्तकम् ।
[1]महेश्वरो महाबाहुः कृष्णाभिमुखमाययौ ॥ २६
ततस्तौ चक्रतुर्युद्धं वासुदेवमहेश्वरौ ।
तद्युद्धमभवद्घोरम् अचिन्त्यं रोमहर्षणम् ॥ २७
अन्योन्यं तौ ततक्षाते अन्योन्यजयकाङ्क्षिणौ ।
दिव्यास्त्राणि च तौ देवौ क्रुद्धौ मुमुचतुस्तदा ॥ २८
ततः कृष्णो रणं कृत्वा मुहूर्तं शूलपाणिना ।
विजित्य तं महादेवं ततो युद्धे जनार्दनः ॥ २९
अन्यांश्च जित्वा द्वारस्थान् प्रविवेश पुरोत्तमम् ॥ २९॥
प्रविश्य बाणमासाद्य स तत्राथ जनार्दनः ।
चक्रे युद्धं महाक्रुद्धस् तेन बाणेन पाण्डव ॥ ३०॥
बाणोऽपि सर्वशस्त्राणि शितानि भरतर्षभ ।
सुसङ्क्रुद्धस्तदा युद्धे पातयामास केशवे ॥ ३१॥
पुनरुद्यम्य शस्त्राणां सहस्रं सर्वबाहुभिः ।
मुमोच बाणस्सङ्क्रुद्धः कृष्णं प्रति रणाजिरे ॥ ३२॥
[2]ततः कृष्णस्तु सञ्छिद्य तानि सर्वाणि भारत ।

1. क-ख-ग-घ-ङ—कोशेषु इदमर्धं नास्ति
2. अ—ततः कृष्णस्तथा च्छित्त्वा तानि शस्त्राणि भारत ।
ख-ग-घ—स्तदा च्छित्वा सर्वशस्त्राणि ।

कृत्वा मुहूर्तं बाणेन युद्धं राजन्नधोक्षजः ॥ ३३॥

चक्रमुद्यम्य [1]राजन् वै दिव्यं शस्त्रोत्तमं ततः ।
सहस्रबाहूंश्चिच्छेद बाणस्यामिततेजसः ॥ ३४॥

ततो बाणो महाराज कृष्णेन भृशपीडितः ।
छिन्नबाहुः पपाताशु विशाख इव पादपः ॥ ३५॥

स पातयित्वा बालेयं बाणं कृष्णस्त्वरान्वितः ।
प्राद्युम्निं मोक्षयामास [2]क्षिप्रं कारागृहे तदा ॥ ३६॥

मोक्षयित्वाऽथ गोविन्दः प्राद्युम्निं सह भार्यया ।
बाणस्य सर्वरत्नानि असङ्ख्यानि जहार सः ॥ ३७॥

गोधनान्यथ सर्वस्वं स बाणस्यालये बलात् ।
जहार च हृषीकेशो यदूनां कीर्तिवर्धनः ॥ ३८॥

ततस्स सर्वरत्नानि चाहृत्य मधुसूदनः ।
क्षिप्रमारोपयाञ्चक्रे तत् सर्वं गरुडोपरि ॥ ३९॥

त्वरयाऽथ स कौन्तेय बलदेवं महाबलम् ।
[3]प्राद्युम्निं च महावीर्यम् अनिरुद्धं महाद्युतिम् ॥ ४०॥

---

1. अ—रोषाद्वै
2. अ—क्षिप्तं राजगृहे । ख-ध—क्षिप्रं राजगृहात्
3. क-ख-ध—प्रद्युम्नं च

उषां च सुन्दरीं राजन् भृत्यदासीगणैस्सह ॥ ४१

सर्वानेतान् समारोप्य रत्नानि विविधानि च ।
मुदा युक्तो महातेजाः पीताम्बरधरो बली ॥ ४२

दिव्याभरणचित्राङ्गश् शङ्खचक्रगदासिभृत् ।
आरुरोह गरुत्मन्तम् उदयं भास्करो यथा ॥ ४३

अथारुह्य सुपर्णं स प्रययौ द्वारकां प्रति ॥ ४३॥

प्रविश्य स्वपुरं कृष्णो यादवैस्सहितस्ततः ।
प्रमुमोद तदा राजन् स्वर्गस्थो वासवो यथा* ॥ ४४॥

सूदिता मौरवाः पाशा निसुम्भनरकौ हतौ ।
कृतक्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ॥ ४५॥

शौरिणा पृथिवीपालास् त्रासिता भरतर्षभ ।
धनुषश्च प्रणादेन पाञ्चजन्यस्वनेन च ॥ ४६॥

मेघप्रख्यैरनीकैश्च दाक्षिणात्याभिसंवृतम् ।
रुक्मिणं त्रासयामास केशवो भरतर्षभ ॥ ४७॥

ततः पर्जन्यघोषेण रथेनादित्यवर्चसा ।
उवाह महिषीं भोज्याम् एष चक्रगदाधरः ॥ ४८॥

[1]जारूथ्य आहृतक्रोधश् शिशुपालश्च निर्जितः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥

1. अ—जारूथ्यामाहृतः क्रोधः ग—जारूथ्यां ख-च—जाग्रम्यां ।

वक्रश्च सह शैब्येन शतधन्वा च क्षत्रियः ॥ ४९॥

इन्द्रद्युम्नो हतः क्रोधाद् यवनश्च कशेरुमान् ।
हतस्सौभपतिस्साल्वस् सहैव [1]क्रथधन्वना ॥ ५०॥

पर्वतानां सहस्रं च चक्रेण पुरुषोत्तमः ।
विभिद्य पुण्डरीकाक्षो द्युमत्सेनमयोधयत् ॥ ५१॥

महेन्द्रशिखरे चैव निमेषान्तरचारिणौ ।
जग्राह भरतश्रेष्ठ [2]वरुणस्याभितश्चरौ ॥ ५२॥

इरावत्यामुभौ चैतावग्निसूर्यसमौ बले ।
गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना ॥ ५३॥

[3]-[4]अक्षप्रपतने चैव नेमिहंसपथेषु च ।
उभौ तावपि कृष्णेन [5]स्वराष्ट्रे विनिपातितौ ॥ ५४॥

दग्धा वाराणसी तात केशवेन महात्मना ।
सानुबन्धस्सराष्ट्रश्च काशीनामृषभो हतः ॥ ५५॥

[6]प्राग्ज्योतिषं पुरश्रेष्ठम् असुरैर्बहुभिर्वृतम् ।

---

1. क—क्रथकौशिकौ
   अ—हतस्सौभपतिश्चैव साल्वश्चैव हतो बली   घ—क्रोधधन्वना
2. ङ—वरुणश्चा ।   ख-घ—वानरावभित ।
3. अ—गोमन्तशिखरे केचित् केचिद् द्यूतेऽथ सूदिताः। [अधिकः पाठः]
4. ग—पाण्ड्याः पौण्ड्राश्च राजानो ह्यङ्गवङ्गकलिङ्गपाः ॥
   निमिहंसपतिश्चैव कृष्णेन हतवान् पुरा ।   [अधिकः पाठः]
5. ख-घ—सुराष्ट्रौ   क—त्वराष्ट्रौ ।   6. अ—कोशे इदमर्धं नास्ति

[1]प्राप्य लोहितकूटानि कृष्णेन वरुणो जितः ॥ ५६॥
अजेयो दुष्प्रधर्षश्च लोकपालो महाद्युतिः ।
इन्द्रद्वीपो महेन्द्रेण गुप्तो मघवता स्वयम् ॥ ५७॥
पारिजातो हृतः पार्थ केशवेन बलीयसा ॥ ५८

पाण्ड्यं पौण्ड्रं च मात्स्यं च कलिङ्गं च जनार्दनः ।
जघान सहितान् सर्वान् अङ्गराजं च माधवः ॥ ५९

एष चैकशतं हत्वा रथेन क्षत्रपुङ्गवान् ।
गान्धारीमवहत् कृष्णो महिषीं यादवर्षभः ॥ ६०

[2]अथ गाण्डीवधन्वानं क्रीडार्थं मधुसूदनः ।
जिगाय भरतश्रेष्ठ कुन्त्याश्च प्रमुखे विभुः ॥ ६१

द्रोणं द्रौणिं कृपं कर्णं भीमसेनं सुयोधनम् ।
चक्रानुयाने सहितान् जिगाय भरतर्षभ ॥ ६२

बभ्रोश्च प्रियमन्विच्छन्नेष चक्रगदाधरः ।
वेणुदारिहृतां भार्याम् उन्ममाथ युधिष्ठिर ॥ ६३

पर्याप्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम् ।
वेणुदारिवशे युक्तां जिगाय मधुसूदनः ॥ ५४

---

1. ग—इन्द्रो देवगणैस्सार्धं जितो हित्वा गजोत्तमम् ।
पारिजातो हृतः पार्थ केशवेन बलीयसा ॥
तस्माद्दीप्त्या कृतं तेन पुरं स्वर्गमिवापरम् । [अधिकः पाठः]

2. ग—वज्ञानयानसहितान् माधवो भरतर्षभ ॥ [अधिकः पाठः]

[1]अवाप्य तपसा वीर्यं बलमोजश्च भारत ।
त्रासितास्सगणास्सर्वे बाणेन विबुधाधिपाः ॥ ६५

वज्राशनिगदापाशैस् त्रासयद्भिरनेकशः ।
तस्य नासीद्रणे मृत्युर् देवैरपि सवासवैः ॥ ६६

सोऽभिभूतश्च कृष्णेन निहतश्च महात्मना ।
छित्त्वा बाहुसहस्रं तद् गोविन्देन महात्मना ॥ ६७

[2]एष पीठं महाबाहुः कंसं च मधुसूदनः ।
पैठकं चातिलोमानं निजघान जनार्दनः ॥ ६८

जम्भमैरावतं चैव विरूपं च महायशाः ।
जघान भरतश्रेष्ठ शम्बरं चारिमर्दनम् ॥ ६९

एष भोगवतीं गत्वा वासुकिं भरतर्षभ ।
निर्जित्य पुण्डरीकाक्षो रौहिणेयममोचयत् ॥ ७०

एवं बहूनि कर्माणि शिशुरेव जनार्दनः ।
कृतवान् पुण्डरीकाक्षस् सङ्कर्षणसहायवान् ॥ ७१

एवमेषोऽसुराणां च सुराणां चापि सर्वशः ।
भयाभयकरः कृष्णस् सर्वलोकेश्वरः प्रभुः ॥ ७२

---

1. अ—बभ्रवे दत्तवान् राज्यम् अस्माकं पश्यतामसौ ।
ततः प्रभृति राजानस् सर्वे बिभ्यति चास्य वै ॥ [अधिकः पाठः]

2. ख-ग-घ-ङ—अवाप्तं तपसा वीर्यं बलमोजश्च भारत ।
[अधिकः पाठः]

एवमेष महाबाहुश् शास्ता सर्वदुरात्मनाम् ।
[1]कृत्वा देवार्थममितं स्वस्थानं प्रतिपत्स्यते ॥ ७३

एष भोगवतीं रम्याम् ऋषीकान्तां महायशाः ।
द्वारकामात्मसात् कृत्वा सागरं गमयिष्यति ॥ ७४

बहुपुण्यवतीं रम्यां चैत्ययूपवतीं शुभाम् ।
द्वारकां वरुणावासं प्रवेक्ष्यति सकाननाम् ॥ ७५

तां सूर्यसदनप्रख्यां मनोज्ञां शार्ङ्गधन्वना ।
विश्लिष्टां वासुदेवेन सागरः प्लावयिष्यति ॥ ७६

सुरासुरमनुष्येषु नाभून्न भविता क्वचित् ।
यस्तामध्यवसद्राजा अन्यत्र मधुसूदनात् ॥ ७७

भ्राजमानास्तु शिशवो वृष्ण्यन्धकमहारथाः ।
तज्जुष्टं प्रतिपत्स्यन्ते नाकपृष्ठं गतासवः ॥ ७८

एवमेव दशार्हाणां विधाय विधिना विधिम् ।
विष्णुर्नारायणस्सोमस् सूर्यश्च सविता स्वयम् ॥ ७९

अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी ।
मोदते भगवान् भूतैर् बालः क्रीडनकैरिव ॥ ८०

नैष गर्भत्वमापेदे न योन्यामावसत् प्रभुः ।

---

1. अ—यत् करिष्यति तत् सर्वं पश्यसि त्वं शृणोषि च ।
सुरासुरमनुष्येषु नाभून्न भविता क्वचित् ।
[अधिकः पाठः]

आत्मनस्तेजसा कृष्णस् सर्वेषां कुरुते गतिम् ॥ ८१
यथा बुद्बुद उत्थाय तत्रैव प्रविलीयते ।
चराचराणि भूतानि तथा नारायणे सदा ॥ ८२
न प्रमातुं महाबाहुश् शक्यो भारत केशवः ।
[1]परं ह्यपरमेतस्माद् विश्वरूपान्न विद्यते ॥ ८३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

॥ २५ ॥ अर्घाभिहरणपर्वणि दशमोऽध्यायः ॥ १० ॥

[अस्मिन्नध्याये ८३ श्लोकाः]

---

## ॥ एकचत्वारिंशोऽध्यायः ॥

भीष्मवाक्योपरमे सहदेवेन कृष्णपूजाविरुद्धभाषिणो वधे प्रतिज्ञाते राज्ञां तूष्णीम्भावः ॥ १ ॥ सहदेवमूर्ध्नि पुष्पवृष्टिः ॥ २॥ अशरीरवाणी च ॥३॥ नारदेन कृष्णानर्चकस्य निन्दनम् ॥४ ॥ सहदेवेन सभ्यपूजनपूर्वकं कर्मसमापनम् ॥ ५ ॥ शिशुपालेन यज्ञविघाताय राज्ञां प्रोत्साहनम् ॥ ६ ॥ राज्ञां रणोद्यमाद्बिभ्यतो युधिष्ठिरस्य भीष्मेण समाश्वासनम् ॥ ७ ॥

---

वैशम्पायनः—

एवमुक्त्वा ततो भीष्मो विरराम महायशाः ।
व्याजहारोत्तरं तत्र सहदेवोऽर्थतत्त्ववित् ॥ १

सहदेवः—

केशवं केशिहन्तारम् अप्रमेयमरिन्दमम् ।

---

1. अ—परं ह्यपरतस्तस्माद् विश्वरूपान्न विद्यते
ख-घ—हि परतस्तस्माद्विश्वरूपं ।

सर्वलोकेश्वरं कृष्णं विज्ञाय पुरुषोत्तमम् ॥ २

तमिमं सर्वसम्पन्नम् आचार्यं पितरं गुरुम् ।
अर्च्यमर्चितमस्माभिस् सर्वे सम्मन्तुमर्हथ ॥ ३

यो वा न सहते राज्ञां कश्चिन् सबलवाहनः ।
क्षिप्रं युद्धाय निर्यातु शक्तश्चेदत्र मे युधि ॥ ४

पूज्यमानं मया यो वः कृष्णं न सहते नृपाः ।
तस्य मूर्ध्नि सुसन्न्यस्तं राज्ञस्सव्यं पदं मया ॥ ५
एवमुक्ते मया सम्यग् उत्तरं प्रब्रवीतु सः ॥ ५॥

वैशम्पायनः—

ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ।
मानिनां बलिनां राज्ञां मध्ये सन्दर्शिते पदे ॥ ६॥

ततोऽपतत् पुष्पवृष्टिस् सहदेवस्य मूर्धनि ।
अदृश्यदेहा वाचश्च साधु साध्विति चाब्रुवन् ॥ ७॥
आविध्यदजिनं हृष्टो भविष्यद्भूतजल्पकः ।
सर्वसंशयनिर्मोक्ता नारदस्सर्वधर्मवित् ॥ ८॥
उवाचाखिलभूतानां मध्ये स्पष्टतरं वचः ॥ ९

नारदः—

कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः ।

जीवन्मृतास्तु ते ज्ञेया न सम्भाष्याः कदाचन ॥ १०

वैशम्पायनः—

तत्राहूतागतास्सर्वे सुनीथप्रमुखा नृपाः ।
प्रत्यदृश्यन्त सङ्क्रुद्धा विवर्णाः क्रोधमूर्छिताः ॥ ११

युधिष्ठिराभिषेकं च कृष्णे पूजां च तादृशीम् ।
व्यब्रुवंस्तत्र राजानो निर्वेदादात्मनिश्चयात् ॥ १२

सुहृद्भिर्वार्यमाणानां तेषां हि वपुराबभौ ।
आमिषादपकृष्टानां सिंहानामिव गर्जताम् ॥ १३

तं बलौघमपर्यन्तं राजसागरमव्ययम् ।
कुर्वाणं समयं कृष्णो युद्धाय बुबुधे तदा ॥ १४

पूजयित्वा तु पूजार्हं ब्रह्मक्षत्रं विशेषतः ।
सहदेवो विशेषज्ञस् समापयत कर्म तत् ॥ १५

तस्मिन्नभ्यार्चिते कृष्णे सुनीथश्शत्रुकर्शनः ।
अतिताम्रेक्षणः कोपाद् उवाच मनुजाधिपान् ॥ १६

शिशुपालः—

[1]स्थितस्सेनापतिर्वोऽहं मर्षयध्वं किमीदृशम् ।
युधि तिष्ठाम सन्नह्य समेतान् वृष्णिपाण्डवान् ॥ १७

---

1. अ-ख-ग-घ—हितः

वैशम्पायनः—

[1]तथा सर्वान् समुच्चार्य नृपतींश्चेदिपुङ्गवः ।
यज्ञोपघातं पार्थानाम् अमन्त्रयत राजभिः* ॥ १८

वैशम्पायनः—

ततस्सागरसङ्काशं दृष्ट्वा नृपतिसागरम् ।
रोषात् प्रचलितं सर्वम् इदमाह युधिष्ठिरः ॥ १९

भीष्मं मतिमतां श्रेष्ठं वृद्धं कुरुपितामहम् ।
प्रजापतिं बृहत्तेजाश् शतक्रतुरिवारिहा ॥ २०

युधिष्ठिरः—

असौ रोषात् प्रचलितो महान् नृपतिसागरः ।
[2]अत्र यत् प्रतिवक्तव्यं तन्मे ब्रूहि पितामह ॥ २१

यज्ञस्य च न विघ्नस्स्यात् प्रजानां च शिवं च नः ।
यथा हि पूर्ववत् सर्वं ब्रूहि मह्यं पितामह ॥ २२

वैशम्पायनः—

इत्युक्तवति धर्मिष्ठे धर्मराजे युधिष्ठिरे ।
उवाचेदं वचः काले भीष्मः कुरुपितामहः ॥ २३

भीष्मः—

मा भैस्त्वं कुरुशार्दूल श्वा सिंहं हन्तुमर्हति ।

---

1. ङ—ततस्सर्वान् समुत्माद्य राज्ञस्तांश्चेदिपुङ्गवः ।
ग—समुत्सार्य । घ—समासाद्य

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

2. अ—तत्र यत्प्रतिपत्तव्यं । ख-घ—पत्तव्यं

शिवः पन्थास्तु भीमोऽत्र मया पूर्वतरं वृतः ॥ २४

प्रसुप्ते हि यथा सिंहे श्वानस्तात समागताः ।
भषेयुस्सहितास्सर्वे तथैव वसुधाधिपाः ॥ २५

वृष्णिसिंहस्य सुप्तस्य तथेमेऽभिमुखास्स्थिताः ।
[1]भषन्ते चापसङ्काशा असिंहास्सिंहसन्निधौ ॥ २६

न हि सम्बुध्यते यावत् सुप्तस्सिंह इवाच्युतः ।
[2]तदिदं ज्ञातपूर्वं हि तव संस्तोतुमिच्छतः ॥ २७

तेन सिंहीकरोत्येष असिंहश्चेदिपुङ्गवः ।
पार्थिवान् पार्थिवाध्यक्ष शिशुपालोऽल्पचेतनः ॥ २८

सर्वान् सर्वात्मना तात नेतुकामो यमक्षयम् ॥ २८॥

नूनमेतत् समादातुं पुनरिच्छत्यधोक्षजः ।
यदस्य शिशुपालस्थं तेजस्तिष्ठति भारत ॥ २९॥

विप्लुता चास्य भद्रं ते बुद्धिर्बुद्धिमतां वर ।
चेदिराजस्य कौन्तेय सर्वेषां च महीक्षिताम् ॥ ३०॥

आदातुं पुण्डरीकाक्ष एष इच्छति यं सदा ।
तस्य विप्लवते बुद्धिर् एवं चेदिपतेर्यथा ॥ ३१॥

---

1. अ—हर्षन्ते मृगसङ्काशाः। क—भाषन्ते भाष। ग—भाषन्ते चाष।
ख-घ—भाषन्ते झष।

2. ग—तदिहाज्ञानपूर्वं हि
ख-घ—तदिदं ज्ञाप्य पूर्वं हि तव संस्तोतुमिच्छसि।

चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः ।
प्रभवश्चैव भूतानां निधनं च युधिष्ठिर ॥ ३२॥

वैशम्पायनः—

इति तस्य वचश्श्रुत्वा तथा चेदिपतिर्नृपः ।
भीष्मं रूक्षतरां वाचं श्रावयामास भारत ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

॥ २५ ॥ अर्घाभिहरणपर्वणि एकादशोऽध्यायः ॥ ११ ॥

[समाप्तम् अर्घाभिहरणपर्व]

[अस्मिन्नध्याये ३३॥ श्लोकाः]

---

## ॥ द्विचत्वारिंशोऽध्यायः ॥

(शिशुपालवधपर्व)

शिशुपालेन परिहासपूर्वकं भीष्मनिन्दा ॥ १ ॥

---

शिशुपालः—

बिभीषिकाभिर्बह्वीभिर् भीषयन् भीष्म पार्थिवान् ।
न ह्यपत्रपसे कस्माद् वृद्धस्सन् कुलपांसनः ॥ १

युक्तमेतत् तृतीयायां प्रकृतौ तिष्ठता त्वया ।
वक्तुं वचनसम्पन्नस् त्वं हि सर्वकुरूत्तमः ॥ २

नावि नौरिव [1]बद्धा स्याद् यथाऽन्धो वाऽन्धमन्वियात् ।
तथाभूता हि कौरव्या भीष्म एषां त्वमग्रणीः ॥ ३

अपि वृद्धस्य मूर्खस्य केशवं स्तोतुमिच्छतः ।
कथं भीष्म न ते जिह्वा शतधा विप्रशीर्यते ॥ ४

पूतनाघातपूर्वाणि कर्माण्यस्य विशेषतः ।
त्वया प्रशंसताऽस्माकं भूयस्सञ्चलितं मनः ॥ ५

यत्न कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः ।
तमिमं ज्ञानवृद्धस्सन् गोपं त्वं स्तोतुमिच्छसि ॥ ६

यद्यनेन [2]हतो बाल्ये शकुनिश्चित्रमत्र किम् ।
तौ चाऽश्ववृषभौ वीरौ यौ न युद्धविशारदौ ॥ ७

चेतनारहितं काष्ठं यद्यनेन निपातितम् ।
पादेन शकटं भीष्म तत्र किं कृतमद्भुतम् ॥ ८

अर्कप्रमाणौ तौ वृक्षौ यद्यनेन निपातितौ ।
नागश्च पातितोऽनेन तत्र को विस्मयः कृतः ॥ ९

वल्मीकमात्रस्सप्ताहं धारितो यद्यनेन सः ।
तदा गोवर्धनो भीष्म न तु मे विस्मितं मनः ॥ १०

भुक्तमेतेन बह्वन्नं क्रीडितं नागमूर्धनि ।

---

1. क-ङ—संबद्धा । ग—बध्या स्यात् ।
2. क-ख-घ-ङ—हता ।

इति ते श्रवणाद्भीष्म परं विस्मयमागताः ॥ ११
मतिमन्तो न शंसन्ति सज्जना धर्मिणस्सदा ॥ ११॥

यस्य चानेन धर्मज्ञ भुक्तमन्नं बलीयसा ।
स चानेन हतः कंसः किं पापमधिकं ततः ॥ १२॥

न ते श्रुतमिदं भीष्म ज्ञानं कथयतां सताम् ।
यद्वक्ष्ये त्वामधर्मज्ञं वाक्यं कुरुकुलाधम ॥ १३॥

स्त्रीषु गोषु न चास्त्राणि पातयेद्ब्राह्मणेषु च ।
यस्य चान्नानि भुञ्जीत यश्च स्याच्छरणं गतः ॥ १४॥

इति सन्तोऽनुशासन्ति सज्जना धर्मिणस्सदा ।
भीष्म सङ्कथितं सर्वं वितथं तव चेश्वरे ॥ १५॥

[1]ज्ञानवृद्धं च वृद्धं च भूयांसं केशवं मम ।
अजानत इवाख्यासि संस्तुवन् कौरवाधम ॥ १६॥

गोघ्नः स्त्रीघ्नश्च ते भीष्म कथं संस्तवमर्हति ॥ १७
असौ मतिमतां श्रेष्ठो य एष जगतः पतिः ।

आत्मानमात्मनाऽधातुं यदि शक्तो जनार्दनः ॥ १८
अकामयन्तं तं भीष्म कथं साध्विति पश्यसि ॥ १८॥

न गाथा गाथिनं शास्ति पठतीति न कारणम् ।
प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथा ॥ १९॥

---

1. क-ख-ग-घ-ङ—कोशेषु अर्धद्वयं नास्ति ।

नूनं प्रकृतिरप्येषा जघन्या नात्र संशयः ।
नदीसुतत्वात् ते चित्तं चञ्चलं न स्थिरं स्मृतम् ॥ २०॥

वृत्तिः पापीयसी चैषां पाण्डवानामपीष्यते ।
येपामर्च्यतमः कृष्णस् त्वं च येपां प्रदर्शकः ॥ २१॥

धर्मवानित्यधर्मज्ञस् सतां मार्गादवप्लुतः ।
को हि धर्मिणमात्मानं जानञ् ज्ञानविदां वरः ॥ २२॥

कुर्याद्यथा त्वया भीष्म कृतं धर्ममवेक्षता ॥ २३

अन्यकामा हि धर्मज्ञा कन्यका प्राज्ञमानिना ।
गृहीतपाणिर्धर्मेण राज्ञा साल्वेन धीमता ॥ २४

अम्बा नामाथ भद्रं ते कथं साऽपहृता त्वया ॥ २४॥

यां त्वयाऽपहृतां भीष्म कन्यां नैषितवान्नृपः ।
भ्राता विचित्रवीर्यस्ते सतां धर्ममनुस्मरन् ॥ २५॥

दारयोग्यस्य चान्येन मिषतः प्राज्ञमानिनः ।
उत्पादितान्यपत्यानि सज्जनाचरिते पथि ॥ २६॥

नात्र धर्मोऽस्ति ते भीष्म ब्रह्मचर्यमिदं वृथा ।
यद्धारयसि मोहात् त्वं क्लीबत्वाच्च न संशयः ॥ २७॥

न त्वहं तव धर्मज्ञ पश्यामि विनयं क्वचित् ।
न हि ते सेविता वृद्धा य एवं धर्म[1]मब्रवीः ॥ २८॥

---

1. अ-ख-ग-घ—मब्रवीत् ।

इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः ।
सर्वमेतदपत्यस्य कलां नार्हति षोडशीम् ॥ २९॥

व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत् ।
सर्वं तदनपत्यस्य मोघं भवति निश्चयः ॥ ३०॥

सोऽनपत्यश्च वृद्धश्च मिथ्याधर्मानुशासनात् ।
हंसवत् त्वमपीदानीं ज्ञातिभ्यो ह्याप्नुया वधम् ॥ ३१॥

एवं हि कथयन्त्यन्ये नरा धर्मविदः पुरा ।
भीष्म यत् तदहं सम्यग् वक्ष्यामि [1]भवते शृणु ॥ ३२॥

वृद्धः किल समुद्रान्ते कश्चिद्धंसोऽभवत् पुरा ।
धर्मवागन्यथावृत्तः पक्षिणस्त्वनुशास्ति च ॥ ३३॥

धर्मं चरत माऽधर्मम् इति तस्य वचः किल ।
पक्षिणश्शुश्रुवुर्भीष्म सततं धर्मवादिनः ॥ ३४॥

हंसस्य तद्वचश्श्रुत्वा मुदितास्सर्वपक्षिणः ।
ऊचुश्चैनं खगा हंसं परिवार्य च सर्वशः ॥ ३५॥

पक्षिणः—

कथयस्व भवान् धर्मं पक्षिणां तत् समासतः ।
को हि नाम द्विजश्रेष्ठ ब्रूहि नो धर्ममुत्तमम् ॥ ३६॥

हंसः—

प्रजास्वहिंसा धर्मो वै हिंसाऽधर्मः खगव्रजाः ।

---

1. क-ङ—तव शृण्वतः ।

एतदेवानुबोद्धव्यं धर्माधर्मस्समासतः ॥ ३७॥

शिशुपालः—

वृद्धहंसवचश्श्रुत्वा पक्षिणस्ते [1]सुसंहिताः ।
ऊचुश्च धर्मलुब्धास्ते स्मयमाना इवाण्डजाः ॥ ३८॥

पक्षिणः—

धर्मं यः कुरुते नित्यं लोके धीरतरोऽण्डजः ।
स यत्र गच्छेद्धर्मात्मा तन्नो ब्रूहीह तत्त्वतः ॥ ३९॥

हंसः—

[2]धर्मं यः कुरुते नित्यं लोके सद्वृत्तिमास्थितः ।
स गच्छेत् सर्वलोकान् वै तथा वै नियतं खगाः ॥ ४०॥

पक्षिणः—

ज्ञात्वा हि धर्माधर्मं च नित्यं लोके द्विजोत्तम ।
दुर्लभं स्वर्गलोकं तु तं कस्मात् त्वं न गच्छसि ॥ ४१॥

हंसः—

बाला यूयं न जानीध्वं धर्मसूक्ष्मं विहङ्गमाः ॥ ४२

धर्मं यः कुरुते लोके सततं शुभबुद्धिना ।
स चायुषोऽन्ते स्वं देहं त्यक्त्वा स्वर्गं तु गच्छति ॥ ४३

स चाहमपि च त्यक्त्वा काले देहमिमं द्विजाः ।

---

1. क-ग-ङ—सुसङ्गताः ।
2. अ—कोश इदमर्धचतुष्टयं नास्ति ।

स्वर्गलोकं गमिष्यामि इयं धर्मस्य वै गतिः ॥ ४४

शिशुपालः—

एवं धर्मकथां चक्रे स हंसः पक्षिणां भृशम् ।
पक्षिणश्शुश्रुवुर्भीष्म सततं धर्ममेव ते ॥ ४५

आजह्रुस्तस्य ते भक्ष्यं समुद्रजलचारिणः ।
अण्डजा ह्यथ विश्वस्य धर्मस्थोऽयमिति स्थिताः ॥ ४६

तस्य चैव समभ्याशे निक्षिप्याण्डानि सर्वशः ।
समुद्राम्भसि मोदन्ते चरन्तो भीष्म पक्षिणः ॥ ४७

तेषामण्डानि सर्वेषां भक्षयामास पापकृत् ।
स हंसस्सम्प्रमत्तानाम् अप्रमत्तस्स्वकर्मणि ॥ ४८

ततः प्रक्षीयमाणेषु तेषु तेष्वण्डजोऽपरः ।
अशङ्कत महा[1]प्राज्ञस् तं कदाचिद्ददर्श ह ॥ ४९

ततो गतेषु हंसेषु सर्वेषु चरितुं तदा ।
स्थित आत्मानमावृत्य तं कदाचिद्ददर्श ह ॥ ५०

ततस्स कथयामास दृष्ट्वा हंसस्य किल्बिषम् ।
तेषां परमदुःखार्तस् स पक्षी सर्वपक्षिणाम् ॥ ५१

ततः प्रत्यक्षतो दृष्ट्वा पक्षिणस्ते समागताः ।
निजघ्नुस्तं तदा हंसं मिथ्यावृत्तं कुरूद्वह ॥ ५२

1. क-ग-ङ—प्राज्ञकर्मास्येदं भवेदिति ।

[1]एते त्वां हंसधर्माणम् अपीमे वसुधाधिपाः ।
निहन्युस्तीक्ष्णशस्त्रेण पक्षिणस्तामिवाण्डजम् ॥ ५३
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ।
भीष्म यां तां च ते सम्यक् कथयिष्यामि भारत ॥ ५४
अन्तरात्मा विनिहतो रौषि पत्ररथैर्मिथः ।
अण्डभक्षाद्यशुचि ते कर्म वाचमतीहते ॥ ५५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

॥ २६ ॥ शिशुपालवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[अस्मिन्नध्याये ५५ श्लोकाः]

---

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

**श्रीकृष्णनिन्दाश्रवणेन शिशुपालवधोद्युक्तं भीमं प्रति भीष्मेण शिशुपालचरित्रकथनपूर्वकं विनिवारणम् ॥ १ ॥**

---

शिशुपालः—
त्वामहं हंसधर्माणं ये चान्ये वसुधाधिपाः ।
[2]निहन्म भीष्म सङ्क्रुद्धाः पक्षिणस्तामिवाण्डजम् ॥ १

---

1. क-च—वृद्धहंसो हतस्तत्र मिथ्यावृत्तो दुरात्मवान् ।
हंसवाक् त्वमपीदानीं ज्ञातिभ्यो वधमाप्नुयाः ॥
[अधिकः पाठः]

2. ख-अ—निहन्युर् ।

केशवेन कृतं यत्तज् जरासन्धवधे तदा ।
भीमसेनार्जुनाभ्यां च कस्तत् साध्विति पश्यति ॥ २
अद्वारेण प्रविष्टेन छद्मना ब्रह्मवादिना ।
दृष्टस्स्वभावः कृष्णेन जरासन्धस्य धीमतः ॥ ३
येन धर्मात्मनाऽऽत्मानं ब्राह्मण्यमभिजानता ।
प्रेषितं पाद्यमग्रे तद् दातुमस्मै दुरात्मने ॥ ४
भुज्यतामिति तेनोक्ताः कृष्णभीमधनञ्जयाः ।
जरासन्धेन कौरव्य कृष्णेन विकृतं कृतम् ॥ ५
स चायं जगतः कर्ता यथैनं भीष्म मन्यसे ॥ ५॥
कस्मान्न ब्राह्मणं सम्यग् आत्मानमवगच्छसि ॥ ६
स मे बहुमतो राजा जरासन्धो नराधिपः ।
योऽनेन युद्धं नेयेष गोपाल इति संयुगे ॥ ७
इदं चाश्चर्यभूतं मे यदीमे पाण्डवास्त्वया ।
अपकृष्टास्सतां मार्गान्मन्यन्ते तच्च साध्विति ॥ ८
अथवा नैतदाश्चर्यं येषां त्वमसि भारत ।
[1]स्त्रीसधर्माऽपविद्धश्च सर्वार्थानां प्रदर्शकः ॥ ९

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा रूक्षं रूक्षाक्षरं बहु ।

1. क—स्त्रीधर्मा चापविद्धश्च । ग—स्त्रीधर्मा च वृद्धश्च ।
ख-घ—स्त्रीसधर्मश्च

चुकोप बलिनां श्रेष्ठो भीमसेनः प्रतापवान् ॥ १०
तस्य पद्मप्रतीकाशे स्वभावायतविस्तृते ।
भूयः कोपात् सुसंरक्ते सम्बभूवतुरक्षिणी ॥ ११
त्रिशिखां भ्रुकुटीं चास्य ददृशुस्सर्वपार्थिवाः ।
ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव ॥ १२
दन्तान् सन्दशतस्तस्य कोपाद्ददृशुराननम् ।
युगान्ते सर्वभूतानि कालस्येव दिधक्षतः ॥ १३
उत्पतन्नात्मवेगेन जग्राहैनं मनस्विनम् ।
भीष्म एव महाबाहुर् महासेनमिवेश्वरः ॥ १४
तस्य भीमस्य भीष्मेण वार्यमाणस्य भारत ।
गुरोर्बहुविधैर्वाक्यैः क्रोधः प्रशमनं ययौ ॥ १५
नातिचक्राम भीष्मस्य स हि वाक्यमरिन्दमः ।
समुद्धूतो घनापाये वेलामिव महोदधिः ॥ १६
शिशुपालस्तु सङ्क्रुद्धे भीमसेने परन्तपे ।
नाकम्पत महाबाहुः पौरुषे महति स्थितः ॥ १७
उत्पपातात्मवेगेन पुनः पुनररिन्दमः ।
न स तं चिन्तयामास सिंहः क्षुद्रमृगं यथा ॥ १८
प्रहसंश्चाब्रवीद्वाक्यं चेदिराजः प्रतापवान् ।

भीमसेनमतिक्रुद्धं मत्वा भीमपराक्रमम् ॥ १९

शिशुपालः—

मुञ्चैनं भीष्म यावच्च पश्यन्तु वसुधाधिपाः ।
मत्प्रतापेन निर्दग्धं पतङ्गमिव वह्निना ॥ २०

वैशम्पायनः—

ततश्चेदिपतेर्वाक्यं तच्छ्रुत्वा कुरुसत्तमः ।
भीमसेनमुवाचेदं भीष्मो मतिमतां वरः ॥ २१

भीष्मः—

नैषा चेदिपतेर्बुद्धिर् यया त्वाऽऽह्वयतेऽच्युतम् ।
भीमसेन महाबाहो [1]कृष्णस्यैष विनिश्चयः* ॥ २२

चेदिराजकुले जातस् त्र्यक्ष एष चतुर्भुजः ।
रासभारावसदृशं रुराव च ननाद च ॥ २३

तेन शब्देन [2]वित्रस्तौ पितरौ सह बान्धवैः ।
वैकृतं तच्च तौ दृष्ट्वा त्यागायाकुरुतां मतिम् ॥ २४

ततस्सभार्यं तु नृपं सामात्यं सपुरोहितम् ।
चिन्तासम्मूढहृदयं वागुवाचाशरीरिणी ॥ २५

एष ते नृपते पुत्रश् श्रीमाञ्जातो महाबलः ।

---

1. क-ख-ग-घ-ङ—कृष्णेऽस्य वधनिश्चयः ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

2. क—वित्रस्ताः पितरस्सहबान्धवाः ।

तस्मादस्मान्न भेतव्यम् अव्यग्रं पाल्यतांशिशुः ॥ २६
न चैवैतस्य मृत्युस्त्वं न कालः प्रत्युपस्थितः ।
एतस्य मृत्युरुत्पन्नश् शस्त्रेणैनं हनिष्यति ॥ २७
[1]तच्छ्रुत्वोदाहृतं वाक्यं भूतेनान्तर्हितेन सा ।
पुत्रस्नेहाभिसन्तप्ता जननी वाक्यमब्रवीत् ॥ २८
येनेदमीरितं वाक्यं ममेमं तनयं प्रति ।
प्राञ्जलिस्तं नमस्यामि ब्रवीतु स पुनर्वचः ॥ २९
महद्बलं महद्भूतम् इत्युक्त्वा पुनरुत्तरम् ।
श्रोतुमिच्छामि तत्त्वेन कोऽस्य मृत्युर्भविष्यति ॥ ३०
ततस्तैः खेचरैर्भूतैर् उत्तरं समुदाहृतम् ॥ ३०॥
येनोत्सङ्गगृहीतस्य भुजावभ्यधिकावुभौ ।
पतिष्यतस्तु सम्भग्नौ सोऽस्य मृत्युर्भविष्यति ॥ ३१॥
यस्योत्सङ्गगृहीतस्य तदेवाक्षि ललाटजम् ।
निमज्जिष्यति संस्पृष्टे सोऽस्य मृत्युर्भविष्यति ॥ ३२॥
त्र्यक्षं चतुर्भुजं श्रुत्वा एतच्च समुदाहृतम् ।
धरण्यां पार्थिवास्सर्वे तत्राजग्मुर्दिदृक्षवः ॥ ३३॥
तान् पूजयित्वा सम्प्राप्तान् यथार्हं प्रतिपूज्य च ।
एकैकस्य नृपस्याङ्के पुत्रमारोपयत् ततः ॥ ३४॥

1. ख-घ-ङ—इदमर्धद्वयं नास्ति ।

एवं राजसहस्राणां पृथक्त्वेन यथाक्रमम् ।
शिशुरङ्के समारूढो न तत् प्राप निदर्शनम् ॥ ३५॥
एतदेव तु संश्रुत्य द्वारवत्यां महाबलौ ।
ततश्चेदिपुरं प्राप्तौ सङ्कर्षणजनार्दनौ ॥ ३६॥
यादवौ यादवीं द्रष्टुं स्वसारं तां पितुस्ततः ॥ ३७
तौ दामघोषं राजानम् अभिवाद्य यथाक्रमम् ।
अभिवाद्य यथान्यायं यथाश्रेष्ठं नृपांश्च तान् ॥ ३८
कुशलानामयं पृष्ट्वा निषण्णौ रामकेशवौ ॥ ३८॥
साऽभ्यर्च्य तौ तदा वीरौ प्रीत्या चाभ्यधिकं ततः ।
पुत्रं दामोदरोत्सङ्गे देवी सा सन्न्यधात् स्वयम् ॥ ३९॥
न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ ।
पेततुस्तच्च नयनं निममज्ज ललाटजम् ॥ ४०॥
तद्दृष्ट्वा व्यथिता देवी वरं कृष्णमयाचत ॥ ४१
ददस्व मे वरं कृष्ण भयार्ताया महाभुज ।
त्वं ह्यार्तानां समाश्वासो भीतानामभयङ्करः ॥ ४२
पितृष्वसारं मा भैषीर् इत्युवाच जनार्दनः ॥ ४२॥

कृष्णः—

ददामि कं वरं देवि किं वा कार्यं पितृष्वसः ।
[1]शक्यं वा यदि वाऽशक्यं करिष्यामि वरं तव ॥ ४३॥

1. अ-कोशे—अर्धषट्कं नास्ति।

भीष्मः—

एवमुक्ता ततः कृष्णम् अब्रवीद्यदुनन्दनम् ॥ ४४

देवी—

क्षमस्व शिशुपालस्य अपराधं महाबल ॥ ४४॥

भीष्मः—

इत्युक्तः पुण्डरीकाक्षः प्रत्युवाच महाबलः ॥ ४५

कृष्णः—

अपराधशतं क्षाम्यं स मया वै पितृष्वसः ।
पुत्रस्य ते वधार्हस्य मा त्वं शोके मनः कृथाः ॥ ४६

भीष्मः—

[1]एवमेतत् पुरावृत्तं शिशावस्मिन् वृकोदर । ४६॥
स जानन्नात्मनो मृत्युं कृष्णं यदुसुखावहम् ।
तेन त्वामाह्वयच्चैद्यो गोविन्दवरदर्पितः* ॥ ४७॥
नैषा चेदिपतेर्बुद्धिर् यया त्वा ह्वयतेऽच्युतम् ।
नूनमेष जगद्भर्तुः कृष्णस्यैव विनिश्चयः ॥ ४८॥
को हि मां भीमसेनान्यः क्षेप्तुमर्हति पार्थिवः ।
क्षितावेवं परीतात्मा यथैष कुलपांसनः ॥ ४९॥
एष ह्यस्य महाबाहुस् तेजोंशश्च हरेर्ध्रुवम् ।
तमेव पुनरादातुं कुरुतेऽत्र मतिं हरिः ॥ ५०॥

---

1. अ-ख-ग-घ-ङ—कोशेषु इदमर्धं नास्ति ।
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

तेनैव कुरुशार्दूल शार्दूल इव चेदिराट् ।
गर्जेत्यतीव दुर्बुद्धिस् सर्वानस्मानचिन्तयन् * ॥ ५१ ॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ २६ ॥ शिशुपालवधपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[अस्मिन्नध्याये ५१॥ श्लोकाः]

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

शिशुपालेन राज्ञां प्रशंसनपूर्वकं श्रीकृष्णनिन्दा ॥ १ ॥ भीष्मेण राज्ञां तिरस्करणम् ॥ २ ॥ शिशुपालस्य श्रीकृष्णं प्रति युद्धोद्यमः ॥ ३ ॥

वैशम्पायनः—

ततो न ममृषे चैद्यस् तद्भीष्मवचनं पुनः ।
उवाचेदं सुसङ्क्रुद्धस् स भीष्मं पुनरुत्तरम् ॥ १

शिशुपालः—

द्विषतां नोऽस्तु भीष्मैष प्रभावः केशवस्य यः ।
यस्य संस्तववक्ता त्वं वन्दिवत् सततोत्थितः ॥ २

संस्तवाय मनो भीष्म परेषां रमते यदि ।
तदा संस्तुहि राज्ञस्त्वम् इमं हित्वा जनार्दनम् ॥ ३

वरदं स्तुहि बाह्लीकम् इमं पार्थिवसत्तमम् ।

* अ-कोशे नात्राध्यायसमाप्तिः ।

जायमानेन येनेयम् अभवद्दारिता मही ॥ ४

[1]त्वमङ्गविषयाध्यक्षं सहस्राक्षसमं बले ।
स्तुहि कर्णमिमं भीष्म महाचाप[2]विचक्षणम् ॥ ५

यस्यैते कुण्डले दिव्ये सहजे देवनिर्मिते ।
सहजं कवचं चाङ्गे बालार्कसदृशप्रभम् ॥ ६

द्रोणं द्रौणिं च साधु त्वं पितापुत्रौ महारथौ ।
स्तुहि स्तुत्याविमौ भीष्म सततं द्विजसत्तमौ ॥ ७
तयोरन्यतरं भीष्म न च संस्तोतुमिच्छसि ॥ ७॥
द्रोणस्य हि समं युद्धे न पश्यामि नराधिपम् ।

इमां वसुमतीं कुर्यान्निश्शेषामिति मे मतिः ॥ ८॥
नाश्वत्थाम्नस्समं भीष्म न च तौ स्तोतुमिच्छसि ॥ ९
पृथिव्यां सागरान्तायां यो वै प्रीतिकरोऽभवत् ॥ ९॥
दुर्योधनं त्वं राजेन्द्रम् अतिक्रम्य महाभुजम् ।
जयद्रथं च राजानं कृतास्त्रं दृढधन्विनम् ॥ १०॥
द्रुमं किम्पुरुषाचार्यं लोके प्रथितविक्रमम् ।
अतिक्रम्य महावीर्यं माधवं किं प्रशंससि ॥ ११॥

वृद्धं च भरताचार्यं कृपं शारद्वतं तथा ।

---

1. क-ख-ग-ङ—वङ्गाङ्ग ।　　घ—सर्वाङ्ग ।
2. क—विकर्षणम् ।　　अ—वरं सर्वधनुष्मताम् ।

अतिक्रम्य महात्मानं किं प्रशंससि गोपजम् ॥ १२॥
भीष्मकं च महावीर्यं दन्तवक्त्रं च भूमिपम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥ १३॥
भगदत्तं यूपकेतुं जयत्सेनं च मागधम् ।
शल्यप्रभृतिकान् हि त्वं न स्तौषि वसुधाधिपान् ॥ १४॥
स्तवाय यदि ते बुद्धिर् मन्यते भीष्म सर्वदा ॥ १५
किं हि शक्यं मया कर्तुं यद्वृद्धानां त्वया नृप ।
पुरा कथयतां नूनं न श्रुतं धर्मवादिनाम् ॥ १६
आत्मनिन्दाऽऽत्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्याणाम् इति ते भीष्म न श्रुतम् ॥ १७
यतस्तत इमं शश्वद् गोपं संस्तोतुमिच्छसि ।
केशवं तच्च ते भीष्म न कश्चित् साधु मन्यते ॥ १८
कथं भोजस्य पुरुषे वत्सपाले दुरात्मनि ।
समावेशयसे सर्वं जगत् [1]केशवकाम्यया ॥ १९
अथ चैषा न ते [2]भक्तिः प्रकृतिं याति भारत ।
तेनैवं वन्दिवत् स्तौषि श्रुतमन्येन नश्श्रुतम् ॥ २०
न गाथा गाथिनं शास्ति बहु चेदपि गायति ।
प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथा ॥ २१

1. अ—केवल.
2. क-ग-घ-ङ—बुद्धिः । ख-घ—शक्तिः ।

कुलिङ्गशकुनिर्नाम पार्श्वे हिमवतः [1]परे ।
भीष्म तस्यास्सदा वाचश् श्रूयन्तेऽर्थविगर्हिताः ॥ २२

मा साहसमितीदं सा सततं वाशते किल ।
साहसं चात्मना भीष्म कुर्वती नावबुध्यते ॥ २३

सा हि [2]मांसार्गलं भीष्म मुखात् सिंहस्य भारत ।
दन्तान्तरविलग्नं यत् तदादत्तेऽल्पचेतना ॥ २४

इच्छतस्सा हि सिंहस्य भीष्म जीवत्यसंशयम् ।
तद्वत् त्वमप्यधर्मिष्ठ सदा वाचः प्रभाषसे ॥ २५

इच्छतां पार्थिवेन्द्राणां भीष्म जीवस्यसंशयम् ।
लोकविद्विष्टकर्मा हि नान्योऽस्ति भवता समः ॥ २६

वैशम्पायनः—

ततश्चेदिपतेश्श्रुत्वा भीष्मस्स कटुकं वचः ।
उवाच वचनं धीमाञ् चेदिराजस्य शृण्वतः ॥ २७

भीष्मः—

इच्छतां किल नामाहं जीवाम्येषां महीभृताम् ।
योऽहं न गणयाम्येतांस् तृणवत् सर्वपार्थिवान् ॥ २८

वैशम्पायनः—

एवमुक्ते तु भीष्मेण ततस्सञ्चुक्रुशुर्नृपाः ।

---

1. अ-ख-व—पुरा ।
2. क—मांसोऽर्गलं । ख-ग-व-ङ—मांसं तदा ।

केचिज्जहृषिरे तत्र केचिद्भीष्मं जगर्हिरे ॥ २९

केचिदूचुर्महेष्वासाश् श्रुत्वा भीष्मस्य तद्वचः ॥ २९॥

राजानः—

पापोऽवलिप्तो वृद्धश्च नायं भीष्मोऽर्हति क्षमां ।
हन्यतां दुर्मतिर्भीष्मः पशुवत् साध्वयं नृपैः ॥ ३०॥

समेत्य सर्वैः पापात्मा दह्यतां वा कटाग्निना ॥ ३१

वैशम्पायनः—

इति तेषां वचश्श्रुत्वा वृद्धः कुरुपितामहः ।
उवाच मतिमान् भीष्मस् तानेवं वसुधाधिपान् ॥ ३२

भीष्मः—

उक्तस्योक्तस्य चैवान्तं नाहं समुपलक्षये ।
यत्तु वक्ष्यामि तत् सर्वं शृणुध्वं वसुधाधिपाः ॥ ३३

पशुवद्धातनं वा मे दहनं वा कटाग्निना ।
क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सव्यकं पदम् ॥ ३४

एष तिष्ठति गोविन्दः पूजितोऽस्माभिरीश्वरः ।
यस्य च त्वरते बुद्धिर् मरणाय तु वो नृपाः ॥ ३५

कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम् ।
यावदस्यैव देवस्य देहं विशतु पातितः* ॥ ३६

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

वैशम्पायनः—

वचश्श्रुत्वैव भीष्मस्य चेदि[1]राडुरुविक्रमः ।
युयुत्सु[2]र्देवदेवं तं वासुदेवमुवाच ह ॥ ३७

शिशुपालः—

आह्वये त्वां रणायैहि मया सह जनार्दन ।
यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवैः ॥ ३८

स च भीष्मो हि मे वध्यः पाण्डवाः कृष्ण सर्वशः ।
नृपतीन् समतिक्रम्य यैरराजा त्वमर्चितः ॥ ३९

यो हि गोपमराजानं समतिक्रम्य पार्थिवान् ।
अनर्च्यमर्चयत्येवं स वध्य इति मे मतिः ॥ ४०

वैशम्पायनः—

इत्युक्त्वा राजशार्दूलश् शार्दूल इव [3]नानदत् ।
पश्यतां [4]सर्वभूतानां शिशुपालः प्रतापवान् ॥ ४१

स रणायैव सङ्क्रुद्धस् सन्नद्धस्सर्वराजभिः ।
सुनीथः प्रययौ क्षिप्रं पार्थयज्ञजिघांसया ॥ ४२

ततश्चक्रगदापाणिः केशवः केशिहा हरिः ।
सुस्वरं रथमास्थाय दारुकेण सुसत्कृतम् ॥ ४३

भीष्मेण दत्तहस्तोऽसौ युद्धाय समुपस्थितः ॥ ४३॥

---

1. ख-घ—राट् सुरविक्रमः ।    2. अ-क—वासुदेवेन
3. ख-घ—नादयत् ।    4. अ-क-ख-घ—भूमिपालानां

तेन पापस्वभावेन कोपितान् सर्वपार्थिवान् ।
आससाद तदा कृष्णस् सज्जितैकरथे स्थितः ॥ ४४॥
ततः पुष्करपत्राक्षं गरुडध्वजमच्युतम् ।
दिवाकरमिवोद्यन्तं ददृशुस्सर्वपार्थिवाः ॥ ४५॥
दृष्ट्वा कृष्णमथायान्तं प्रतपन्तमिवौजसा ।
[1]स्थितं पुष्परथे दिव्ये पुष्पकेतुमिवापरम् ॥ ४६॥
यथार्हं केशवे वृत्तिम् अवशाः प्रतिपेदिरे ॥ ४७
तानुवाच महाबाहुर् महासुरनिबर्हणः ।
वृष्णिवीरस्तदा राजन् सान्त्वयन् परवीरहा ॥ ४८

श्रीभगवान्—

अपेत सबलास्सर्वे आश्वस्ता मम शासनात् ।
[2]मा दुष्टो दूषयेत् पाप एष वै सर्वपार्थिवान् ॥ ४९
एष नश्शत्रुरत्यन्तम् एष वृष्णिविमर्दनः ।
सात्वतां सात्वतीपुत्रो वैरं चरति शाश्वतम् ॥ ५०
प्राग्ज्योतिषवधे यातान् अस्माञ्ज्ञात्वा नृशंसकृत् ।
अदहद्द्वारकामेष स्वस्रीयस्सन्नराधिपाः ॥ ५१
क्रीडतो भोजराजन्यान् एष रैवतके गिरौ ।
गत्वा हत्वा च बध्वा च स्वपुरं तानथानयत् ॥ ५२

1. अ—कोश इदमर्धं नास्ति। 2. अ-ख-ग-घ—अदुष्टान्।

अश्वमेधे हयं मेध्यम् उत्सृष्टं रक्षिभिर्वृतम् ।
अपाहरत् पापबुद्धिः पुरा यज्ञजिघांसया ॥ ५३

सौभराट्प्रतिपत्तौ च बभ्रोरेष [1]तपस्विनः ।
भार्यामभ्यहरत् पापाद् अकामां धर्मतो गताम् ॥ ५४

एष मायाप्रतिच्छन्नः [2]करूशार्थे तपस्विनीम् ।
जहार भार्यां वैशालीं मातुलस्य नृशंसकृत् ॥ ५५

[3]वृष्णिदारान् विलाप्यैष हत्वा च कुकुरान्धकान् ।
पापबुद्धिरुपातिष्ठत् स प्रविश्य ससम्भ्रमम् ॥ ५६

विशालराज्ञो दुहितां मम पित्रा वृतां सतीम् ।
अनेन कृत्वा सन्धानं करूशेन जिहीर्षया ॥ ५७

जरासन्धं समाश्रित्य कृतवान् विप्रियाणि मे ॥ ५७॥
तानि सर्वाणि सङ्ख्यातुं न शक्नोमि धराधिपाः ॥ ५८

एवमेतदपर्यन्तम् एष वृष्णिषु किल्बिषी ।
अस्माकमयमारम्भांश् चकार परमानृजुः ॥ ५९

शतं क्षन्तव्यमस्माभिर् वधार्हाणां किलागसाम् ।
बद्धोऽस्मि समयैर्घोरैर् मातुरस्यैव सङ्गरे ॥ ६०

तत् तथा शतमस्माकं क्षान्तं क्षयकरं मया ।

---

1. अ-ख-घ—यशस्विनः ।　　2. क-ख-ग-घ-ङ—कारूशार्थे ।
3. ख-ग-घ-ङ—अर्धद्वयं नास्ति ।

द्वौ तु मे वधकालेऽस्मिन् न क्षन्तव्यौ कथञ्चन ॥ ६१
यज्ञविघ्नकरं हन्यां पाण्डवानां च दुर्हृदम् ।
इति मे वर्तते भावस् तमतीयां कथन्न्वहम् ॥ ६२
पितृष्वसुः कृते दुःखं सुमहन्मर्षयाम्यहम् ।
दिष्ट्या त्विदं सर्वराज्ञां सन्निधावद्य वर्तते ॥ ६३
पश्यन्तु हि भवन्तोऽद्य मय्यतीव व्यतिक्रमम् ।
कृतानि तु परोक्षं मे यानि तानि निबोधत ॥ ६४
[1]इमं त्वस्य न शक्ष्यामि क्षन्तुमद्य व्यतिक्रमम् ।
अवलेपाद्वधार्हस्य समग्रे राजमण्डले ॥ ६५
रुक्मिण्यामस्य मूढस्य प्रार्थनाऽऽसीन्मुमूर्षतः ।
न चैनां प्राप्तवान् मूढश् शूद्रो वेदश्रुतिं यथा ॥ ६६

वैशम्पायनः—

एवमादि ततस्सर्वे विस्तरेण नराधिपाः ।
गर्हणं शिशुपालस्य वासुदेवेन [2]शुश्रुवुः ॥ ६७
[3]वासुदेववचश्श्रुत्वा प्राद्रवन् सर्वपार्थिवाः ।
[4]विहाय परमोद्विग्नाश् चेदिराजं चमूमुखे ॥ ६८

---

1. अ—कोशे इदमर्धं नास्ति।
2. क—श्राविताः (ख) विस्तृतम्। अ—विश्रुताः।
3. अ-कोश इदमर्धं नास्ति
4 अ-कोशे—रथोपस्थे धनुष्मन्तं शरान् संदधतं रुषा।
श्रुत्वाऽपि च विलोक्याशु दुद्रुवुस्सर्वपार्थिवाः॥
[अधिकः पाठः]

स तांस्तु विद्रुतान् सर्वान् साश्वपत्तिरथद्विपान् ।
[1]तदा तद्वृष्णिवीरेण त्रासितानुरुविक्रमान् ॥ ६९

कृष्णतेजोहतान् सर्वान् समीक्ष्य वसुधाधिपान् ।
शिशुपालो रथेनैकः प्रत्युपायात् स केशवम् ॥ ७०

रुषा ताम्रेक्षणो राजन् शलभः पावकं यथा ॥ ७०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ २६ ॥ शिशुपालवधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[ अस्मिन्नध्याये ७०॥ श्लोका ]

---

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

शिशुपालस्य दुर्निमित्तोत्पत्तिः ॥ १ ॥ नारदेन तत्तदुत्पातानां विशिष्य फलकथनम् ॥ २ ॥

---

**वैशम्पायनः—**

ततो युद्धाय सन्नद्धं चेदिराजं युधिष्ठिरः ।
दृष्ट्वा मतिमतां श्रेष्ठो नारदं समुवाच ह ॥ १

**युधिष्ठिरः—**

अन्तरिक्षे च भूमौ च न तेऽस्त्यविदितं क्वचित् ।
यानि राजविनाशाय भौमानि च खगानि च ॥ २

---

1. अ—कोश इदमर्धं नास्ति । क-ख-ग-घ-ङ—दारितान् ब्रू ।

निमित्तानीह जायन्ते उत्पाताश्च पृथग्विधाः ।
एतदिच्छामि कार्त्स्न्येन श्रोतुं त्वत्तो महामुने ॥ ३

वैशम्पायनः—

इत्येवं मतिमान् विप्रः कुरुराजस्य धीमतः ।
पृच्छतस्सर्वमव्यग्रम् आचचक्षे महायशाः ॥ ४

नारदः—

पराक्रमं च मार्गं च सन्निपातं समुच्छ्रयम् ।
आरोहणं कुरुश्रेष्ठ अन्योन्यं प्रतिसर्पणम् ॥ ५
रश्मीनां व्यतिसंसर्गं व्यायामं वृत्तिपीडनम् ।
दर्शनादर्शनं चैव अदृश्यानां च दर्शनम् ॥ ६
हानिं वृद्धिं च ह्रासं च वर्णस्थानं बलाबलम् ।
सर्वमेतत् परीक्षेत ग्रहाणां ग्रहकोविदः ॥ ७
भौमाः पूर्वं प्रवर्तन्ते खेचराश्च ततः परम् ।
उत्पद्यन्ते च लोकेऽस्मिन्नुत्पाता देवनिर्मिताः ॥ ८
यदा तु सर्वभूतानां छाया न परिवर्तते ।
अपरेण गते सूर्ये तत् पराभवलक्षणम् ॥ ९
अच्छाये विमलच्छाया प्रतिच्छायेव लक्ष्यते ।
यत्र चैत्यकवृक्षाणां तत्र विद्यान्महद्भयम् ॥ १०
शीर्णपर्णप्रवालाश्च शुष्कपर्णाश्च चैत्यकाः ।

अपभ्रष्टप्रवालाश्च तत्राभावं विनिर्दिशेत् ॥ ११

स्निग्धपत्रप्रवालाश्च दृश्यन्ते यत्र चैत्यकाः ।
ईहमानाश्च [1]दृष्टाश्च भावस्तत्र न संशयः ॥ १२

पुष्पे पुष्पं प्रजायेत फले वा फलमाश्रितम् ।
राजा वा राजमात्रो वा मरणायोपपद्यते ॥ १३

प्रावृट्छरदि हेमन्ते वसन्ते वाऽपि सर्वशः ।
अकालजं पुष्पफलं राष्ट्रक्षोभं विनिर्दिशेत् ॥ १४

नदीनां स्रोतसोऽकाले द्योतयन्ति महाभयम् ॥ १४॥

वनस्पतिः पूज्यमानः पूजितोऽपूजितोऽपि वा ।
यदा भज्येत वातेन भिद्यते [2]नमतेऽपि वा ॥ १५॥

अग्निवायुभयं विद्याच्छ्रेष्ठो वापि विनश्यति ॥ १६

दिशस्सर्वाश्च दीप्यन्ते जायन्ते राजविभ्रमाः ॥ १६॥

छिद्यमानो यदा वृक्षो विनदेच्चापि पातितः ।
सह राष्ट्रं च पतितं न तं वृक्षं प्रपातयेत् ॥ १७॥

अथैनं छेदयेत् कश्चित् प्रतिक्रुद्धो वनस्पतिम् ।
छेत्ता भेत्ता पतिश्चैव क्षिप्रमेव विनश्यति ॥ १८॥

देवतानां च पतनं मण्डपानां च घुष्टनम् ।
अचलानां प्रकम्पश्च तत् पराभवलक्षणम् ॥ १९॥

---

1. ख-घ—पृष्टाश्च । अ—मृष्टाश्च ।  2. ग-घ-ङ—नमितोऽपि वा ।

निशि चेन्द्रधनु[1]र्दृष्टं ततोऽपि च महद्भयम् ।
तद्दृष्टुरेव भीतिस्स्यान्नान्येषां भरतर्षभ ॥ २०॥
रात्राविन्द्रधनुर्दृष्ट्वा तद्राष्ट्रं परिवर्जयेत् ॥ २१
देवता यत्र नृत्यन्ति नदन्ति च हसन्ति च ।
उन्मीलन्ति निमीलन्ति राष्ट्रक्षोभं विनिर्दिशेत् ॥ २२
शिला यत्र प्रसिञ्चन्ति स्नेहांश्चोदकसम्भवान् ।
अन्यद्वा विकृतं किञ्चित् [2]तद्भयस्य निदर्शनम् ॥ २३
म्रियते वा महामात्रो राजा सपरिवारकः ।
पुरस्य वा भवेद्व्याधी राष्ट्रे देशे च विभ्रमाः ॥ २४
देवतानां यदाऽऽवासे राज्ञां वा यत्र वेश्मनि ।
भाण्डागारायुधागारे निविशेत यदा मधु ॥ २५
सर्वं [3]तद्दाहयेत् स्थानं हन्यमानं बलीयसा ॥ २५॥
आगन्तुकं भयं तत्र भवेदित्येव निर्दिशेत् ॥ २६
पादपश्चैव यो यत्र रक्तं स्रवति शोणितम् ।
दन्ताग्रात् कुञ्जरो वाऽपि शृङ्गाद्वा वृषभस्तथा ॥ २७
पादपाद्राष्ट्रविभ्रंशः कुञ्जराद्राजविभ्रमः ।
गोब्राह्मणविनाशस्स्याद् वृषभस्येति निर्दिशेत् ॥ २८

---

1. ख-ख—दृष्ट्वा तद्राष्ट्रं परिवर्जयेत् ।
2. क-ख—तत् पराभवलक्षणम् ।
3. ग-ङ—तदा भवेत् ।

[1]छत्रं नरपतेर्यस्य निपतेत् पृथिवीतले ।
सराष्ट्रो नृपती राजन् क्षिप्रमेव विनश्यति ॥ २९

देवागारेषु वा यत्र राज्ञो वा यत्र वेश्मनि ।
विकृतं यदि दृश्येत नागावासेषु वा पुनः ॥ ३०

तस्य देशस्य पीडा स्याद् राज्ञो जनपदस्य वा ।
अनावृष्टिभयं घोरं दुर्भिक्षमिति निर्दिशेत् ॥ ३१

बाहुभङ्गे तु देवानां गृहस्थानां भयं भवेत् ।
भग्ने प्रहरणे विद्यात् सेनापतिविनाशनम् ॥ ३२

आगन्तुका च प्रतिमा स्थानं यत्र न विन्दति ।
अभ्यन्तरेण षण्मासाद् राजा त्यजति तत् पुरम् ॥ ३३

प्रदीर्यते मही यत्र विनदत्यपि पात्यते ।
म्रियते तत्र राजा च तच्च राष्ट्रं विनश्यति ॥ ३४

एणीपदान् वा सर्पान् वा डुण्डुभानथ दीप्यकान् ।
मण्डूको ग्रसते यत्र तत्र राजा विनश्यति ॥ ३५

अभिन्नं वाऽप्यपक्वं वा यत्रान्नमुपचीयते ।
जीर्यन्ते वा म्रियन्ते वा तदन्नं नोपभुञ्जते ॥ ३६

उदपाने च यत्रापो विवर्धन्ते युधिष्ठिर ।
स्थावरेषु प्रवर्तन्ते निर्गच्छेच्च पुनस्ततः ॥ ३७

---

1. अ—कोशे इदमर्धं नास्ति ।

अपादं वा त्रिपादं वा द्विशीर्षं वा चतुर्भुजम् ।
स्त्रियो यत्र प्रसूयन्ते ब्रूयात् तत्र पराभवम् ॥ ३८

हस्तिनी महिषी गौर्वा खरोष्ट्रमथ सूकरम् ।
ईदृशानि प्रजायन्ते विद्यात् तत्र पराभवम् ॥ ३९

अजैडकास्त्रियो गावो ये चान्ये वा वियोनयः ।
विकृतानि प्रजायन्ते तत्र तत्र पराभवः ॥ ४०

नदी यत्र प्रतिस्रोता आवहेत् कलुषोदकम् ।
दिशश्च न प्रकाशन्ते तत् पराभवलक्षणम्* ॥ ४१

एतानि च निमित्तानि यानि चान्यानि भारत ।
[1]केशवादेव जायन्ते भौमानि च खगानि च ॥ ४२

चन्द्रादित्यौ ग्रहाश्चैव नक्षत्राणि च भारत ।
वायुरग्निस्तथैवापः पृथिवी च जनार्दनात् ॥ ४३

यस्य देशस्य हानिं वा वृद्धिं वा कर्तुमिच्छति ।
तस्मिन् देशे निमित्तानि तानि तानि करोत्ययम् ॥ ४४

योऽसौ चेदिपतेस्तात विनाशस्समुपस्थितः ।
निवेदयति गोविन्दस् स्वैरुपायैर्न संशयः ॥ ४५

इयं प्रचलिता भूमिर् अशिवं वान्ति मारुताः ।
राहुश्चाप्यपतत् सोमम् अपर्वणि विशाम्पते ॥ ४६

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. क-ख-ग-घ-ङ--कोशेषु इदमर्धं नास्ति ।

सनिर्घाताः पतन्त्युल्कास् तमस्सञ्जायते भृशम् ।
चेदिराजविनाशाय हरिरेष विजृम्भते ॥ ४७

वैशम्पायनः—

एवमुक्त्वा तु भगवान् नारदो विरराम ह ॥ ४७॥
ताभ्यां पुरुषसिंहाभ्यां तस्मिन् युद्ध उपस्थिते ।
ददृशुर्भूमिपालास्ते घोरानौत्पातिकान् बहून् ॥ ४८॥
[1]तत्र तैर्दृश्यमानानां दिक्षु सर्वासु भारत ।
अश्रूयन्त तदा राजन् छिवानामशिवा गिरः ॥ ४९॥
ररास च मही कृत्स्ना सवृक्ष[2]पुरपर्वता ।
अपर्वणि च मध्याह्ने सूर्यं स्वर्भानुरग्रसत् ॥ ५०॥
ध्वजाग्रे चेदिराजस्य सर्वरत्नपरिष्कृते ।
अपतत् खाच्च्युतो गृध्रस् तीक्ष्णतुण्डः परन्तप ॥ ५१॥
आरण्यैस्सहसा हृष्टा ग्राम्याश्च मृगपक्षिणः ।
चुक्रुशुर्भैरवं तत्र तस्मिन् युद्ध उपस्थिते ॥ ५२॥
एवमादीनि घोराणि भौमानि च खगानि च ।
औत्पातिकान्यदृश्यन्त सङ्क्रुद्धे शार्ङ्गधन्वनि ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ २६ ॥ शिशुपालवधपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ५३॥ श्लोकाः]

---

1 क-अ—सततं वाश्यमानानां । 2. अ—तृण क—कुल ।

## ॥ षट्चत्वारिंशोऽध्यायः ॥

श्रीकृष्णशिशुपालयोर्युद्धवर्णनम् ॥ १ ॥ शिशुपालवधः ॥ २ ॥

वैशम्पायनः—

महद्विष्फारयन् राजा ततश्चेदिपतिर्धनुः ।
अभियास्यन् हृषीकेशम् उवाच मधुसूदनम् ॥ १

शिशुपालः—

एकस्त्वमसि मे शत्रुस् तत् त्वां हत्वाऽद्य माधव ।
ततस्सागरपर्यन्तां पालयिष्यामि मेदिनीम् ॥ २

द्वैरथं काङ्क्षितं यन्मे तदिदं पर्युपस्थितम् ।
चिरस्य वत मे दिष्ट्या वासुदेव सह त्वया ॥ ३
अद्य त्वां निहनिष्येऽहं भीष्मं च सह पाण्डवैः ॥ ३॥

वैशम्पायनः—

एवमुक्त्वा स तं बाणैर् निशितैरात्ततेजनैः ।
विव्याध युधि तीक्ष्णाग्रैश् चेदिराड्यदुपुङ्गवम् ॥ ४॥

कङ्कपत्रच्छदा बाणाश् चेदिराजधनुश्च्युताः ।
विविशुस्ते तदा कृष्णं भुजङ्गा इव पर्वतम् ॥ ५॥

नाददानस्य चैद्यस्य शरानत्यस्यतोऽपि वा ।
ददृशुस्तेऽन्तरं केचिद् गतिं वायोरिवाम्बरे ॥ ६॥

चेदिराजमहामेघश् शरजालाम्बुमांस्तदा ।
अभ्यवर्षद्धृषीकेशं पयोद इव पर्वतम् ॥ ७॥

ततश्शार्ङ्गममितघ्नं कृत्वा सशरमच्युतः ।
आबभाषे महाबाहुस् सुनीथं परवीरहा ॥ ८॥

श्रीभगवान्—

अयं त्वां मामकस्तीक्ष्णश् चेदिराज महाशरः ।
भेत्तुमर्हति वेगेन महाशनिरिवाचलम् ॥ ९॥

वैशम्पायनः—

एवं ब्रुवति गोविन्दे ततश्चेदिपतिः पुनः ।
मुमोच निशितानन्यान् कृष्णं प्रति शरान् बहून् ॥ १०॥

अथ बाणार्दितः कृष्णश् शार्ङ्गमायम्य दीप्तिमान् ।
मुमोच निशितान् बाणाञ् छतशोथ सहस्रशः ॥ ११॥

ताञ्छरांस्तु स चिच्छेद शरवर्षैश्च चेदिराट् ।
षड्भिश्चान्यैर्जघानाशु केशवं चेदिपुङ्गवः ॥ १२॥

ततोऽस्त्रं सहसा कृष्णः प्रमुमोच जगत्पतिः ।
अस्त्रेणैव महाबाहुर् नाशयामास चेदिराट् ॥ १३॥

ततश्शतसहस्रेण शराणां नतपर्वणाम् ।
सर्वतस्समवाकीर्य शौरिं दामोदरं तदा ॥ १४॥

ननाद बलवान् क्रुद्धश् शिशुपालः प्रतापवान् ॥ १५

इदं चोवाच सङ्क्रुद्धः केशवं परवीरहा ॥ १५॥

शिशुपालः—

अद्याङ्ग मामका बाणा भेत्स्यन्ति तव संयुगे ॥ १६

हत्वा त्वां ससुतामात्यान् पाण्डवांश्च तरस्विनः ।
आनृण्यमद्य यास्यामि जरासन्धस्य धीमतः ॥ १७

कंसस्य केशिनश्चैव नरकस्य तथैव च ॥ १७॥

वैशम्पायनः—

इत्युक्त्वा क्रोधताम्राक्षश् शिशुपालो जनार्दनम् ।
अदृश्यश्शरवर्षेण सर्वतस्समवाकिरन् ॥ १८॥

ततोऽस्त्रेणैव भगवान् अकृन्तत शरान् बहून् ।
निकृत्य च शरान् सर्वान् अन्तर्धातुं प्रचक्रमे ॥ १९॥

अन्तर्धानगतौ वीरौ शुशुभाते महाबलौ ॥ २०
साधु साध्विति भूतानि पूजयामासुरम्बरे ।
न दृष्टपूर्वमस्माभिर् युद्धमीदृशकं पुरा ॥ २१

ततः कृष्णं जघानाशु शिशुपालस्त्रिभिश्शरैः ।
कृष्णोऽपि बाणैर्विव्याध सुनीथं पञ्चभिर्युधि ॥ २२

ततस्सुनीथस्सप्तत्या नाराचैरर्दयद्बली ॥ २२॥

ततोऽतिविद्धः कृष्णेन सुनीथः क्रोधमूर्छितः ।
विव्याध निशितैर्बाणैर् वासुदेवं स्तनान्तरे ॥ २३॥

पुनः कृष्णं त्रिभिर्विद्ध्वा ननादावसरे नृपः ॥ २४
ततोऽतिदारुणं युद्धं सहसा चक्रतुश्शरैः ।
तौ नखैरिव शार्दूलौ दन्तैरिव गजोत्तमौ ॥ २५
दंष्ट्राभिरिव पञ्चास्यौ तुण्डकैरिव कुक्कुटौ ।
दारयेतां शरैस्तीक्ष्णैर् अन्योन्यं युधि तावुभौ ॥ २६
ततो मुमुचतुः क्रुद्धौ शरवर्षमनुत्तमम् ॥ २६॥
शरैरेव शराञ्छित्वा तावुभौ पुरुषर्षभौ ।
चक्रातेऽस्त्रमयं युद्धं घोरं तदतिमानुषम् ॥ २७॥
आग्नेयमस्त्रं मुमुचे शिशुपालः प्रतापवान् ।
वारुणेनास्त्रयोगेन नाशयामास केशवः ॥ २८॥
कौबेरमस्त्रं सहसा चेदिराट् प्रमुमोच ह ।
कौबेरेणैव सहसाऽनाशयत् तं जगत्प्रभुः ॥ २९॥
याम्यमस्त्रं ततः क्रुद्धो मुमुचे कालमोहितः ।
याम्येनैवास्त्रयोगेन याम्यमस्त्रं व्यनाशयत् ॥ ३०॥
गान्धर्वेण च गान्धर्वं मानवं मानवेन च ।
वायव्येन च वायव्यं रौद्रं रौद्रेण चाभिभूः ॥ ३१॥
ऐन्द्रमैन्द्रेण भगवान् वैष्णवेन च वैष्णवम् ।
एवमस्त्राणि कुर्वाणौ युयुधाते महाबलौ ॥ ३२॥
ततो मायां विकुर्वाणो दमघोषसुतो बली ।

गदामुसलवर्षं तच् छक्तितोमरसायकान् ॥ ३३॥
परश्वथमुसुण्डीश्च पातयामास चेदिराट् ॥ ३४
अमोघास्त्रेण भगवान् व्यनाशयत केशवः ॥ ३४॥

शिलावर्षं महाघोरं पातयामास केशवे ।
वज्रास्त्रेणाभिसङ्क्रुद्धश् चूर्णमेवाकरोत् प्रभुः ॥ ३५॥
जलवर्षं ततो घोरं व्यसृजच्चेदिपुङ्गवः ।
वायव्यास्त्रेण भगवान् व्याक्षिपच्छतशो हरिः ॥ ३६॥

निहत्य सर्वमायां वै सुनीथस्य जनार्दनः ।
स मुहूर्तं चकाराशु द्वन्द्वयुद्धं महारथः ॥ ३७॥

स बाणयुद्धं कुर्वाणो भर्त्सयामास चेदिराट् ।
दमघोषसुतो धृष्टम् उवाच यदुनन्दनम् ॥ ३८॥

अद्य कृष्णमकृष्णं तु कुर्वन्तु मम सायकाः ॥ ३९
इत्येवमुक्त्वा दुष्टात्मा शरवर्षं जनार्दने ।
मुमोच पुरुषव्याघ्रो घोरमास्थाय तद्वपुः ॥ ४०
शरसङ्कृत्तगात्रस्तु क्षणेन यदुनन्दनः ।
रुधिरं परिसुस्राव सोऽतीव पुरुषोत्तमः ॥ ४१
न यन्ता न रथो वाऽपि न चाश्वाः पर्वतोपमाः ।
दृश्यन्ते शरसञ्छन्ना आविग्नमभवज्जगत् ॥ ४२

केशवं तदवस्थं तु दृष्ट्वा भूतानि चुक्रुशुः ॥ ४२॥
दारुकस्तु तदा प्राह केशवं परवीरहा ॥ ४३

दारुकः—

नेदृशो दृष्टपूर्वो हि सङ्ग्रामो यादृशो मया ॥ ४३॥
स्थातव्यमिति तिष्ठामि त्वत्प्रभावेण माधव ।
अन्यथा न च मे प्राणा धारयेयुर्जनार्दन ॥ ४४॥
इति सञ्चिन्त्य गोविन्द क्षिप्रमेव वधं कुरु ॥ ४५

वैशम्पायनः—

एवमुक्तस्तु सूतेन केशवो वाक्यमब्रवीत् ॥ ४५॥

श्रीभगवान्—

एष ह्यतिबलो दैत्यो हिरण्यकशिपुः पुरा ।
रिपुस्सुराणां दैत्येन्द्रो वरदानेन गर्वितः ॥ ४६॥
अथासीद्रावणो नाम [1]राक्षसेन्द्रोऽतिवीर्यवान् ।
तेनैव बलवीर्येण बलं नागणयन्मम ॥ ४७॥
अहं मृत्युश्च भविता काले काले दुरात्मनः ।
न भेतव्यं त्वया सूत नैष कश्चिन्मयि स्थिते ॥ ४८॥

वैशम्पायनः—

इत्येवमुक्त्वा भगवान् ननर्द गरुडध्वजः ।
पाञ्चजन्यं महाशङ्खं पूरयामास केशवः ॥ ४९॥

---

1. घ—राक्षसो नाम वीर्यवान् । अ—रक्षेन्द्रोह्येष वीर्यवान् ।

सम्मोहयित्वा भगवांश् चक्रं दिव्यं समाददे।
चिच्छेद च सुनीथस्य शिरश्चक्रेण संयुगे ॥ ५०॥

स पपात महाबाहुर् वज्राहत इवाचलः ॥ ५१
ततश्चेदिपतेर्देहात् तेजोऽग्र्यं ददृशुर्नृपाः ।

उत्पतन्तं तदा राजन् घनान्तादिव भास्करम् ॥ ५२
ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् ।

स्तुत्यं त्रैलोक्यवन्द्यं तम् [1]अस्तोतारमजं विभुम् ॥ ५३
[2]ववन्दे तत् तदा तेजो विवेश च नराधिप ॥ ५३॥

तदद्भुतं च ददृशुस् सर्व एव महीक्षितः ।
यद्विवेश महाबाहुं तत् तेजः पुरुषोत्तमम् ॥ ५४॥

अनभ्रा प्रववर्ष द्यौः पपात ज्वलिताऽशनिः ।
कृष्णेन निहते चैद्ये चचाल च वसुन्धरा ॥ ५५॥

ततस्सर्वे महीपाला नाब्रुवंस्तत्र किञ्चन ।
तदा सङ्क्रुद्धमनसः प्रेक्षमाणा जनार्दनम् ॥ ५६॥

हस्तैर्हस्ताग्रमपरे प्रत्यपिंषन्नमर्षणाः ।
अपरे दशनैरोष्ठं ददंशुः क्रोधमूर्छिताः ॥ ५७॥

रहस्तु केचिद्वार्ष्णेयं प्रशशंसुर्नराधिपाः ।

1. अ-ख-ब—अनन्तं तमजं विभुम्। अकर्तारमजं विभुम्।
2. अ—कोश इदमर्धं नास्ति।

केचिदेव तु सङ्क्रुद्धा मध्यस्थास्त्वपरे[1]ऽब्रुवन् ॥ ५८॥
ये देवगन्धर्वगणा राजानो भुवि विश्रुताः ।
ते प्रणामं हृषीकेशे प्रकुर्वन्ति महात्मनि ॥ ५९॥
ये त्वासुरगणान् पक्षान् सम्भूताः क्षत्रिया इह ।
ते निन्दन्ति हृषीकेशं दुरात्मानो गतायुषः ॥ ६०॥
प्रजापतिगणा ये तु मध्यस्थाश्च महात्मनि ॥ ६१
ब्रह्मर्षयश्च सिद्धाश्च गन्धर्वोरगचारणाः ।
केचित् स्तुवन्ति गोविन्दं दिव्यैर्मङ्गलसंयुतैः ॥ ६२
परस्परं च नृत्यन्ति गीतेन विविधेन च ।
उपतिष्ठन्ति गोविन्दं प्रीतियुक्ता महात्मनि ॥ ६३
प्रहृष्टाः केशवं जग्मुस् संस्तुवन्तो महर्षयः ।
ब्राह्मणाश्चापि सुप्रीताः [2]पाण्डवाश्च महाबलाः ॥ ६४
पाण्डवस्त्वब्रवीद्भ्रातॄन् [3]सत्कारेण महीपतिम् ।
दमघोषात्मजं शूरं [4]संस्कारयत मा चिरम् ॥ ६५
कुरुराजवचश्श्रुत्वा भ्रातरस्ते त्वरान्विताः ।
तथा च कृतवन्तस्ते भ्रातुर्वै शासनं तदा ॥ ६६

---

1. अ-क—ऽभवन्
2. क-ख-ग-घ—पार्थिवाश्च ।
3. अ-क—संकर्षेण । ख-घ संस्कारेण ।
4. क-ख-घ—संसाधयत ।

चेदीनामाधिपत्ये च पुत्रमस्य महीपतेः ।
अभ्यषिञ्चत् तदा पार्थस् सहितैर्वसुधाधिपैः ॥ ६७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ २६ ॥ शिशुपालवधपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[ अस्मिन्नध्याये ६७ श्लोका ]

---

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

विस्तरेण राजसूयवर्णनम् ॥ १ ॥

---

वैशम्पायनः—

ततः [1]प्रववृते यज्ञो धर्मराजस्य धीमतः ।
शान्तविघ्नार्हणक्षोभो महर्षिगणसङ्कुलः ॥ १

तस्मिन् यज्ञे प्रवृत्ते तु वाग्विदो हेतुवादिनः ।
हेतुवादान् बहून् प्राहुः परस्परजिगीषवः ॥ २

ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम् ।
[2]उपेन्द्रस्येव विहितं सहदेवेन भारत ॥ ३

ददृशुस्तोरणान्यत्र हेमतालमयानि च ।

---

1. ख-च—प्रवृद्धो । क-ग-ङ—प्रवृत्तो ।
2. ख-ग-च-ङ—उपेन्द्रबुद्धया ।

दीप्तभास्करतुल्यानि प्रदीप्तानीव तेजसा ॥ ४

स यज्ञस्तोरणैस्तैश्च ग्रहैर्द्यौरिव सम्बभौ ॥ ४॥

शय्यासनविहारांश्च सुबहून् [1]वित्तसंवृतान् ।
घटान् पात्रीकटाहानि कलशानि समन्ततः ॥ ५॥
न ते किञ्चिदसौवर्णम् अपश्यंस्तत्र पार्थिवाः ॥ ६

तद्यज्ञे न्यवसन् राजन् ब्राह्मणा भृशसत्कृताः ।
कथयन्तः कथां बह्वीं पश्यन्तो नटनर्तकान् ॥ ७

भुञ्जतां चैव विप्राणां स्वादु भोज्यं पृथग्विधम् ।
अनिशं श्रूयते तत्र मुदितानां महास्वनः ॥ ८

दीयतां दीयतामेषां भुज्यतां भुज्यतामिति ।
एवंप्रकारास्संजल्पाश्श्रूयन्ते स्मात्र नित्यशः ॥ ९

ओदनानां विकाराणि स्वादूनि विविधानि च ।
सुबहूनि च भक्ष्याणि पेयानि मधुराणि च ॥ १०

ददुर्द्विजानां सततं राजप्रेष्या महाध्वरे ॥ १०॥

पूर्णे शतसहस्रे तु विप्राणां भुञ्जतां तदा ।
स्थापिता तत्र संज्ञाऽभूच्छङ्खोऽध्मायत नित्यशः ॥ ११॥

मुहुर्मुहुः प्रणादस्तु तस्य शङ्खस्य भारत ॥ १२
उत्तमं शङ्खशब्दं तं श्रुत्वा विस्मयमागताः ॥ १२॥

---

1. क—यज्ञसम्भवान्। ख-घ—वित्तसम्भृतान्। अ—रत्नसंवृतान्

एवं प्रवृत्ते यज्ञे तु तुष्टपुष्टजनायुते ।
[1]अन्नस्य बहवो राजन्नुत्सेधाः पर्वतोपमाः ॥ १३॥

दधिकुल्याश्च ददृशुम् सर्पिषां च ह्रदाञ्जनाः ॥ १४

जम्बूद्वीपो हि सकलो नानाजनपदायुतः ।
राजन्नदृश्यतैकस्थो राज्ञस्तस्मिन् महाक्रतौ ॥ १५

तत्र राजसहस्राणि पुरुषाणां ततस्ततः ।
गृहीत्वा धनमाजग्मुस् तस्य राज्ञो महाक्रतौ ॥ १६

राजानस्स्रग्विणस्तत्र सुमृष्टमणिकुण्डलाः ।
[2]तान् परीविविपुर्विप्रान् छतशोऽथ सहस्रशः ॥ १७

विविधान्यन्नपानानि लेह्यानि विविधानि च ।
तेषां नृपोपभोग्यानि ब्राह्मणेभ्यो ददुस्स ते ॥ १८

नानाविधानि भक्ष्याणि स्वादुपुष्पफलानि च ।
गुलानि स्वादुक्षौद्राणि ददुस्ते ब्राह्मणेष्विह ॥ १९

एतानि सततं भुक्त्वा तस्मिन् यज्ञे द्विजातयः ।
परां प्रीतिं ययुस्सर्वे मोदमानास्तदा भृशम् ॥ २०

एवं समुदितं सर्वं बहुगोधनधान्यवत् ।

---

1. अ—अन्नस्य बहुधा राजन्नुत्सेधाः पर्वतोपमाः ।
   क—मुच्छ्रायान् पर्वतोपमान् ।
2. क-ख-घ—तान् पर्यवेविषु । अ—तान्यवेषयिषुर्विप्रान् ।

यज्ञवाटं नृपा दृष्ट्वा विस्मयं परमं ययुः ॥ २१

ऋत्विजश्च यथाशास्त्रं राजसूयं महाक्रतुम् ।
पाण्डवस्य यथाकालं जुहुवुस्सर्वयाजकाः ॥ २२

[1]निराकामंश्च शास्त्रज्ञा विधिवत् सर्वशिक्षिताः ॥ २२॥

व्यासधौम्यादयस्सर्वे विधिवत् षोडशर्त्विजः ।
स्वस्वकर्माणि चक्रुस्ते पाण्डवस्य महाक्रतौ ॥ २३॥

नाषडङ्गविदत्रासीत् सदस्यो नाबहुश्रुतः ।
नाव्रतो नानुपाध्यायो न पापो नाक्षमो द्विजः ॥ २४॥

न तत्र कृपणः कश्चिद् दरिद्रो न बभूव ह ।
क्षुधितो दुःखितो वाऽपि प्राकृतो वाऽपि मानुषः ॥ २५॥

भोजनं भोजनार्थिभ्यो दापयामास सर्वदा ।
सहदेवो महातेजास् सततं राजशासनात् ॥ २६॥

संस्तरे कुशलाश्चापि सर्वकर्माणि याजकाः ।
दिवसे दिवसे चक्रुर् यथाशास्त्रार्थचक्षुषः ॥ २७॥

ब्राह्मणा वेदशास्त्रज्ञाः कथाश्चक्रुश्च सर्वदा ।
रेमिरे च कथान्ते तु सर्वे तस्मिन् महाक्रतौ ॥ २८॥

सा वेदिर्वेदसम्पन्नैर् देवद्विजमहर्षिभिः ।
आबभासे तदा कीर्णा नक्षत्रैर्द्यौरिवामला ॥ २९॥

---

1. अ—कोशे इदमर्धं नास्ति ।

पाण्डित्यदर्शनार्थाय केचन द्विजसत्तमाः ।
तर्कार्थमागताः केचित् केचिद्विद्याभिमानिनः ॥ ३०॥

केचिद्दिदृक्षया केचिद् भीत्या राज्ञः प्रतापिनः ।
सर्वेऽप्यत्रभृथस्नाता याजकाः केचन द्विजाः ॥ ३१॥

ततो वै हेमयूपांश्च सर्वरत्नसमान्वितान् ।
शोभार्थं कारयामास सहदेवो महाद्युतिः ॥ ३२॥

ददृशुस्तोरणान्यत्र हेमतालमयानि च ।
स यज्ञस्तोरणैस्तैश्च ग्रहैर्द्यौरिव सम्बभौ ॥ ३३॥

तालानां तोरणैर्हैमैर् [1]दान्तैरिव दिशागजैः ।
दिक्षु सर्वासु विन्यस्तैस् तेजोभि [2]र्भास्करैर्यथा ॥ ३४॥

सकिरीटैर्नृपैश्चैव शुशुभे तत् सदस्तदा ॥ ३५

दैवै[3]रन्यैश्च यक्षैश्च उरगैर्दिव्यमानुषैः ।
विद्याधरगणैः कीर्णः पाण्डवस्य महात्मनः ॥ ३६

स राजसूयश्शुशुभे धर्मराजस्य धीमतः ।
गन्धर्वगणसङ्कीर्णश् शोभितोऽप्सरसां गणैः ॥ ३७

[4]देवैर्मुनिगणैर्यक्षैर् देवलोक इवापरः ॥ ३७॥

स किम्पुरुषगीतैश्च किन्नरैरुपशोभितः ॥ ३८

---

1. अ-च—दन्तैरिव दिशागजाः । 2. अ-क—भास्करो यथा
3. क-अ—र्दिव्यैश्च ।
4. क-ख-ग-घ—ङ—कोशेषु इदमर्धं नास्ति ।

नारदश्च जगौ तत्र तुम्बुरुश्च महाद्युतिः ॥ ३८॥
विश्वावसुश्चित्रसेनस् तथाऽन्ये गीतकोविदाः ।
रमयन्ति स्म तान् सर्वान् यज्ञकर्मान्तरेष्वथ ॥ ३९॥
तत्र चाप्सरसस्सर्वास् सुन्दर्यः प्रियदर्शनाः ।
ननृतुश्च जगुश्चात्र नित्यं कर्मान्तरेष्वथ ॥ ४०॥
इतिहासपुराणानि आख्यानानि च सर्वशः ।
ऊचुर्वै शब्दशास्त्रज्ञा नित्यं कर्मान्तरेष्वथ ॥ ४१॥
भेर्यश्च मुरजाश्चैव [1]मड्डुका गोमुखाश्च ये।
शृङ्गवंशाम्बुजाश्चैव श्रूयन्ते स्म सहस्रशः ॥ ४२॥
[2]लोकेऽस्मिन् सर्वविप्राश्च वैश्याश्शूद्राश्च सर्वशः ।
सर्वे म्लेच्छास्सर्ववर्णास् त्वादिमध्यान्तजास्तथा ॥ ४३॥
[3]नानादेश[4]समुद्भूतैर् नानाजातिभिरागतैः ।
पर्याप्त इव लोकोऽयं युधिष्ठिरनिवेशने ॥ ४४॥
भीष्मद्रोणादयस्सर्वे कुरवस्ससुयोधनाः ।
वृष्णयश्च समग्राश्च पाञ्चालाश्चापि सर्वशः ॥ ४५॥
यथार्हं सर्वकर्माणि चक्रुर्दासा इव क्रतौ ॥ ४६

---

1. ख-ग—डुण्डुका।
2. अ—शतश्चैव वरेबाश्च श्रूयन्ते स्म सहस्रशः। [अधिकः पाठः]
3. अ—सर्वे यथाधिकारास्ते अर्चितास्तु ततोऽधिकम्। [अधिकः पाठः]
4. ख-ग—समृद्धैश्च। अ—समुद्धैश्च।

एवं प्रवृत्तो यज्ञस्स धर्मराजस्य धीमतः ।
शुशुभे च महावाहो सोमस्येव क्रतुर्यथा ॥ ४७

वस्त्राणि कम्बलांश्चैव प्रावारांश्चैव सर्वदा ।
निष्कहेमजंभाण्डानि भूषणानि च सर्वशः ॥ ४८
प्रददौ तत्र [1]सततं धर्मराजो युधिष्ठिरः ॥ ४८॥

यानि तत्व महीपेभ्यो [2]लब्धं वा धनमुत्तमम् ।
तानि रत्नानि सर्वाणि विप्राणां प्रददौ तदा ॥ ४९॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां सभापर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

॥ २६ ॥ शिशुपालवधपर्वणि षष्ठोऽध्यायः ॥६ ॥

[अस्मिन्नध्याये ४९॥ श्लोकाः]

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

युधिष्ठिरेण व्यासादीनां पूजनम् ॥ १ ॥ राज्ञां युधिष्ठिरमामन्त्र्य स्व-स्वदेशगमनम् ॥ २ ॥ श्रीकृष्णस्य युधिष्ठिरादीनामन्त्र्य द्वारकां प्रति गमनम् ॥ ३ ॥

**वैशम्पायनः—**

ततस्स कुरुराजस्य तदा सर्वसमृद्धिमान ।
यज्ञः प्रीतिकरो राजन् सम्बभौ [3]विमलोत्सवः ॥ १

1. अ-क—विप्राणां ।
2. अ—यानि यत्र महीपालैर् लब्धवान् धनमुत्तमम् ।
3. स्व—विपुलोद्भवः । क—विपुलौजसः । अ-च—विपुलोत्सवः ।

शान्तविघ्नसमारम्भः प्रभूतधनधान्यवान् ।
अन्नवांश्चापि निर्वृत्तः केशवेनाभिरक्षितः ॥ २

तस्य यज्ञं महाबाहुर् आसमाप्तेर्जनार्दनः ।
ररक्ष भगवाञ्छौरिश् शङ्खचक्रगदाधरः ॥ ३

[1]समापयत तदा राजा राजसूयं यथाविधि ॥ ३॥

कोटीसहस्रं प्रददौ ब्राह्मणानां महात्मनाम् ।
न करिष्यति तं लोके कश्चिदन्यो महीपतिः ॥ ४॥

याजकास्सर्वकामैश्च सततं तत्पृथुधनैः ॥ ५

ततश्चावभृथस्नातस् स राजा पाण्डुनन्दनः ।
व्यासं धौम्यं च प्रयतो नारदं च महामतिम् ॥ ६

सुमन्तुं जैमिनिं पैलं वैशम्पायनमेव च ।
याज्ञवल्क्यं कठं चैव कलापं च महौजसम् ॥ ७

सर्वांश्च विप्रप्रवरान् पूजयामास सत्कृतान् ॥ ७॥

युधिष्ठिरः—

युष्मत्प्रभावात् प्राप्तोऽयं राजसूयो महाक्रतुः ।
जनार्दनप्रभावाच्च सम्पूर्णो मे मनोरथः ॥ ८॥

वैशम्पायनः—

अथ यज्ञं समाप्यान्ते पूजयामास माधवम् ।

---

1. अ-ख-घ—समापयामास तदा ।

बलदेवं च देवेशं भीष्माद्यांश्च कुरूत्तमान् ॥ ९॥

ततस्त्ववभृथस्नातं धर्मराजं युधिष्ठिरम् ।

समस्तं पार्थिवं क्षत्रं उपगम्येदमब्रवीत् ॥ १०॥

राजानः—

दिष्ट्या वर्धसि धर्मज्ञ साम्राज्यं प्राप्तवान प्रभो ।

आजमीढाजमीढानां यशस्संवर्धितं त्वया ॥ ११॥

कर्मणैतेन राजेन्द्र धर्मश्च सुमहान कृतः ॥ १२

आपृच्छामो नरव्याघ्र सर्वकामैश्च पूजिताः ।

स्वराष्ट्राणि गमिष्यामस् तदनुज्ञातुमर्हसि ॥ १३

वैशम्पायनः—

श्रुत्वा तु वचनं राज्ञां धर्मराजो युधिष्ठिरः ।

यथार्हं पूज्य नृपतीन् भ्रातॄन् सर्वानुवाच ह ॥ १४

युधिष्ठिरः—

राजानस्सर्व एवैते प्रीत्याऽस्मान् समुपागताः ।

प्रस्थितास्स्वानि राष्ट्राणि मामापृच्छ्य परन्तपाः ॥ १५

[1]तेऽनुप्रयात भद्रं वो विषयान्तं नृपोत्तमान ॥ १५॥

वैशम्पायनः—

भ्रातुर्वचनमाज्ञाय पाण्डवा धर्मचारिणः ।

यथार्हं नृपमुख्यांस्तान् एकैकं समनुव्रजन् ॥ १६॥

1. अ-क—तेऽनुव्रजत ।

धनञ्जयो जयत्सेनं सहामात्यं सबान्धवम् ।
धृतराष्ट्रं च भीष्मं च विदुरं च महामतिम् ॥ १७॥
सञ्जयं च महात्मानं भीमसेनः प्रतापवान् ।
द्रोणं द्रोणायनिं चैव सामात्यं ससुहृद्गणम् ॥ १८॥
कृपं च वाह्लिकं चैव [1]सहदेवो महामतिः ॥ १९
[2]शल्यं तु ससुतं वीरं सात्यकिं परवीरहा ।
भगदत्तं च राजानं कौसलं च बृहद्बलम् ॥ २०
विराटं चान्वयात् तूर्णं धृष्टद्युम्नः प्रतापवान् ॥ २०॥
भीष्मकं सहपुत्रेण मातुलं च महामतिम् ।
दाक्षिणात्यांश्च सर्वांश्च हैडिम्बस्समनुव्रजत् ॥ २१॥
द्रौपदेयास्ससौभद्रा पार्वतीयान् महीपतीन ।
अन्वगच्छंस्तथैवान्यान् पार्थिवान् कुरवोऽपरे ॥ २२॥
एवं नृपाः पूजितास्ते जग्मुर्विप्राश्च सर्वशः ॥ २३
गतेषु पार्थिवेन्द्रेषु सर्वेषु भरतर्षभ ।
युधिष्ठिरस्सहामात्यः प्रविवेश पुरोत्तमम् ॥ २४
कृतार्थं पाण्डवं दृष्ट्वा सिंहासनगतं नृपम् ।
रोचमानं महेन्द्राभं वासुदेवोऽब्रवीद्बली ॥ २५

---

1. ग—सहदेवो महाद्युतिः ।   ङ—सहपुत्रमनुव्रजत् ।
2. अ-क—नकुलस्सुबलं राजन् सहपुत्रमनुव्रजत ।   [अधिकः पाठः]

श्रीभगवान्—
आपृच्छे त्वां गमिष्यामि द्वारकां कुरुनन्दन ।
राजसूयं क्रतुश्रेष्ठं दिष्ट्या त्वं प्राप्तवानसि ॥ २६

वैशम्पायनः—
तमुवाचैवमुक्तस्तु धर्मराण्मधुसूदनम् ॥ २६॥

युधिष्ठिरः—
तव प्रसादाद्गोविन्द प्राप्तवानस्मि वै क्रतुम् ॥ २७
समस्तं पार्थिवं क्षत्रं त्वत्प्रसादाद्वशानुगम् ।
उपादाय बलिं मुख्यं मामेव समुपस्थितम् ॥ २८
ते वयं त्वामृते वीर न रंस्यामः कथञ्चन ।
अवश्यं चापि गन्तव्या त्वया द्वारवती पुरी ॥ २९

वैशम्पायनः—
एवमुक्तस्तु गोविन्दो युधिष्ठिरसहायवान् ।
अभिगम्याब्रवीद्वीरः पृथां पृथुयशा विभुः ॥ ३०

श्रीभगवान्—
साम्राज्यं समनुप्राप्तः पुत्रस्तेऽद्य पितृष्वसः ।
सिद्धार्था वसुमन्तश्च सा त्वं प्रीतिमवाप्नुहि ॥ ३१
अनुज्ञातस्त्वया चाहं द्वारकां गन्तुमुत्सहे ॥ ३१॥

वैशम्पायनः—
एवमुक्त्वा ततश्शौरिर् भगिनीं वै पितुस्तदा ।
सुभद्रां द्रौपदीं चैव सभाजयत केशवः ॥ ३२॥
निष्क्रम्यान्तःपुराच्चैव युधिष्ठिरसहायवान् ।

स्नातश्च कृतजप्यश्च ब्राह्मणान् स्वस्ति वाच्य च ॥ ३३॥
ततो मेघवरप्रख्यं स्यन्दनं [1]वै सुकल्पितम् ।
योजयित्वा महाराज दारुकः प्रत्युपस्थितः ॥ ३४॥
उपस्थितं रथं दृष्ट्वा तार्क्ष्यप्रवरकेतनम् ।
युधिष्ठिरकिरीटिभ्यां दत्तहस्तो ययौ रथम् ॥ ३५॥
प्रदक्षिणमुपावृत्य समारुह्य महामनाः ।
[2]दारुकस्य करं गृह्य तत्रोच्चतलमाविशत् ॥ ३६॥
सुखास्तरणसंवीतं सोपधानं गवाक्षितम् ॥ ३७
प्रययौ पुण्डरीकाक्षस् ततो द्वारवतीं पुरीम् ॥ ३७॥
सात्यकिः कृतवर्मा च रथमारुह्य सत्वरौ ।
वीजयामासतुस्तत्र चामराभ्यां हरिं तथा ॥ ३८॥
बलदेवश्च देवेशो यादवाश्च सहस्रशः ।
प्रययू राजवत् सर्वे धर्मपुत्रेण पूजिताः ॥ ३९॥
[3]ततस्स सम्मतं राजा हित्वा सौवर्णमासनम् ।
ततः पद्भ्यामनुप्रायाद् धर्मराजो युधिष्ठिरः ॥ ४०॥
भ्रातृभिस्सहितश्श्रीमान् वासुदेवं महाबलम् ।

1. अ—सूर्यसन्निभम् ।
दर्दर्श कल्पितं द्वारि श्वेताश्वैर्योजितं हरिः ।
[अधिकः पाठः]
2. क-ख-ग-घ-ङ—कोशेषु इदमर्धद्वयं नास्ति ।
3. अ—रथमारुह्य निर्जग्मू राजमार्गेण वै पुरम् ॥ [अधिकः पाठः]

[1]†कार्यमानुषरूपं वै विष्णुं सर्वगुरुं प्रभुम् ॥ ४१॥
ततो मुहूर्तं सङ्गृह्य स्यन्दनप्रवरं विभुः ।
अब्रवीत् पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ ४२॥

श्रीभगवान्—
अप्रमत्तस्स्थितो नित्यं प्रजाः पाहि विशाम्पते ॥ ४३
पर्जन्यमिव भूतानि महाद्रुममिवाण्डजाः ।
बान्धवास्त्वोपजीवन्तु सहस्राक्षमिवामराः ॥ ४४

वैशम्पायनः—
कृत्वा परस्परेणैव संवादं कृष्णपाण्डवौ ।
अन्योन्यं समनुज्ञाय प्रत्यायात् कुरुनन्दनः ॥ ४५
पुनर्द्वारवतीं कृष्णस् सात्वतप्रवरो नृप ॥ ४५॥
युधिष्ठिरो महाराज प्रविवेश पुरं ततः ॥ ४६
दुर्योधनो महाराज शकुनिश्च परन्तपः ।
सूतपुत्रश्च राधेयस् सह दुश्शासनादिभिः ॥ ४७
सर्वकामगुणोपेतैर् अर्च्यमानस्तु भारत ।
सभायां रमणीयायाम् अवसंस्तत्र पाण्डवैः ॥ ४८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ २६ ॥ शिशुपालवधपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये ४८ श्लोकाः]
॥ समाप्तं शिशुपालवधपर्व ॥

---

1. अ—भ्रातृभिर्ब्राह्मणैस्सार्धम् ऋषिभिर्वेदपारगैः ।
वायूद्धततरप्रख्यगतिं कुर्वाणमग्रतः ।
सूतं सञ्चोद्य नेत्राभ्यां युधिष्ठिरमभाषत ॥ [अधिकः पाठः]

† अ—कोशे इदमर्धं नास्ति ।

## ।। एकोनपञ्चाशोऽध्यायः ।।

( द्यूतपर्व )

व्यासं प्रति युधिष्ठिरेण उत्पातफलप्रश्ने कृते व्यासेन तत्कथनपूर्वकं कैलासगमनम् ॥ १ ॥ व्यासोक्तं भ्रातृषु निवेद्य शोचतो युधिष्ठिरस्य अर्जुनेन समाश्वासनम् ॥ २ ॥ युधिष्ठिरेण समयकरणम् ॥ ३ ॥

वैशम्पायनः—

अनुसंसाद्य नृपतीन् पाण्डवाः पाण्डवाग्रजम् ।
अभिजग्मुर्महेष्वासं धर्मराजं युधिष्ठिरम् ॥ १

सोऽनुमेने महाबाहुर् भ्रातृंश्च सुहृदस्तथा ।
शिष्यैः परिवृतो व्यासः पुरस्तात् [1]समपद्यत ॥ २

सोऽभ्युत्थायासनात् तूर्णं भ्रातृभिः परिवारितः ।
पाद्येनासनदानेन पितामहमपूजयत् ॥ ३

अथोपविश्य भगवान् काञ्चने परमासने ।
आस्यतामिति चोवाच धर्मराजं युधिष्ठिरम् ॥ ४

[2]अथोपविष्टं राजानं भ्रातृभिः परिवारितम् ।
उवाच भगवान् व्यासस् तत वाक्यविशारदः ॥ ५

व्यासः—

कौन्तेय वर्धसे दिष्ट्या साम्राज्यं प्राप्य दुर्लभम् ।

1. अ—समदृश्यत । 2. अ-कोशे—इदमर्धं नास्ति

पालिताः कुरवस्सर्वे त्वया कुरुकुलोद्वह ॥ ६

आपृच्छे त्वां गमिष्यामि पूजितोऽस्मि विशाम्पते ॥ ६॥

वैशम्पायनः—

एवमुक्तस्तु कृष्णेन धर्मराजो युधिष्ठिरः ।

अभिवाद्योपसङ्गृह्य पितामहमथाब्रवीत् ॥ ७॥

युधिष्ठिरः—

संशयो द्विपदां श्रेष्ठ ममोत्पन्नस्सुदुर्वचः ।

तस्येह नान्यो वक्ताऽस्ति त्वामृते द्विजपुङ्गव ॥ ८॥

उत्पातांस्त्रिविधान् प्राह नारदो भगवानृषिः ।

दिव्यांश्चैवान्तरिक्षांश्च पार्थिवांश्च पितामह ॥ ९॥

सुमहच्च फलं तेषां [1]भवतीति न संशयः ।

अपि चैद्यस्य पतनाच् छान्तमौत्पातिकं भवेत् ॥ १०॥

वैशम्पायनः—

राज्ञस्तद्वचनं श्रुत्वा पराशरसुतः प्रभुः ।

कृष्णद्वैपायनो व्यास इदं वचनमब्रवीत् ॥ ११॥

व्यासः—

चतुर्दश समा राजन्नुत्पातानां महत् फलम् ।

सर्वक्षत्रविनाशाय भविष्यति विशाम्पते ॥ १२॥

त्वामेव कारणं कृत्वा कालेन भरतर्षभ ।

---

1. अ-क—भवितेति ।

समेतं पार्थिवं क्षत्रं क्षयं यास्यति पार्थिव ॥ १३॥
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ १४
स्वप्नं द्रक्ष्यसि राजेन्द्र तस्मिन् काल उपस्थिते ।
तत् तेऽहं सम्प्रवक्ष्यामि तन्निबोध युधिष्ठिर ॥ १५
यं च द्रक्ष्यसि राजेन्द्र क्षपान्ते गोवृषध्वजम् ।
नीलकण्ठं भवं स्थाणुं त्रिपुरान्तकरं हरम् ॥ १६
उग्रं रुद्रं पशुपतिं महादेवमुमापतिम् ।
शिवं शर्वं भवं [1]शूलिं पिनाकिं कृत्तिवाससम् ॥ १७
कैलासकूटप्रतिमे वृषभे निष्ठितं शिवम् ।
निरीक्षमाणं सततं पितृराजाश्रितां दिशम् ॥ १८
एवं त्वमीदृशं स्वप्नं द्रक्ष्यसि त्वं विशाम्पते ॥ १८॥
मा च तेऽभूद्व्यथा राजन् कालो हि दुरतिक्रमः ॥ १९
स्वस्ति तेऽस्तु गमिष्यामि कैलासं पर्वतं प्रति ।
[2]अप्रमत्तोत्थितो दान्तः पृथिवीं परिपालय ॥ २०

वैशम्पायनः—

एवमुक्त्वा तु भगवान् कैलासं पर्वतं ययौ ।
कृष्णद्वैपायनो व्यासस् सह शिष्यैस्सहानुगैः ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
॥ २७ ॥ द्यूतपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये २१ श्लोकाः]

---

1. क-ख-ग-घ-ङ—शूलं। 2. अ-ख-ग-घ-ङ—अप्रमत्तस्स्थितो।

## ॥ पञ्चाशोऽध्यायः ॥

युधिष्ठिरसभायां दुर्योधने निर्जलदेशे जलभ्रमेण परिधानमुत्कर्षति सति तथा सजलदेशे स्थलभ्रान्त्या अनवधानगमनेन जले पतति च सति भीमादिभिरुपहासः ॥ १ ॥ चिन्तातान्तं दुर्योधनं प्रति शकुनिना चिन्ता-हेतुप्रश्ने दुर्योधनेन तत्कथनपूर्वकं धृतराष्ट्रे स्वदुःखनिवेदनाय शकुनिं प्रति चोदनम् ॥ २ ॥ शकुनिना दुर्योधनं प्रति पाण्डवानां पौरुषेण अजय्यत्व-कथनपूर्वकं द्यूतेन जेष्यामीति समाश्वासनादिकम् ॥ ३ ॥

---

वैशम्पायनः—

वसन् दुर्योधनस्तत्र सभायां पुरुषर्षभ ।
शनैर्ददर्श तां सर्वां सभां शकुनिना सह ॥ १

तस्यां दिव्यानभिप्रायान् ददर्श कुरुनन्दनः ।
न दृष्टपूर्वा ये तेन नगरे नागसाह्वये ॥ २

स कदाचित् सभामध्ये धार्तराष्ट्रो महीपतिः ।
[1]ततस्स्फाटिकतोयां वै स्फाटिकाम्बुजशोभिताम् ॥ ३

सभां पुष्करिणीं मत्वा सहसा प्रापतज्जले ॥ ३॥
जले निपतितं मत्वा किङ्करा जहसुर्भृशम् ।

तस्य चान्यानि वासांसि प्रददू राजशासनात् ॥ ४॥
तत्रैवं द्रौपदी राजन् भीमसेनश्च पाण्डवः ।

अर्जुनश्च यमौ चैव दृष्ट्वा चापाहसंस्तदा ॥ ५॥

---

1. क-ख-ग-घ-ङ—समेतां यादवैस्सर्वैस् ।

ततोऽन्यस्मिन् सभोद्देशे पुनर्दुर्योधनो नृपः ।
स्फाटिकं तलमासाद्य जलमित्यभिशङ्कया ॥ ६॥
स्ववस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः ॥ ७
तत्राप्येतं जनो दृष्ट्वा जहसुः पाण्डवास्तदा ॥ ७॥
वलभीं विकृताकारां ललाटेन समाहनत् ।
संवृतं चेति मन्वानो द्वारदेशादपागमत् ॥ ८॥
पुनर्वसनमुत्क्षिप्य प्रतरिष्यन्निव स्थलम् ।
आरुरोह ततस्सर्वे जहसुः किङ्करा भृशम् ॥ ९॥
ततो नामर्पयत् तेषां सोऽपहासममर्षितः ।
रक्षन्नाकारमत्यर्थं समन्तात् समवैक्षत ॥ १०॥
एवं प्रलम्भान विविधान् प्राप्य तत्र विशाम्पते ।
पाण्डवैरभ्यनुज्ञातो जगाम नगरं प्रति ॥ ११॥
न तुष्टो धर्मराजस्य यज्ञमासाद्य तं तदा ।
जगाम स्वगृहं त्वन्यान् ऋते दुर्योधनो नृपः ॥ १२॥
दृष्ट्वा यज्ञविभूतिं तां पाण्डवानां यशस्विनाम् ।
पश्यतो दुःखदीनस्य पापा बुद्धिरजायत ॥ १३॥
पार्थान् सुमनसो दृष्ट्वा पार्थिवांश्च वशानुगान् ।
लोकं च तद्गतं दृष्ट्वा विवर्णस्समजायत ॥ १४॥
महिमानं परं चापि दृष्ट्वा तेषां यशस्विनाम् ।

दुर्योधनः पापबुद्धिः पर्यतप्यत मन्युना ॥ १५॥
स तु गच्छन्ननेकाग्रस् सभामेकोऽन्वचिन्तयत् ।
श्रियं च तामनुपमां धर्मराजस्य धीमतः ॥ १६॥
प्रमत्तो धृतराष्ट्रस्य पुत्रो दुर्योधनस्तदा ।
नाभ्यभाषत् सुबलजं [1]भाषमाणं पुनः पुनः ॥ १७॥
तं च दुर्मनसं दृष्ट्वा शकुनिः प्रत्यभाषत ।

शकुनिः—

दुर्योधन कुतोमूलं निश्श्वसन्निव [2]तिष्ठसि ॥ १८॥

दुर्योधनः—

दृष्ट्वेमां पृथिवीं सर्वां युधिष्ठिरवशे स्थिताम् ।
देवर्षियक्षगन्धर्वास् तत्रागच्छन्ति नित्यशः ॥ १९॥
कृष्णस्तु दुर्मनास्तेषां विवर्धयति सम्पदः ।
आतुरास्तत्र नीयन्ते व्यवहारवचोऽधिकाः ॥ २०॥
गजानां तत्र गच्छन्ति विक्रेतारो महाप्रभाः ।
खरोष्ट्राश्वाजखड्गानां विक्रेतारस्तथा नृपाः ॥ २१॥
लोकेऽस्मिन् कौरवश्शब्दस् तत्रैव परिवर्तते ॥ २२
हरिप्रस्थपुरद्वारं सदा तु निबिडीकृतम् ॥ २२॥
रथहस्त्यश्वयानानां [3]रोहणेन सुदारुणम् ।
निघ्नतोऽरीन् प्रतापेन श्वेताश्वस्य महात्मनः ॥ २३॥

---

1. अ-ख-ग-च—भाषमाणः 2. अ—गच्छसि ।

3. अ—रोहणं तत्र मातुल । निघ्नतोऽरिं प्रतापेन श्वेताश्वस्य महात्मनः ।

तं च यज्ञं तथारूपं दृष्ट्वा पार्थस्य मातुल ।
यथा शक्रस्य देवानाम् ईश्वरस्य तथाविधम् ॥ २४॥

अमर्षेण सुसम्पूर्णो दह्यमानो दिवानिशम् ।
शुष्यते हृदयं मेऽद्य ग्रीष्मे तोयमिवाल्पकम् ॥ २५॥

पश्य सात्वतमुख्येन शिशुपालं निपातितम् ॥ २६
न च तत्र पुमानासीत् कश्चित् तस्य वशानुगः ॥ २६॥

दह्यमाना महेष्वासा अध्वरे पाण्डवाग्निना ।
क्षान्तवन्तोऽपराधं तं को हि तं क्षन्तुमर्हति ॥ २७॥

वासुदेवेन तत् कर्म यथाऽयुक्तं महत् कृतम् ।
सिद्धिं च पाण्डवेयानां प्रतापेन महात्मनाम् ॥ २८॥

तथा हि रत्नान्यादाय विविधानि नराधिपाः ।
उपतिष्ठन्ति कौन्तेयं वैश्या इव करप्रदाः ॥ २९॥

तां तथा ज्वलितां दृष्ट्वा श्रियं मातुल पाण्डवे ।
अमर्षवशमापन्नो दह्येयमतथोचितः ॥ ३०॥

सोऽहमग्निं प्रवेक्ष्यामि भक्षयिष्यामि वा विषम् ।
अपो वाऽपि प्रवेक्ष्यामि न हि शक्ष्यामि जीवितुं ॥ ३१॥

को हि नाम पुमाँल्लोके मर्षयेत तथागतान् ।
[1]सपत्नानृध्यतो दृष्ट्वा हानिमात्मन एव च । ३२॥

1. क-ख-ग-घ-ङ—सपत्नान् विषये युक्तान् दृष्ट्वा तेषु च तां श्रियम् ।

सोऽहं नास्मि न नाप्यस्मि न स्त्री न च पुनः पुमान् ।
योऽहं तां मर्षयाम्यद्य श्रियं तस्मिन्नशक्तितः ॥ ३३॥

ईश्वरत्वं पृथिव्याश्च वसुमत्तां च तादृशीम् ।
यज्ञं च तादृशं दृष्ट्वा मादृशः को न सञ्ज्वरेत् ॥ ३४॥

अशक्तश्चैक एवाहं तामाहर्तुं ततश्श्रियम् ।
सहायांश्च न पश्यामि [1]तेन मृत्युमचिन्तयम् ॥ ३५॥

दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ।
दृष्ट्वा कुन्तीसुते शुभ्रां श्रियं तामहृतां नयात् ॥ ३६॥

कृतो यत्नो मया पूर्वं विनाशे तस्य सौबल ।
तच्च सर्वमतिक्रम्य संवृद्धोऽप्स्विव पङ्कजम् ॥ ३७॥

तेन दैवं परं मन्ये पौरुषं तु निरर्थकम् ।
धार्तराष्ट्रा हि हीयन्ते पार्था वर्धन्ति नित्यशः ॥ ३८॥

सोऽहं श्रियं च तां दृष्ट्वा सभां तां च तथाविधाम् ।
रक्षिभिश्चापहासं तं परितप्ये यथाऽग्निना ॥ ३९॥

स मामभ्यनुजानीहि मातुलाद्य सुदुःखितम् ।
अमर्षवशमापन्नं धृतराष्ट्रे निवेदय* ॥ ४०॥

शकुनिः—

दुर्योधन न तेऽमर्षः कार्यः प्रति युधिष्ठिरम् ।

---

1. अ—तेन मृत्युं विचिन्तये ॥

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

भागधेयानि हि स्वानि पाण्डवास्समुपाश्नुते ॥ ४१॥

तथाऽप्युपायैर्बहुभिस् समारब्धास्त्वयाऽसकृत् ।
विमुक्ताश्च नरव्याघ्रा भागधेयपुरस्कृताः ॥ ४२॥

तैर्लब्धा द्रौपदी भार्या द्रुपदश्च सुतैस्सह ।
सहायाः पृथिवीपाला वासुदेवश्च वीर्यवान् ॥ ४३॥

अजितस्सोऽपि सर्वैर्हि सदेवासुरमानुपैः ॥ ४४
तत्तेजसा प्रवृद्धोऽसौ तत्र का परिदेवना ॥ ४४॥

लब्धश्च नाभिभूतोऽर्थः प्रियांशश्च महीपते ।
प्रवृद्धस्तेजसा तेषां तत्र का परिदेवना ॥ ४५॥

धनञ्जयेन गाण्डीवम् अक्षय्यौ च महेषुधी ।
लब्धान्यस्त्राणि चोग्राणि तर्पयित्वा हुताशनम् ॥ ४६॥

तेन कार्मुकमुख्येन बाहुवीर्येण चात्मनः ।
कृता वशे महीपालास् तत्र का परिदेवना ॥ ४७॥

अग्निदाहान्मयं नाम मोक्षयित्वा च दानवम् ।
सभां तां कारयामास सव्यसाची परन्तपः ॥ ४८॥

तेनैव दत्ता दैत्येन किङ्करा नाम राक्षसाः ।
वहन्ति तां सभां भीमास् तत्र का परिदेवना ॥ ४९॥

यच्चासहायतां राजन्नुक्तवानासि भारत ।
तन्मिथ्या भ्रातरो हीमे सहायास्ते महारथाः ॥ ५०॥

द्रोणस्तव महेष्वासस् सह पुत्रेण वीर्यवान् ।
सूतपुत्रश्च राधेयो दृढं मित्रं महारथः ॥ ५१॥

स एकस्समरे सर्वान् पाण्डवान् सहसोमकान् ।
विजेष्यति महाबाहो किं सहायैः करिष्यसि ॥ ५२॥

भीष्मश्च पुरुषव्याघ्रो गौतमश्च महारथः ।
जयद्रथश्च बलवान् कृतास्त्रो दृढधन्वकः ॥ ५३॥

अहं च सह सोदर्यैस् सौमदत्तिश्च कौरव ।
एतैस्त्वं सहितस्सर्वैर् जय सर्वां वसुन्धराम् ॥ ५४॥

त्वया च सहितो राजन्नेतैश्चान्यैर्महारथैः ।
एकाह्नाऽहं विजेष्यामि यदि त्वमनुमन्यसे ॥ ५५॥

एतेषु विजितेष्वद्य भविष्यति मही तव ।
सर्वे च पृथिवीपालास् सभा सा च महाधना ॥ ५६॥

धनञ्जयो वासुदेवो भीमसेनो युधिष्ठिरः ।
नकुलस्सहदेवश्च द्रुपदश्च सहात्मजैः ॥ ५७॥

नैते युधि बलाज्जेतुं शक्यास्सुरगणैरपि ।
महारथा महेष्वासाः कृतास्त्रा युधि दुर्मदाः ॥ ५८॥

अहं तु तत्र जानामि विजेतुं येन शक्यते ।

युधिष्ठिरं तु राजेन्द्रं तान्निबोध [1]जनेश्वर ॥ ५९॥

दुर्योधनः—

अप्रमादेन शत्रूणाम् अन्येषां च महीक्षिताम् ।
यथा शक्ष्यसि तं जेतुं तन्ममाचक्ष्व मातुल ॥ ६०॥

शकुनिः—

द्यूतप्रियश्च कौन्तेयो न स जानाति देवितुम् ।
समाहूतश्च पार्थोऽत्र न शक्ष्यति निवर्तितुम् ॥ ६१॥

देवने कुशलश्चाहं न मेऽस्ति सदृशो भुवि ।
त्रिषु लोकेषु कौन्तेयं तं त्वं द्यूते समाह्वय ॥ ६२॥

अनक्षकुशलाद्राज्यम् आदास्यामि न संशयः ।
तां श्रियं महतीं चापि त्वदर्थं पुरुषर्षभ ॥ ६३॥

इदं हि सर्वं राज्ञे त्वं दुर्योधन निबोधय ।
अनुज्ञातस्तु ते पित्रा विजेष्यामि न संशयः ॥ ६४॥

दुर्योधनः—

त्वमेव धृतराष्ट्राय कुरुमुख्याय मातुल ।
निवेदय यथाकामं नाहं शंसितुमुत्सहे ॥ ६५॥

इतिश्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
सभापर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
॥ २७ ॥ द्यूतपर्वणि द्वितीयोऽध्याय ॥ २ ॥
[अस्मिन्नध्याये ६५॥ श्लोकाः]

---

1. ङ—धनेश्वर। ग—नरेश्वर।

## ।। एकपञ्चाशोऽध्यायः ।।

शकुनिना दुर्योधनस्य चिन्तया कार्श्यादिकं बोधितेन धृतराष्ट्रेण दुर्योधनं प्रति चिन्ताकारणप्रश्नः ॥ १ ॥ दुर्योधनेन तत्कथनपूर्वकं धृतराष्ट्रं प्रति द्यूताभ्यनुज्ञानप्रार्थनम् ॥ २ ॥ धृतराष्ट्रेण द्यूतसभानिर्माणाज्ञापनपूर्वकं पाण्डवानयनाय विदुरं प्रति चोदनम् ॥ ३ ॥

---

वैशम्पायनः—

अनुभूय तु तं राज्ञो राजसूयं सुदुर्मतिः ।
युधिष्ठिरस्य शकुनिर् दुर्योधनवशे स्थितः ॥ १

विवेश हास्तिनपुरं दुर्योधनमतेन सः ।
बाढमित्येव शकुनिर् दृढं हृदि चकार ह ॥ २

अस्वस्थतां च तां दृष्ट्वा धार्तराष्ट्रस्य पापकृत् ।
पापः पापात्मना तेन समेत्य पृथिवीक्षिता ॥ ३

भारतानां च दुष्टात्मा क्षयाय हि नृपश्रियाम् ।
प्रियकृन्मतमाज्ञाय पूर्वं दुर्योधनस्य तत् ॥ ४

वैशसं सर्वलोकस्य हृदि कृत्वा सुदुर्मतिः ।
दैवेन विधिना चैव चोदितः क्रूरकर्मकृत् ॥ ५

[1]आत्मवैरं हृदीकृत्य सौबलानां पुरस्कृतम् ।
गान्धारराजश्शकुनिर् धृतराष्ट्रं जनेश्वरम् ॥ ६

---

1. क-ख-ग-घ-ङ—कोशेषु इदमर्धं नास्ति ।

उपगम्य महात्मानं शकुनिर्वाक्यमब्रवीत् ॥ ६॥

शकुनिः—

दुर्योधनो महाराज विवर्णो हरिणः कृशः ।
दीनश्चिन्तापरश्चैव तं विद्धि भरतर्षभ ॥ ७॥

न वै परीक्षसे सम्यग् अस्य त्वं राजसत्तम ।
ज्येष्ठपुत्रस्य हृच्छोकं तमिमं नावबुध्यसे ॥ ८॥

वैशम्पायनः—

एवमुक्तश्शकुनिना धृतराष्ट्रो जनेश्वरः ।
दुर्योधनं समाहूय इदं वचनमब्रवीत् ॥ ९॥

धृतराष्ट्रः—

दुर्योधन कुतोमूलं भृशमार्तोऽसि पुत्रक ।
श्रोतव्यश्चेन्मया सोऽर्थो ब्रूहि मे कुरुनन्दन ॥ १०॥

अयं [1]त्वां शकुनिः प्राह विवर्णं हरिणं कृशम् ।
चिन्तयन् वै न पश्यामि शोकस्य तव सम्भवम् ॥ ११॥

ऐश्वर्यं हि महत् पुत्र त्वयि सर्वं समाहितम् ।
भ्रातरस्सुहृदश्चैव कुर्वन्ति तव सुप्रियम् ॥ १२॥

त्वद्दत्तं चैव भुञ्जावो गान्धारी चाहमेव च ।
आच्छादयसि प्रावारान् अश्नासि [2]पिशितौदनम् ॥ १३॥

---

1. अ-ख-ग-घ-ङ—तु 2. ग-ङ—विशदौदनम् ।

आजानेया वहन्ति त्वां कस्माच्छोचसि पुत्रक ॥ १४

शयनानि महार्हाणि योषितश्च मनोरमाः ।
गुणवन्ति च वेश्मानि विहाराश्च यथासुखम् ॥ १५

देवानामिव ते सर्वं वाचि बद्धमसंशयम् ।
स दीन इव दुर्धर्ष कस्माच्छोचसि पुत्रक ॥ १६

मात्रा पित्रा च पुत्रस्य यद्वै कार्यं परं स्मृतम् ।
प्राप्तस्त्वमसि तत् तात निखिलां नः कुलश्रियम् ॥ १७

उपस्थितस्सर्वकामैस् त्रिदिवे वासवो यथा ।
विविधैरन्नपानैश्च प्रवरैः किं नु शोचसि ॥ १८

[1]निरुक्तं निगमं छन्दस् सषडङ्गार्थशास्त्रवान् ।
अधीतः कृतविद्यस्त्वम् [2]अष्टव्याकरणैः कृपात् ॥ १९

हलायुधात् कृपाद्द्रोणाद् अस्त्रविद्यामधीतवान् ।
भ्रातृज्येष्ठस्स्थितो राज्ये किन्तु शोचसि पुत्रक ॥ २०

[3]पृथग्जनैरलभ्यं यद् अशनाच्छादनं बहु ।
प्रभुस्त्वं भुञ्जसे पुत्र संस्तुतस्सूतमागधैः ॥ २१

---

1. क-ख-ग-घ-ङ—अधीतवान् कृतविद्यः प्रियो मे लालितो गृहे ।
[अधिकः पाठः]

2. अ—दशव्याकरणैः कृपात् ।

3. अ—पृथग्जनेनालभ्यं । क—पृथग्विधैरतुल्यं ।
ग—पृथग्जनैरतुल्यं ।

तस्य ते विदितप्रज्ञ शोकमूलमिदं कथम् ।
लोकेऽस्मिन्‌ ज्येष्ठभागी त्वं तन्ममाचक्ष्व पुत्रक ॥ २२

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा मन्दः क्रोधवशानुगः ।
पितरं प्रत्युवाचेदं स्वमतिं सम्प्रकाशयन् ॥ २३

दुर्योधनः—

अश्नाम्याच्छादये चाहं यथा कापुरुषस्तथा ।
अमर्षं धारये चोग्रं तितिक्षुः कालपर्ययम् ॥ २४
अमर्षणस्स्वां प्रकृतिम् अभिभूय चरेद्धितम् ।
क्लेशान् मुमुक्षुः परजान् स वै पुरुष उच्यते ॥ २५
[1]सन्तोषो वै श्रियं हन्ति अभिमानश्च भारत ।
अनुक्रोशश्श्रियं हन्ति सन्तोषश्चापि तावुभौ ॥ २६
अनुत्थानभये चोभे तैर्वृतो नाश्नुते महत् ॥ २६॥
न मामवैमि तद्भूतां श्रियं दृष्ट्वा युधिष्ठिरे ।
ज्वलन्तीमिव राजेन्द्र विवर्णकरणीं मम ॥ २७॥
सपत्नानृद्ध्यतो त्मानं हीयमानं निशाम्य ह ।
अतुष्यन्नपि कौन्तेयं नाहं पश्यामि वर्धितुम् ॥ २८॥
तस्मादहं विवर्णश्च दीनश्च हरिणः कृशः ॥ २९
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान् बिभर्ति युधिष्ठिरः ॥ ३०

---

1. क-ख-ग-घ-ङ—कोशेषु इदमर्धं नास्ति

दशान्यानि सहस्राणि यतीनामूर्ध्वरेतसाम् ।
भुञ्जते रुक्मपात्रीभिर् युधिष्ठिरनिवेशने ॥ ३१
शत्रोर्ऋद्धिविशेषेण विरूपोऽन्नविवर्जितः ।
कदलीमृदुरोमाणि कृष्णश्यामारुणानि च ॥ ३२
काम्भोजः प्राहिणोत् तस्मै परार्ध्यानपि कम्बलान् । ३२॥
गजयोषिद्गवाश्वानां सहस्राणि चतुर्दश ।
[1]त्रिंशतं चोष्ट्रवामीनां सहस्राणि वहन्त्युत ॥ ३३॥
एवं सर्वाणि रत्नानि पृथिव्यां सर्वपार्थिवाः ।
प्रयच्छन्ति महाराज कुन्तीपुत्रस्य सर्वतः ॥ ३४॥
न कचिद्धि मया दृष्टस् तादृशो नैव च श्रुतः ।
यादृग्धनागमो यज्ञे पाण्डुपुत्रस्य धीमतः ॥ ३५॥
असत्यं चेदिदं सर्वं सञ्जयं प्रष्टुमर्हसि ॥ ३६
अपर्यन्तं धनौघं तं दृष्ट्वा शत्रोरहं नृप ।
[2]शमं नैवाधिगच्छामि चिन्तयानो दिवानिशम् ॥ ३७
ब्राह्मणा वाटधानाश्च गोमन्तश्शतसङ्घशः ।

---

1. अ—त्रिशतं चोष्ट्रवामीनां सहस्राणि चतुर्दश ।
क—त्रिशतं चोष्ट्रवामीनां सहस्राण्यपराण्यपि ।
ख-घ—त्रिंशद्गावोष्ट्रवामीनां सहस्राणि चरन्त्युत ।
2. क—शमं । ख-ग-घ-ङ—स्वप्नं ।

[1]त्रिखर्वं वलिमादाय द्वारि तिष्ठन्ति वारिताः ॥ ३८

कमण्डलूनुपादाय जातरूपमयाञ्शुभान् ।
[2]त्रैखर्वाः प्रतिपाद्यास्मै लेभिरेऽथ प्रवेशनम् ॥ ३९
यन्नैव मधु शक्राय प्रापयन्त्यमरस्त्रियः ।
तदस्मै कांस्यमादाय वारुणं कलशोदधिः ॥ ४०

रुक्मस्य तु सहस्रं च कलशं रत्नभूषितम् ।
दृष्ट्वाऽथ मे मनस्तात ज्वररूपमिवाभवत् ॥ ४१
गृहीत्वा कलशं यान्ति समुद्रौ पूर्वदक्षिणौ ।
तथैव पश्चिमं यान्ति गृहीत्वा भरतर्षभ ॥ ४२
जलार्थं तत्र राजेन्द्र घटानादाय राक्षसाः ।
दिशो ययुर्जलार्थं ते वर्जयित्वोत्तरां दिशम् ॥ ४३
उत्तरं तु न गच्छन्ति विना तात पतत्रिभिः ॥ ४३॥
कृतां वैन्दुसरै रत्नैर् मयेन स्फाटिकच्छदाम् ।
अपश्यं नलिनीं पूर्णाम् उदकस्येव भारत ॥ ४४॥
उत्कर्षन्तं च वै वासः प्राहसन्मां वृकोदरः ।
किङ्कराश्च सभापाला जहसुर्भरतर्षभ ॥ ४५॥
पित्रोरर्थे विशेषेण प्रावृण्वं तत्र जीवितम् ।
तत्र स्म यदि शक्तस्यां घातयेयं वृकोदरम् ॥ ४६॥

1. क-ग—त्रैवर्णां; अ—त्रैगर्ता।
2. अ-ख—त्रैखर्वाः प्रतिपद्यास्मै। क—त्रैवर्णाः।

सपत्नेनापहासो हि स मां दहति भारत ॥ ४७
तत्र स्फाटिकतोयां हि स्फाटिकाम्बुजशोभिताम् ।
सभां पुष्करिणीं मत्वा पतितोऽस्मि नराधिप ॥ ४८
तत्र मामहसद्भीमस् सह पार्थेन सस्वरम् ।
द्रौपदी च सह स्त्रीभिः पातयन्ती मनो मम ॥ ४९
क्लिन्नवस्त्रस्य च जले किङ्करा राजचोदिताः ।
ददुर्वासांसि मेऽन्यानि तच्च दुःखतरं मम ॥ ५०
अस्तम्भा इव तिष्ठन्ति स्तम्भाश्शतसहस्रशः ।
सोऽहं तत्राहतो राजन् स्फटिकाभ्यन्तरे विभो ॥ ५१
[1]अद्वारेण विनिर्गच्छन् द्वारसंस्थानरूपिणा ।
अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः ॥ ५२
आमृशन्नियतं दृष्ट्वा मार्गान्तरमुपाविशम् ।
[2]स्त्रियश्च तत्र मां दृष्ट्वा जहसुस्तादृशं नृप ॥ ५३
इदं द्वारमिदं राजन् न द्वारमिति मां प्रति ।
अग्रतः प्रहसन वाक्यं बभाषे स वृकोदरः ॥ ५४
सर्वं हासकरं तेषां सदस्यानां नरर्षभ ॥ ५४॥
न श्रुतानि न दृष्टानि यानि रत्नानि मे क्वचित् ।

---

1. अ-क-ख-ग-घ-ङ—छाया. स्तम्भा इवातिष्ठन् शतशोऽथ सहस्रशः ।
[अधिकः पाठः]

2. अ—कोशे इदमर्धं नास्ति ।

तानि मे तत्र दृष्टानि तेन तप्तोऽस्मि दुःखितः ॥ ५५॥
हुताशनं प्रवेक्ष्यामि प्रविशे वा महोदधिम् ।
सम्भावितस्य चाकीर्तिर् मरणादतिरिच्यते ॥ ५६॥
इदं चाद्भुतमत्रासीत् तन्मे कथयतश्शृणु ॥ ५७
पूर्णे शतसहस्रे तु विप्राणां भुञ्जतां सदा ।
स्थापिता तत्र संज्ञाऽभूच् छङ्खोऽध्मायत नित्यशः ॥ ५८
मुहुर्मुहुः प्रणदतस् तस्य शङ्खस्य नित्यशः ।
उत्तमं शब्दमश्रौषं ततो रोमाणि मेऽहृषन् ॥ ५९
पार्थिवैर्बहुभिः कीर्णम् उपस्थानं दिदृक्षुभिः ।
सर्वरत्नान्युपादाय महार्हाणि जनेश्वर ॥ ६०
यज्ञे तस्य महाभाग पाण्डवेयस्य धीमतः ।
वैश्या इव महीपाला द्विजातिपरिवेषकाः ॥ ६१
न सा श्रीर्देवराजस्य यमस्य वरुणस्य वा ।
गुह्यकाधिपतेर्वाऽपि [1]स्वयं विष्णोरपि प्रभो ॥ ६२
[2]राक्षसाधिपतेर्वाऽपि या श्री राजन् युधिष्ठिरे ॥ ६२॥
तां दृष्ट्वा पाण्डुपुत्रस्य श्रियं परमिकामहम् ।
शान्ति न परिगच्छामि दह्यमानेन चेतसा ॥ ६३॥
अप्राप्य पाण्डवैश्वर्यं शमो मम न विद्यते ।

---

1. क–ख–ग—या श्री राजन् युधिष्ठिरे ।
2. अ—कोशे इदमर्धं नास्ति !

[1]अवाप्स्ये वा रणं बाणैश् शयिष्ये वा हतः परैः ॥ ६४॥
अतादृशस्य मे किं नु जीवितेन परन्तप ।
वर्धन्ते पाण्डवा राजन् वयं हि स्थितवृद्धयः* ॥ ६५॥

शकुनिः—
यामेतामुत्तमां लक्ष्मीं दृष्टवानसि पाण्डवे ।
तस्याः प्राप्तावुपायं मे शृणु सत्यपराक्रम ॥ ६६॥
अहमक्षेष्वभिज्ञोऽस्मि पृथिव्यामपि भारत ।
हृदयज्ञः पणज्ञश्च विशेषज्ञश्च देवने ॥ ६७॥
द्यूतप्रियश्च कौन्तेयो न च जानाति देवितुम् ।
आहूतश्चैष्यति व्यक्तं दीव्यावेत्याह्वयस्व तम् ॥ ६८॥

वैशम्पायनः—
एवमुक्तश्शकुनिना राजा दुर्योधनस्तदा ।
धृतराष्ट्रं तदा वाक्यं मन्दधीरिदमब्रवीत् ॥ ६९॥

दुर्योधनः—
अयमुत्सहते राजञ् श्रियमाहर्तुमक्षवित् ।
द्यूतेन पाण्डुपुत्रस्य तदनुज्ञातुमर्हसि ॥ ७०॥

धृतराष्ट्रः—
क्षत्ता मन्त्री महाप्राज्ञस् स्थितो यस्यास्मि शासने ।

---

1. क—अवाप्स्ये वा श्रियं बाणैः। घ—अवाप्स्ये वा च तां बाणैः।
ख—अवाप्स्येथाश्च तां बाणैः।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

तेन सङ्गम्य वेत्स्यामि कार्याकार्यविनिश्चयम् ॥ ७१॥
स हि धर्मं पुरस्कृत्य दीर्घदर्शी परं हि नः ।
उभयोः पक्षयोः पथ्यं वक्ष्यत्यर्थं विनिश्चयात् ॥ ७२॥

[1]दुर्योधनः—

निवर्तयिष्यति त्वाऽसौ यदि क्षत्ता समेष्यति ।
निवृत्ते त्वयि राजेन्द्र मरिष्यामि न संशयः ॥ ७३॥
स त्वं मयि मृते राजन् विदुरेण सुखी भव ।
भोक्ष्यसे पृथिवीं कृत्स्नां किं मया त्वं करिष्यसि ॥ ७४॥

वैशम्पायनः—

आर्तवाक्यं तु तत् तस्य प्रणयोक्तं निशम्य सः ।
दुर्योधनस्य शान्त्यर्थं धृतराष्ट्रोऽन्वशात् तदा ॥ ७५॥

धृतराष्ट्रः—

स्थूणासहस्रैर्महतीं शतद्वारां सभां मम ।
मनोहरां दर्शनीयाम् आशु कुर्वन्तु शिल्पिनः ॥ ७६॥
ततस्त्वास्तीर्य रत्नैस्ताम् अक्षानावाप्य सर्वशः ।
संस्कृतां सुप्रवेशां च निवेदयत मा चिरम् ॥ ७७॥

वैशम्पायनः—

दुर्योधनस्य शान्त्यर्थम् इति निश्चित्य भूमिपः ।

---

1. अ—अथवा वासुदेवं वा भीष्मं वा कार्यनिश्चये ।
आहूय मन्त्रिणं कुर्यां कथं व्यवसितं यतः ॥　　[अधिकः पाठः]

धृतराष्ट्रो महाराज प्राहिणोद्विदुराय वै ॥ ७८॥
अपृष्ट्वा विदुरं ह्यस्य नासीत् कश्चिद्विनिर्णयः ।
द्यूते दोषांश्च जानन् स पुत्रस्नेहादकृष्यत ॥ ७९॥
तच्छ्रुत्वा विदुरो धीमान् कलिद्वारमुपस्थितम् ।
विनाशमुखमुत्पन्नं धृतराष्ट्रमुपाद्रवत् ॥ ८०॥
सोऽभिगम्य महात्मानं भ्राता भ्रातरमग्रजम् ।
मूर्ध्ना प्रणम्य चरणाविदं वचनमब्रवीत् ॥ ८१॥

विदुरः—

[1]नाभिनन्दामि ते राजन् व्यवसायमिमं प्रभो ।
द्यूतहेतोर्हि ते भेदस् सुतानां भवति ध्रुवम् ॥ ८२॥

धृतराष्ट्रः—

क्षत्तः पुत्रेषु पुत्रैर्मे कलहो न भविष्यति ।
एवं देवाः प्रसादं नः करिष्यन्ति न संशयः ॥ ८३॥
मयि सन्निहिते चैव भीष्मे च पुरुषर्षभे ।
अनयो [2]नैव विहितो नयस्सम्प्रभविष्यति ॥ ८४॥
अशुभं वा शुभं वाऽपि हितं वाऽप्यथवाऽहितम् ।
प्रवर्ततां सुहृद्द्यूतं दिष्टमेतदसंशयम् ॥ ८५॥
गच्छ त्वं रथमास्थाय हयैर्वातसमैर्जवे ।

---

1. क-ख-ग-घ-ङ—नाभिजानामि ।
2. क—दैवविहितो न नस्सं । घ—दैवविहितो नयस्सं ।

खाण्डवप्रस्थमद्यैव युधिष्ठिरमिहानय॥ ८६॥

न वार्यो व्यवसायो मे विदुरैतद्ब्रवीमि ते ।

दैवमेव परं मन्ये येनैतदुपपद्यते ॥ ८७॥

वैशम्पायनः—

इत्युक्तो विदुरो धीमान् नैतदस्तीति चिन्तयन् ।

आपगेये महाप्राज्ञे सर्वमेतान्निवेदयत् ॥ ८८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

॥ २७ ॥ द्यूतपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[अस्मिन्नध्याये ८८॥ श्लोकाः]

---

## ॥ द्विपञ्चाशोऽध्यायः ॥

---

जनमेजयेन विस्तरेण द्यूतवृत्तान्तकथनप्रार्थनम् ॥ १ ॥ धृतराष्ट्रेण दुर्योधनं प्रति द्यूतनिषेधनम् ॥२॥ दुर्योधनेन धृतराष्ट्रं प्रति भीमादिकृतस्वापहसनादिकथनम् ॥ ३ ॥ युधिष्ठिराय नानादेशीयराजोपाहृतोपायनकथनम् ॥ ४ ॥ राजसूयवर्णनं च ॥ ५ ॥

---

जनमेजयः—

कथं तदभवद् द्यूतं भ्रातॄणां तन्महात्ययम् ।

यत्र तद्व्यसनं प्राप्तं पाण्डवैर्मे पितामहैः ॥ १

के च तत्र सभास्तारा राजानो ब्रह्मवित्तमाः ।

के चैनमनुमोदन्ते के चैनं प्रत्यषेधयन् ॥ २

विस्तरेणैतदिच्छामि कथ्यमानं त्वया द्विज ।
मूलं ह्येतद्विनाशस्य पृथिव्यां द्विजसत्तम ॥ ३

सूतः—
एवमुक्तस्ततो राज्ञा व्यासशिष्यो महामतिः ।
आचचक्षे यथावृत्तं तत् सर्वं सर्ववेदवित् ॥ ४

वैशम्पायनः—
शृणु मे विस्तरेणेमां कथां भरतसत्तम ।
भूय एव महाराज यदि ते श्रवणे मनः ॥ ५
विदुरस्य मतिं ज्ञात्वा धृतराष्ट्रोऽम्बिकासुतः ।
दुर्योधनमिदं वाक्यम् उवाच विजने पुनः ॥ ६

धृतराष्ट्रः—
अलं द्यूतेन गान्धारे विदुरो न प्रशंसति ।
न ह्यसौ सुमहाबुद्धिर् अहितं नोऽभिधास्यति ॥ ७
हितमेव परं मन्ये विदुरो यत् प्रभाषते ।
क्रियतां पुत्र तत् सर्वम् एतन्मन्ये हितं तव ॥ ८
देवर्षिर्वासवगुरुर् देवराजाय धीमते ।
यत् प्राह शास्त्रं सुमहद् बृहस्पतिरुदारधीः ॥ ९
तद्वेद विदुरस्सर्वं सरहस्यं महाकविः ॥ ९॥
स्थितोऽस्मि वचने तस्य सदाऽहमपि पुत्रक ।
विदुरश्च स मेधावी कुरूणां [1]प्रवरो मतः ॥ १०॥

1. अ–क—प्रवरोत्तमः ।

उद्धवो वा महाबुद्धिर् वृष्णीनामर्चितःकविः ।
तदलं पुत्र भेदेन द्यूते भेदो हि दृश्यते ॥ ११॥
भेदे विनाशस्सुव्यक्तस् तस्मादेतां मतिं त्यज ॥ १२
पित्रा मात्रा च पुत्रस्य यद्वै कार्यं परं स्मृतम् ।
प्राप्तस्त्वमसि नस्तात पितृपैतामहं पदम् ॥ १३
अधीतवान् कृती शास्त्रे लालितस्सततं गृहे ।
भ्रातृज्येष्ठस्स्थितो राज्ये विद्यते किन्नु शोचनम् ॥ १४
पृथग्जनैरलभ्यं यद् भोजनाच्छादनं परम् ।
तत् प्राप्तोऽसि महाबाहो कस्माच्छोचसि पुत्रक ॥ १५
स्फीतं राष्ट्रं महाबाहो पितृपैतामहं महत् ।
नित्यमाज्ञापयन् [1]शासि दिवि देवेश्वरो यथा ॥ १६
यादृशं च तवैश्वर्यं तदन्येषां सुदुर्लभम् ।
ये चोपभोगास्ते तात मया ते परिकीर्तिताः ॥ १७
तस्य ते विदितप्रज्ञ शोकमूलमिदं कथम् ।
समुत्थितं दुःखतरं तन्मे शंसितुमर्हसि ॥ १८

दुर्योधनः—
अश्नाम्याच्छादयामीति प्रपश्यन् [2]हीनपौरुषः ।
नामर्षं कुरुते यस्तु पुरुषस्सोऽधमस्स्मृतः ॥ १९

---
1. अ-क—भासि ।
2. क—हीनपूरुषः । अ-ङ—हीनपौरुषम् । ख-घ—हीनपूरुषः ।

न मां प्रीणाति पृथिवी राजन् साधारणी विभो ।
ज्वलन्तीमिव कौन्तेये श्रियं दृष्ट्वा महात्मनि ॥ २०

सर्वां तु पृथिवीं दृष्ट्वा युधिष्ठिरवशानुगाम् ।
स्थिरोऽस्मि योऽहं जीवामि दुःखादेतद्ब्रवीमि ते ॥ २१

आवर्जिता इवाभान्ति निघ्नाः किङ्करका गुरो ।
कारस्कारा लोहजङ्घा युधिष्ठिरनिवेशने ॥ २२

हिमवत्सागरानूपाम् सर्वरत्नाकरास्तथा ।
[1]अन्त्यास्सर्वे पर्युदस्ता युधिष्ठिरनिवेशने ॥ २३

ज्येष्ठोऽहमिति मां मत्वा श्रेष्ठश्चापि विशाम्पते ।
युधिष्ठिरेण सत्कृत्य युक्तो रत्नपरिग्रहे ॥ २४

न मे हस्तस्समभवद् वसु तत् प्रतिगृह्णतः ।
प्रातिष्ठं तदविश्रान्तो गृह्य दूराहृतं वसु ॥ २५

उपस्थितानां रत्नानां श्रेष्ठानां रत्नहारिणाम् ।
पारमन्तं न पश्यामि नापरं तत्र भारत ॥ २६

कृतां बिन्दुसरोरत्नैर् मयेन स्फाटिकच्छदाम् ।
अपश्यं नलिनीं पुण्याम् उदकस्येव भारत ॥ २७

उत्कर्षन्तं च वै वासः प्राहसन्मां वृकोदरः ।
किङ्कराश्च सभापाला जहसुर्भरतर्षभ ॥ २८

2 ग-घ-ङ—अन्ये सर्वे तु पर्यस्ताः। ख—अन्ये सर्वे पर्युदस्ताः।

पित्रोरर्थे विशेषेण प्राघूर्ण्वं तत्र जीवितम् ।
तत्र स्म यदि शक्तस्यां घातयेयं वृकोदरम् ॥ २९
सपत्नेनावहासो हि स मां दहति भारत ॥ २९॥
तत्र स्फटिकतोयां हि स्फाटिकाम्बुजशोभिताम् ॥
सभां पुष्करिणीं मत्वा पतितोऽस्मि नराधिप ॥ ३०॥
तत्र मामहसत्कृष्णः सह पार्थेन सस्वरम् ।
द्रौपदी च सह स्त्रीभिः पातयन्ती मनो मम ॥ ३१॥
क्लिन्नवस्त्रस्य च जले किङ्करा राजचोदिताः ।
ददुर्वासांसि चान्यानि तच्च दुःखतरं मम ॥ ३२॥
प्रलम्भं च शृणुष्वान्यद् गदतो मे नराधिप ॥ ३३
अद्वारेण विनिर्गच्छन् द्वारसंस्थानरूपिणा ।
अभिहत्य शिलां भूयो ललाटे चास्मि विक्षतः ॥ ३४
[1]स्त्रियश्च तत्र मां दृष्ट्वा जहसुस्तादृशं नृप ॥ ३४॥
इदं द्वारमिदं राजन् न द्वारमिति मां प्रति ।
अग्रतः प्रहसन् वाक्यं बभाषे स वृकोदरः ॥ ३५॥
तत्र मां यमजौ दूराद् आलोक्य ललितौ किल ।
सहितावनुशोचन्तौ बाहुभिः प्रत्यगृह्णताम् ॥ ३६॥
उवाच सहदेवो मां तत्र विस्मापयन्निव ।

1. अ—कोशे इदमर्धद्वयं नास्ति ।

इदं द्वारमितो राजन् निर्गच्छेति पुनः पुनः ॥ ३७॥

न श्रुतानि न दृष्टानि यानि रत्नानि मे क्वचित् ।
तानि तत्र च दृष्टानि तेन तप्तोऽस्मि दुःखितः ॥ ३८॥

हुताशनं प्रवेक्ष्यामि प्रविशे वा महोदधिम् ।
सम्भावितस्य चाकीर्तिर् मरणादतिरिच्यते* ॥ ३९॥

यन्मया पाण्डवानां तु दृष्टं तच्छृणु भारत ।
आहृतं भूमिपालेभ्यो वसु मुख्यं ततस्ततः ॥ ४०॥

निर्विद्ये दृढमात्मानं दृष्ट्वाऽहं तदरेर्धनम् ।
लालितो भूमितो वाऽपि प्रतिपद्यस्व भारत ॥ ४१॥

कुथांश्चेलान् पार्षतांश्च जातरूपपरिष्कृतान् ।
प्रावाराजिनमुख्यांश्च काम्भोजः प्रददौ वसु ॥ ४२॥

अश्वांस्तित्तिरिकल्माषांस् त्रिशतं शुकनासिकान् ।
उष्ट्रवामीस्त्रिगर्ताश्च पुष्टाः पीलुशमीङ्गुदैः ॥ ४३॥

गोपास्त्वनेन सहितास् तदादाय च पट्पदम् ।
वसातयो दुद्रुवाश्च द्वारि तस्यावतस्थिरे ॥ ४४॥

कमण्डलूनुपादाय जातरूपमयाञ्छुभान् ।
रत्नानि च हिरण्यं च सुवर्णं चैव केवलम् ॥ ४५॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

प्रीयमाणः प्रसन्नात्मा स्वयं स्वजनसंवृतः ।
वैखर्वी रथमुख्येशः पाण्डवाय न्यवेदयत् ॥ ४६॥

यश्च स द्विजमुख्येन राज्ञश्शङ्खो निवेदितः ।
प्रीत्या दत्तः कुणिन्देन धर्मराजाय धीमते ॥ ४७॥

तं सर्वे भ्रातरो भ्रात्रे ददुश्शङ्खं किरीटिने ।
तं प्रत्यगृह्णाद्बीभत्सुस् तोयजं हेममालिनम् ॥ ४८॥

[1]चितं निष्कसहस्रेण भ्राजमानं स्वतेजसा ।
रुचिरं दर्शनीयं च भूषितं विश्वकर्मणा ॥ ४९॥

अधारयच्च धर्मश्च तं नमस्य पुनः पुनः ।
योऽन्नदाने नदति स ननादाधिकं तदा ॥ ५०॥

प्रणादाद्भूमिपास्तस्य पेतुर्हीनास्स्वतेजसा ॥ ५१

धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवोऽष्टमः ।
सत्त्वस्थाश्शौर्यसम्पन्ना अन्योन्यप्रियकारिणः ॥ ५२
विसंज्ञान् भूमिपान् दृष्ट्वा मां च ते प्राहसंस्तदा ॥ ५२॥

ततः प्रहृष्टो बीभत्सुर् अददाद्धेमश्रृङ्गिणः ।
शतान्यनडुहां पञ्च द्विजमुख्याय भारत ॥ ५३॥

सुमुखेन बलिर्मुख्यः प्रेषितोऽजातशत्रवे ।
कुणिन्देन हिरण्यं च वासांसि विविधानि च ॥ ५४॥

---

1. अ-क—चितं। ख-ग—शतं।

काश्मीरराजो माद्वीकं शुद्धं च रसवन्मधु ।
बलिं च कृत्स्नमादाय पाण्डवायाभ्युपाहरत् ॥ ५५॥
यवना हयानुपादाय पार्वतीयान् मनोजवान् ।
आसनानि महार्हाणि कम्बलांश्च महाधनान् ॥ ५६॥
नवान् विचित्रान् सूक्ष्मांश्च परार्ध्यान् सुप्रदर्शनान् ।
अन्यच्च विविधं रत्नं द्वारि तिष्ठन्ति वारिताः ॥ ५७॥
श्रुतायुरपि कालिङ्गो मणिरत्नमनुत्तमम् ।
अङ्गास्त्रियो दर्शनीया जातरूपविभूषिताः ॥ ५८॥
वङ्गो जाम्बूनदमयान् पर्यङ्काञ्छतशो नृप ।
दक्षिणात् सागराभ्याशात् प्रावारांश्च परश्शतम् ॥ ५९॥
औदकानि सरत्नानि बलिं चादाय भारत ।
अन्येभ्यो भूमिपालेभ्यः पाण्डवाय न्यवेदयत् ॥ ६०॥
दार्दुरं चन्दनं मुख्यं भारान् षण्णवतिं ध्रुवम् ।
पाण्डवाय ददौ पाण्ड्यश् शङ्खास्तावत एव च ॥ ६१॥
चन्दनागरु चानन्तं मुक्तावैडूर्यचित्रकाः ।
चोलश्च केरलश्चोभौ ददतुः पाण्डवाय वै ॥ ६२॥
अश्मको हेमशृङ्गीश्च दोग्ध्रीर्हेमविभूषिताः ।
सवत्साः कुम्भदोहाश्च गास्सहस्राण्यदाद्दश ॥ ६३॥
सैन्धवानां सहस्राणि हयानां पञ्चविंशतिम् ।

अददात् सैन्धवो राजा हेममाल्यैरलङ्कृतान् ॥ ६४॥
सौवीरो हस्तिभिर्युक्तान् रथांश्च त्रिशतावरान् ।
जातरूपपरिष्कारान् मणिरत्नविभूषितान् ॥ ६५॥
मध्यन्दिनार्कप्रतिमांस् तेजसाऽप्रतिमानिव ।
बलिं च कृत्स्नमादाय पाण्डवाय न्यवेदयत् ॥ ६६॥
अवन्तिराजो रत्नानि विविधानि सहस्रशः ।
हाराङ्गदांश्च मुख्यान् वै विविधं च विभूषणम् ॥ ६७॥
दासीनामयुतं चैव बलिमादाय भारत ।
सभाद्वारि नरश्रेष्ठ दिदृक्षुरवतिष्ठते ॥ ६८॥
दशार्णश्चेदिराजश्च शूरसेनश्च वीर्यवान् ।
[1]बलिं च कृत्स्नमादाय पाण्डवाय न्यवेदयत् ॥ ६९॥
काशिराजेन हृष्टेन बली राजन् निवेदितः ॥ ७०
अशीतिगोसहस्राणि शतान्यष्टौ च दन्तिनाम् ।
[2]विविधानि च रत्नानि काशिराजो बलिं ददौ ॥ ७१
कृतक्षणश्च वैदेहः कौसलश्च बृहद्बलः ।
ददतुर्वाजिमुख्यांश्च सहस्राणि चतुर्दश ॥ ७२
शैब्यो वसादिभिस्सार्धं त्रिगर्तो मालवैस्सह ।

---

1. क—वस्त्राणि मुख्यान्यादाय रत्नानि विविधानि च। [अधिकः पाठः]
2. ख-ग-घ-ङ—कोशेषु इदमर्धं नास्ति।

तस्मै रत्नानि ददतुर् एकैको भूमिपोऽमितम् ॥ ७३

हारांस्तु मुक्तान् मुख्यांश्च विविधं च विभूषणम् ।
शतं दासीसहस्राणि कार्पासिकसुवासिनीः ॥ ७४

श्यामास्तन्वीर्दीर्घकेशीर् हेमाभरणभूषिताः ।
बलिं च कृत्स्नमादाय भारुकच्छो नरर्षभ ॥ ७५
शुद्धान् विप्रोत्तमार्हांश्च कम्बलप्रवरान् ददौ ॥ ७५॥

ते सर्वे पाण्डुपुत्रस्य द्वार्यतिष्ठन् दिदृक्षवः ।
उपायनं यदा दद्युस् तदा द्वारमलभ्यत ॥ ७६॥

इन्द्रवृष्टैर्वर्तयन्ति धान्यैर्नाद्यमुखैस्तु ये ।
समुद्रनिष्कुटाज्जाताः परसिन्धुनिवासिनः ॥ ७७॥

ते वै द्रुमाः पारदाश्च शकाः कैरातकैस्सह ।
बलिं विविधमादाय रत्नानि विविधानि च ॥ ७८॥

अजाविकं गोहिरण्यं खरोष्ट्रं फलजं मधु ।
कम्बलान विविधांश्चैव द्वारि तिष्ठन्ति वारिताः ॥ ७९॥

प्राग्ज्योतिषपतिश्शूरो म्लेच्छानामधिपो वशी ।
यवनैस्सहितो राजा भगदत्तो महीपतिः ॥ ८०॥

आजानेयान् हयाञ्छीघ्रान् आदायानिलरंहसः ।
बलिं च कृत्स्नमादाय द्वारि तिष्ठति वारितः ॥ ८१॥

अश्मसारमयं भाण्डं शुभान् दन्तत्सरूनसीन् ।

प्राग्ज्योतिषोऽथ तद्दत्त्वा भगदत्तोऽव्रजत् तदा ॥ ८२॥
द्व्यक्षांस्त्र्यक्षाँल्ललाटाक्षान् नानादिग्भ्यस्समागतान् ।
औष्णीषानघयांश्चैव बाहुकान् पुरुषादकान् ॥ ८३॥
एकपादांश्च तत्राहम् अपश्यं द्वारि वारितान् ॥ ८४
बल्यर्थं च ददुस्तस्य हिरण्यं रजतं वसु ॥ ८४॥
इन्द्रगोपकसङ्काशान् शुकवर्णान् मनोजवान् ।
तथैवेन्द्रायुधनिभान् सन्ध्याभ्रसदृशानपि ॥ ८५॥
अनेकवर्णानारण्यान् गृहीत्वाऽश्वांस्तदा बहून् ।
जातरूपमथाग्र्येयं ददुस्तस्यैकपादकाः ॥ ८६॥
सिंहलश्च तदा राजा परिगृह्य धनं बहु ।
गोशीर्षकं [1]पद्मकं च हरिं श्यामं च चन्दनम् ॥ ८७॥
भाराणां शतमेकं तु द्वारि तिष्ठति वारितः ॥ ८८
ये नग्नविषया राजन् बर्बरेयाश्च विश्रुताः ॥ ८८॥
शतं दासीसहस्राणां कम्बलानां सहस्रशः ।
परिगृह्य महाराज द्वारि तिष्ठन्ति वारिताः ॥ ८९॥
[2]पौण्ड्राश्च दामलिप्ताश्च यथाकामकृतो नृपाः ।
कालेयकं च रूप्यं च परिगृह्य परिच्छदान् ॥ ९०॥
अगरून् स्फाटिकांश्चैव दन्ताञ्जातीफलानि च ।
तक्कोलांश्च लवङ्गांश्च कर्पूरांश्च महाबलाः ॥ ९१॥

---

1. अ-क– हरिश्यामं चन्दनप्रवरं महत् ।
2. अ-कोशे अर्धषट्कं नास्ति ।

अन्यांश्च विविधान् द्रव्यान् परिगृह्य उपस्थिताः ॥ ९२
एते सर्वे महात्मानो द्वारि तिष्ठन्ति वारिताः ॥ ९२॥
शैलेयश्च ततो राजा पत्नोर्णान् परिगृह्य सः ।
द्वारि तिष्ठन् महाराज द्वारपालैर्निवारितः ॥ ९३॥
चीना हूणाः खषाः काचाः पर्वतान्तरवासिनः ।
अहार्बुदशसाहस्रान् विनीतान दिक्षु विश्रुतान् ॥ ९४॥
उष्णीषं कम्बलं चैव कीटजं पट्टजं तथा ।
प्रमाणरागस्पर्शाढ्यान् बाह्लीचीनसमुद्भवान ॥ ९५॥
रसान् गन्धान् प्रशंसन्तस् ततो द्वारमलभ्यत ॥ ९६
खर्वटास्तोमराश्चैव शूरा वर्धनकास्तथा ।
चेलान् बहुविधान् गृह्य द्वारि तिष्ठन्ति वारिताः ॥ ९७
प्राक्कोटा नाटकेयाश्च नन्दीनागरकास्तथा ।
नापितास्त्रैपुराश्चैव पञ्चगेयास्सहोरुजाः ॥ ९८
तथा चाटविकास्सर्वे नानाद्रव्यपरिच्छदान् ।
परिगृह्य महाराज द्वारि तिष्ठन्ति वारिताः ॥ ९९
शकास्तुषाराः कौरव्य रोमकाश्शृङ्गिणो नराः ।
[1]बलाद्दूरगमान् राजन गणितं चार्बुदं मया ॥ १००
किट्टीकृतं सुवर्णं च पद्मकिञ्जल्कसन्निभम् ।

1. ग—महाबलान् दूरगमान् गणितांश्चार्बुदान् हयान् ।

शितान् दीर्घानसीनन्यान् यष्टिशक्तिपरश्वथान् ॥ १०१

श्लक्ष्णं वस्त्रमकार्पासम् आविकं ह्येणकाजिनम् ।
वलिमेतं समादाय द्वारि तिष्ठन्ति वारिताः ॥ १०२

आसनानि महार्हाणि यानानि शयनानि च ।
मणिकाञ्चनचित्राणि गजदन्तमयानि च ॥ १०३

रथांश्च विविधाकारान् जाम्बूनदपरिष्कृतान् ।
हयैर्विनीतैस्सम्पन्नान् वैयाघ्रपरिवारितान् ॥ १०४

विचित्रान् सपरिस्तोमांश् चापानि विविधानि च ।
नाराचानर्धनाराचान् छस्त्राणि विविधानि च ॥ १०५

एतद्गृह्य महद्द्रव्यं पूर्वदेशाधिपो नृपः ।
प्रविष्टो यज्ञसदनं पाण्डवस्य यशस्विनः ॥ १०६

जतुचेलान् द्विसाहस्रं दुकूलान्ययुतानि ।
कांस्यानि चैव भाण्डानि महार्हाणि कुथानि च ॥ १०७

एतान्यन्यानि रत्नानि ददौ पार्थस्य वै मुदा ॥ १०७॥

अन्यान् बहुविधान् राजन् नरास्सागरमाश्रिताः ।
रत्नं बहुविधं गृह्य ददुस्ते पाण्डवाय तु ॥ १०८॥

[1]मालवश्च ततो राजन् रत्नानि विविधानि च ।
गोधूमानां च राजेन्द्र द्रोणानां कोटिसम्मितम् ॥ १०९॥

---

1. अ-कोशे श्लोकपञ्चकं नास्ति ।

अन्यांश्च विविधान् धान्यान् परिगृह्य महाबलः ।
पाण्डवाय ददौ प्रीत्या प्रविवेश महाध्वरम् ॥ ११०॥

नानारत्नान् बहून् गृह्य सुराष्ट्राधिपतिर्नृपः ।
तैलकुम्भैर्महाराज द्रोणानामयुतानि च ॥ १११॥

गुडानपि [1]सितान् स्वादून् सहस्रशकटैर्नृपः ।
एतानि सर्वाण्यादाय ददौ कुन्तीसुताय सः ॥ ११२॥

अन्ये च पार्थिवा राजन् नानादेशसमागताः ।
रत्नानि विविधान् गृह्य ददुस्ते कौरवाय तु ॥ ११३॥

जम्बूद्वीपे समस्ते तु सराष्ट्रवनपर्वते ।
करं तु न प्रयच्छेद् यो नास्ति पार्थस्य पार्थिवः ॥ ११४॥

नरस्सप्तसु वर्षेषु तद्यज्ञे नास्ति नागतः ।
क्रतुर्नानागणैः कीर्णो बभौ शक्रसदो यथा* ॥ ११५॥

इमांश्च देयान् विविधान् निबोध मम पार्थिव ।
यज्ञार्थे राजभिर्दत्तान् महतो धनसञ्चयान् ॥ ११६॥

मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीम् ।
ये ते कीचकवेणूनां छायां रम्यामुपासते ॥ ११७॥

खषाश्शकाश्शतज्योत्स्नाः प्रवासा दीर्घवेणवः ।

---

1. क—स तान् ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

पशुपाश्च कुणिन्दाश्च तङ्कणाः परतङ्कणाः ॥ ११८॥
ते वै पिपीलिका नाम पुरा दत्तं पिपीलिके ।
जातरूपमयं द्रोणम् अहार्षुः पुञ्जतो मधु ॥ ११९॥
कृष्णवालांश्च चमरान् छुक्लवालांस्तथा परान् ।
हिमवत्पुष्पजं चैव स्वादु क्षौद्ररसं बहु ॥ १२०॥
उत्तरेभ्यः कुरुभ्यश्च व्यूढं माल्यं [1]महाम्बुभिः ।
उत्तरादपि कैलासाद् ओषधीश्च महाबलाः ॥ १२१॥
पार्वतीयान् बलींश्चान्यान् आहृत्य प्रणतास्स्थिताः ।
अजातशत्रवे राजन् द्वारि तिष्ठन्ति वारिताः ॥ १२२॥
ये पराध्यां हिमवतस् सूर्योदयगिरेरनु ।
एवंरूपास्समुद्रान्ते लौहित्यमभितश्च ये ॥ १२३॥
फलमूलाशना ये च किराताश्चर्मवाससः ।
चन्दनागरुमुख्यानि महार्हान् कम्बलांस्तथा ॥ १२४॥
चर्मरत्नसुवर्णानि गन्धानुच्चावचानि च ।
कैरातकीनामयुतं दासीनां च विशाम्पते ॥ १२५॥
आहृत्य रमणीयार्थान् दूरजान् मृगपक्षिणः ।
विचितं पर्वतेभ्यश्च हिरण्यं भूरिवर्चसम् ॥ १२६॥
बलिं च कृत्स्नमादाय द्वारि तिष्ठन्ति वारिताः ॥ १२७

1. क—महात्मभिः ।

[1]कालव्या दरदा दार्व्यश् शूरा [2]हैमकयास्तथा ।
औदुम्बरा दुर्विभागाः पौरवास्सह बाह्लिकैः ॥ १२८

काश्मीराः कुन्दमानाश्च गौरका हंसकास्तथा ।
शैब्यास्त्रिगर्ता यौधेया राजन्या मद्रकैस्सह ॥ १२९

वसातयस्समौलेयास् सह क्षुद्रकमालवैः ।
शौण्डिकाश्चोद्राश्चैव साल्वाश्चैव विशाम्पते ॥ १३०

अङ्गा [3]वङ्गाश्च [4]मनव अनवद्या गयैस्सह ।
स्वजातीयाश्श्रेणिमन्तश् श्रेयांसश्शस्त्रधारिणः ॥ १३१

आहार्षुः क्षत्रिया वित्तं शतशोऽजातशत्रवे ॥ १३१॥

वङ्गाः कलिङ्गपतयस् ताम्रलिप्ताश्च पुण्ड्रकाः ।
दुकूलं कौशिकं चैव पत्रोर्णं चैव भारत ॥ १३२॥

औपव्रता नृपास्तस्य ददुः प्रीतिं न चागमन् ॥ १३३
उच्यन्ते तत्र हि द्वास्थैर् बलिमादाय विष्ठिताः ॥ १३३॥

ईषादन्तान् हेमकक्ष्यान पद्मवर्णान् कुथास्तृतान् ।
पर्वतप्रतिमाञ्जातान् अभितः कम्बुकं सरः ॥ १३४॥
क्षमावतः कुलीनांश्च कुञ्जरान् सपरिच्छदान् ।

---

1. ख-ब--कापट्या । अ--कापर्या ददरा दार्वाश् ।
2. क--हेमकयास्तथा ।
3. घ--मङ्काश्च मरवा अनङ्गाद्या (ख) वङ्काश्च मरवा अनङ्गाद्या ।
4. क--पौण्ड्राश्च ।

दत्त्वैकैको दशशतं द्वारे सम्प्रविशन्ति च ॥ १३५॥

वैदेहकाश्च पुण्ड्राश्च [1]गौलेयास्ताम्रलिप्तकाः ।
मरुकाः काशिका दर्दा भौमेया नटनाटकाः ॥ १३६॥

कर्णाटाः कांस्यकुट्टाश्च पद्मजालासुतीवराः ।
दाक्षिणात्याः पुलिन्दाश्च शम्बराः कङ्कणाः खषाः ॥ १३७॥

बर्बरा यवनाश्चैव गर्गराभीरकास्तथा ।
पल्लवाऽशककारूशास् तुम्बराः काशिकास्तथा ॥ १३८॥

एते चान्ये च बहवो गणा दिग्भ्यस्समागताः ॥ १३९

अन्यैश्चोपहृतान्यत्र रत्नानि हि महात्मभिः ॥ १३९॥

समुद्रसारवैडूर्यान् मुक्ताऽशङ्खांस्तथैव च ।
शुभावर्ताञ्छुभाञ्छुक्तीस् सिंहलास्समुपाहरन् ॥ १४०॥

सम्भृतान् मणिचीरैश्च श्यामांस्ताम्रान्तलोचनान् ।
राजा चित्ररथो नाम गन्धर्वो वासवानुगः ॥ १४१॥

शतानि चत्वार्यददाद् द्विपानां देवजन्मनाम् ॥ १४२

तुम्बुरुस्तु प्रमुदितो गन्धर्वो वाजिनां शतम् ।
आम्रपत्रसवर्णानाम् अददाद्धेममालिनाम् ॥ १४३

कुणिन्दराजः कौरव्य अंशुकानां विशाम्पते ।
अददात् तानि रत्नानि शतशोऽथ सहस्रशः ॥ १४४

---

1. अ–गोलवा। ख-घ—गोमेया।

विराटेन तु मत्स्येन बलिर्मुख्यो निवेदितः ।
कुञ्जराणां सहस्रेण मत्तानां हेममालिनाम् ॥ १४५

वसुराष्ट्राद्वसुदानो राजा षट्त्रिंशतं गजान् ।
हयानां च सहस्रेण राजन् काञ्चनमालिनाम् ॥ १४६

जवसत्त्वोपपन्नानां वयस्थानां नराधिप ।
बलिं च कृत्स्नमादाय पाण्डवाय न्यवेदयत् ॥ १४७

यज्ञसेनेन दासीनां सहस्राणि चतुर्दश ।
दासानामयुतं चापि सदाराणां विशाम्पते ॥ १४८

पञ्चविंशतिसाहस्रम् अश्वानां हेममालिनाम् ।
बाह्लीकः प्रददौ राजन् पाण्डवाय महात्मने ॥ १४९

हययुक्तान् महाराज रथान् षड्विंशतिं गजान् ।
राज्यं च कृत्स्नं पार्थेभ्यो यज्ञार्थं वै निवेदितम् ॥ १५०

अन्तरात्मा महाराज [1]तस्माद्यन्मे न शाम्यति ।
अश्वेनेव युगं नद्धं विपरीतं हि दृश्यते ॥ १५१

गुणहीनतराश्चापि युष्माभिर्भरतर्षभ ।
कनीयांसोऽभिवर्धन्ते ज्येष्ठपुत्रोऽवसीदति ॥ १५२

वद मे कारणं भक्त्या कुन्तीपुत्रस्य धीमतः ।
सर्वे सुबलसम्पन्नाः क्षत्रिया मानगर्विताः ॥ १५३

1. क-ग-घ—तस्मान्मेऽद्य न । (ख) तस्मादद्य न ।

यज्ञे करप्रदास्तस्य ये च म्लेच्छेषु भूमिपाः ॥ १५३॥
अतीव ते प्रमुदिताः पाण्डुपुत्रा महारथाः ॥ १५४
अत्यर्थं ब्राह्मणाश्चैव क्षत्रिया युद्धनिर्जिताः ।
उपकर्तुं विशश्चैव शूद्राश्शुश्रूषवोऽपि च ॥ १५५
प्रीत्या च बहुमानाच्च अभ्यागच्छन् युधिष्ठिरम् ।
सर्वे म्लेच्छास्सर्ववर्णा आदिमध्यान्तजास्तथा ॥ १५६
नानादेशसमुत्थैश्च नानाजातिभिरागतैः ।
पर्याप्त इव लोकोऽयं युधिष्ठिरनिवेशने ॥ १५७
उच्चावचानुपग्राहान् राजभिः प्रहितान् बहून् ।
शत्रूणां पश्यतो दुःखान्मुमूर्षा मे ऽद्य जायते ॥ १५८
भृत्यास्तु ये पाण्डवानां तांस्ते वक्ष्यामि भारत ।
येषामामं च पक्कं च संविधत्ते युधिष्ठिरः ॥ १५९
अयुतं त्रीणि पद्मानि गजारोहास्ससादिनः ।
रथानामयुतं चैव पादाता बहवस्तथा ॥ १६०
[1]प्रणीयमाण आरम्भः पच्यमानस्तथैव च ।
विसृज्यमानश्चान्यत्र पुण्याहस्वन एव च ॥ १६१
नाभुक्तवन्तं नाहृष्टं नासुभिक्षं कथञ्चन ।
अपश्यं सर्ववर्णानां युधिष्ठिरमहाध्वरे ॥ १६२
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।

1. क-ख-ग-घ-ङ—प्रमीयमाण ।

त्रिंशद्दासीक एकैको यान् बिभर्ति युधिष्ठिरः ॥ १६३

परितुष्टाश्च तेऽस्याशीस् सदा शंसन्त्यरिक्षयम् ॥ १६३॥

दशान्यानि सहस्राणि यतीनामूर्ध्वरेतसाम् ।

भुञ्जते रुक्मपात्रेषु युधिष्ठिरनिवेशने ॥ १६४॥

भुक्ताभुक्तमिदं सर्वं सर्वमाकुब्जवामनम् ।

†अभुञ्जाना याज्ञसेनी प्रत्यवैक्षद्विशाम्पते ॥ १६५॥

द्वौ करं न प्रयच्छेतां कुन्तीपुत्राय भारत ।

वैवाहिकेन पाञ्चालास् सख्येनान्धकवृष्णयः* ॥ १६६॥

आर्यास्तु ये वै राजानस् सत्यसन्धा महाव्रताः ।

पर्याप्तविद्या वक्तारो [1]ह्यध्वरावभृथाप्लुताः ॥ १६७॥

प्रीतिमन्तो महात्मानो धर्मात्मानो यशस्विनः ।

मूर्धावसिक्तास्ते चैनं राजानस्समुपासते ॥ १६८॥

दक्षिणार्थं समानीता राजभिः कांस्यदोहनाः ।

अरण्ये बहुसाहस्रा याः [2]पश्याम्यत्र गास्तदा ॥ १६९॥

आजह्रुस्तत्र सत्कृत्य स्वयमुद्यम्य भारत ।

अभिषेकार्थमव्यग्रा भाण्डमुच्चावचं नृपाः ॥ १७०॥

बाह्लीको रथमाहार्षीज् जाम्बूनदपरिष्कृतम् ।

---

† भुञ्जानानित्यनन्वितम् ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. क-ख-घ—वेदान्ता ।

2. क-ख-घ—पश्यामो मृगास्तदा ।

सुदक्षिणस्तु युयुजे श्वेतैः काम्भोजजैर्हयैः ॥ १७१॥

सुनीथोऽप्रतिमस्तस्य सुनीथस्यात्मजस्तथा ।
[1]ध्वजं चेदिपतिः क्षिप्रम् अहार्षीत् स्वयमुद्यतम् ॥ १७२॥

दाक्षिणात्यस्सन्नहनं स्रगुष्णीषे तु मागधः ।
वसुदानो महेष्वासो गजेन्द्रं षष्टिहायनम् ॥ १७३॥

मत्स्योऽक्षानश्वबद्धान वै एकलव्य उपानहौ ।
आवन्त्यस्त्वभिषेकार्थम् अपो बहुविधास्तथा ॥ १७४॥

चेकितान उपासङ्गं धनुः काश्य उपाहरत् ।
असिं तु सत्सरुं शल्यश् शैक्यं काञ्चनभूषणम् ॥ १७५॥

[2]अनुजग्मुर्महात्मानम् ऋत्विजो भूरिदक्षिणाः ।
महेन्द्रमिव देवेन्द्रं दिवि सप्तर्षयो यथा ॥ १७६॥

अधारयच्छत्रमस्य सात्यकिस्सत्यविक्रमः ।
धनञ्जयश्च व्यजने भीमसेनश्च पाण्डवः ॥ १७७॥

उपागृह्णाद्यथेन्द्राय पुरा कल्पे प्रजापतिः ।
तदस्मै शङ्खमाहार्षीद् वरुणः कलशोदधिः ॥ १७८॥

---

1. ग–ङ—कोशयोः अर्धद्वयं नास्ति ।
2. * क—अभ्यषिञ्चत् ततो धौम्यो व्यासश्च सुमहातपाः ।
नारदं च पुरस्कृत्य देवलं चासितं मुनिम् ॥
प्रीतिमन्त उपातिष्ठन्नभिषेकं महर्षयः ।
जामदग्न्येन सहितास् तथाऽन्ये वेदपारगाः ॥[अधिकः पाठः]

सप्तनिष्कसहस्रेण सुकृतं विश्वकर्मणा ।
तेनाभिषिक्तः कृष्णेन तत्र मे कश्मलोऽभवत् ॥ १७९॥
[1]जलार्थं तत्र राजेन्द्र घटानादाय राक्षसाः ।
गच्छन्ति पूर्वादपरं समुद्रं चापि दक्षिणम् ॥ १८०॥
उत्तरं तु न गच्छन्ति विना तात पतत्रिभिः ॥ १८१
तत्र स्म दध्मुश्शतशश् शङ्खान् मङ्गल्यकारणात् ।
प्राणदन्त समाध्मातास् ततो रोमाणि मेऽहृषन् ॥ १८२
प्रणता भूमिपाश्चैव पेतुर्हीनास्स्वतेजसा ॥ १८२॥
धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवोऽष्टमः ।
सत्वस्थाश्शौर्यसम्पन्ना ह्यन्योन्यप्रियकारिणः ॥ १८३॥
विसंज्ञान् भूमिपान् दृष्ट्वा मां स्म ते प्राहसंस्तदा ॥ १८४
ततः प्रहृष्टो बीभत्सुः प्रादाद्धेमविषाणिनाम् ।
शतान्यनडुहां पञ्च द्विजमुख्येषु भारत ॥ १८५
न चैवं वीर्यवानासीद् यौवनाश्वो मनुर्न च ।
न च राजा पृथुर्वैन्यो न चाप्यासीद्भगीरथः ॥ १८६
यथाऽतिमात्रं कौन्तेयश् श्रिया परमया युतः ॥ १८६॥
राजसूयमवाप्यैव हरिश्चन्द्र इव प्रभुः ॥ १८७
एतां दृष्ट्वा श्रियं पार्थे हरिश्चन्द्रे यथा विभो ।
कथं नु जीवितं श्रेयो मम पश्यसि भारत ॥ १८८

1. अ-क-ग-क—कोशेषु इदमर्धं नास्ति ।

[1]अश्वेनेव युगं नद्धं विपर्यस्तं नराधिप ॥ १८८॥

कनीयांसोऽभिवर्धन्ते ज्येष्ठा हीयन्ति भारत ॥ १८९

एवं दृष्ट्वा नाभिविन्दामि शान्तिं
परीक्षमाणोऽपि कुरुप्रवीर ।
तेनाहमेवं कृशतां गतश्च
विवर्णतां चैव सशोकतां च ॥ १९०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

॥ २७ ॥ द्यूतपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[अस्मिन्नध्याये १९० श्लोकाः]

---

## ॥ त्रिपञ्चाशोऽध्यायः ॥

दुर्योधनं प्रति धृतराष्ट्रेण पाण्डवेषु द्वेषनिषेधनम् ॥ १ ॥ दुर्योधनेन प्रतिकूलभाषणम् ॥ २ ॥

---

धृतराष्ट्रः—

त्वं वै श्रेष्ठश्श्रैष्ठिनेयः पुत्रो मा पाण्डवान् द्विषः ।

द्वेषादसुखमादत्ते यथैव निधनं तथा ॥ १

व्युत्पन्नं च समानार्थं तुल्यमित्रं युधिष्ठिरम् ।

अद्विषन्तं कथं द्विष्यात् त्वादृशो भरतर्षभ ॥ २

---

1. क-ग-ङ—अन्धेनेव ।

तुल्याभिजनवीर्यैश्च कथं भ्रातुश्श्रियं नृप ।
पुत्र कामयसे मोहान्मैवं भूश्शाम्य साध्विह ॥ ३

अथ यज्ञविभूतिं तां काङ्क्षसे भरतर्षभ ।
ऋत्विजस्तव तन्वन्तु सप्ततन्तुं महाध्वरम् ॥ ४

आहरिष्यन्ति राजानस् तवापि विपुलं धनम् ।
प्रीत्या च बहुमानाच्च रत्नान्याभरणानि च ॥ ५

[1]मही कामदुघा सा हि वीरपत्नीति चोच्यते ।
[2]तथा वीर्याश्रिता भूमिस् तनुते हि मनोरथम् ॥ ६
तवाप्यस्ति हि चेद्वीर्यं भोक्ष्यसे हि महीमिमाम् ॥ ६॥

अनर्थाचरणं तात परस्वहरणं भृशम् ।
उभयोर्लोकयोर्दुःखं सुहृदामवमाननम् ॥ ७॥
सुसन्तुष्टस्स्वकर्मस्थो यस्स वै सुखमेधते ॥ ८

अव्यापारः परार्थेषु [3]नित्ययोगस्स्वकर्मसु ।
उद्यमो रक्षणे स्वेषाम् एतद्विभवलक्षणम् ॥ ९
विपत्तिष्वव्यथो दक्षो नित्यमुत्थानवान् यतः ।
अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ॥ १०

---

1. क—अनर्थाचरितं तात परस्वहरणं शुभम् ।
स्वसन्तुष्टस्स्वकर्मस्थो यस्स वै सुखमेधते ॥ [अधिकः पाठः]
2. क-ख-ग-घ-ङ—तथा वीरस्य भार्या यास् त इमे हि कलत्रपाः ।
3. अ-क—नित्योद्योग. ।

अन्तर्वेद्यां ददद्वित्तं कामाननुभवन् प्रियान् ।
स्त्रीभिः क्रीडन् निरातङ्कः प्रशाम्य भरतर्षभ* ॥ ११

दुर्योधनः—

जानन् वै मोहयसि मां नावि नौरिव सम्मता ।
स्वार्थे किं नावधानं ते उताहो द्वेष्टि मां भवान् ॥ १२

[1]न सन्तीमे धार्तराष्ट्रा येषां त्वमनुशासिता ।
भविष्यदर्थमाख्यासि तदात्वं कृत्यमात्मनः ॥ १३

परप्रणेयोऽग्रणीश्च यश्च मार्गात् प्रमुह्यति ।
पन्थानमनुगच्छेयुः कथमस्य पदानुगाः ॥ १४

राजन् परिगतप्रज्ञो वृद्धसेवी जितेन्द्रियः ।
प्रतिपन्नान् स्वकार्येषु सम्मोहयसि नो भृशम् ॥ १५

लोकवृत्ताद्राजवृत्तम् अन्यदाह बृहस्पतिः ।
तस्माद्राज्ञाऽप्रमत्तेन स्वार्थश्चिन्त्योऽप्रमादतः ॥ १६

क्षत्रियस्य महाराज जये वृत्तिस्समाहिता ।
स वै धर्मोऽस्त्वधर्मो वा स्वधर्मो भरतर्षभ ॥ १७

प्रकालयेद्दिशस्सर्वाः प्रतोदेनेव सारथिः ।
प्रत्यमित्रां श्रियं दीप्तां जिहीर्षुर्भरतर्षभ ॥ १८

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

1. क—हसन्तीमे । ख—न सन्ति मे । ङ—न सन्ति ते ।

प्रच्छन्नो वा प्रकाशो वा यो योगो रिपुबाधनः ।
तद्वै शस्त्रं शस्त्रविदां न शस्त्रं भेदनं स्मृतम् ॥ १९
असन्तोषश्श्रियो मूलं तस्मात् तं [1]कथयाम्यहम् ।
[2]समुच्छ्र्ये यो यतते स राजन् परमो नयी ॥ २०
ममत्वं च न कर्तव्यम् ऐश्वर्ये वा धनेषु वा ।
पूर्वावाप्तं हरन्त्यन्यो राजधर्मं हि तं विदुः ॥ २१
अद्रोहे समयं कृत्वा चिच्छेद नमुचेश्शिरः ।
शक्रेण विहिता तात रिपौ वृत्तिस्सनातनी ॥ २२
द्वावेव ग्रसते भूमिस् सर्पौ बिलशयाविव ।
राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ २३
नास्ति वै जातितश्शत्रुः पुरुषस्य विशाम्पते ।
येन साधारणी वृत्तिस् स शत्रुर्नेतरो जनः ॥ २४
शत्रुपक्षसमृद्धिं तां यो मोहात् समुपेक्षते ।
आप्यायित इव व्याधिस् तस्य मूलं छिनत्ति सः ॥ २५
अल्पोऽपि ह्यरिरत्यन्तं वर्धमानपराक्रमः ।
वल्मीको मूलज इव ग्रसते वृक्षमन्तिकात् ॥ २६
आजमीढ रिपोर्लक्ष्मीर् मा ते रोचिष्ट भारत ।
एष भारस्सत्ववताम् अरेश्शिरसि तिष्ठताम् ॥ २७

1. अ-क-ख-घ—कामयाम्यहम् ।
2. अ—कोशे इदमर्धक्षयं नास्ति ।

जन्मवृद्धि[1] मिवार्याणां यो वृद्धिमभिकाङ्क्षते ।
एधते ज्ञातिषु स वै सद्यो वृद्धिर्हि विक्रमात् ॥ २८
सम्प्राप्य पाण्डवैश्वर्यं संशयो मे भविष्यति ।
अवाप्स्ये वा श्रियं तां हि शये वा निहतो युधि ॥ २९
अनादृतस्य किं मेऽद्य जीवितेन विशाम्पते ।
वर्धन्ते पाण्डवा नित्यं वयं त्वस्थिरवृद्धयः ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ २७ ॥ द्यूतपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ३० श्लोकाः]

---

## ॥ चतुःपञ्चाशोऽध्यायः ॥

दुर्योधनं प्रति शकुनिना द्यूताय प्रोत्साहनम् ॥ १॥ धृतराष्ट्रेण द्यूतार्थे पाण्डवानयनाय विदुरप्रेषणम् ॥ २ ॥ पाण्डवानां द्यूतसभाप्रवेशः ॥ ३ ॥

---

शकुनिः—

यां त्वमेतां श्रियं दृष्ट्वा पाण्डुपुत्रे युधिष्ठिरे ।
तप्यसे तां हरिष्यामि द्यूतेनाहूयतां परम् ॥ १
अगत्वा संशयमहम् अयुद्ध्वा च चमूमुखे ।
अक्षान् क्षिपन्नक्षतस्सन् विद्वानविदुषो जये ॥ २

---

1 अ-क-ख-ग-घ-ङ—कोशेषु—मिवारीणां ।
लक्षालङ्कारटीकायाम्—मिवार्याणाम् ।

ग्लहान् धनूंषि मे विद्धि शरानक्षांश्च भारत ।
अक्षाणां हृदयं मे ज्यां रथं विद्धि ममास्तरम् ॥ ३

दुर्योधनः—
अयमुत्सहते राजञ् छ्रियमाहर्तुमक्षवित् ।
द्यूतेन पाण्डुपुत्रेभ्यस् तत् तुभ्यं तात रोचताम् ॥ ४

धृतराष्ट्रः—
स्थितोऽस्मि शासने भ्रातुर् विदुरस्य महात्मनः ।
तेन सङ्गम्य वेत्स्यामि मन्त्रस्यास्य विनिश्चयम् ॥ ५

दुर्योधनः—
कृष्णादभ्यधिकस्सोऽपि बुद्ध्या क्षत्ता विशाम्पते ।
केवलं धर्ममेवाह न तद्विजयसाधनम् ॥ ६

नयश्च धर्मतोपेतम् तथैव भरतर्षभ ।
तस्माद्विनयतो जेतुस् तावुभौ च विरोधिनौ ॥ ७

विहानिष्यति ते बुद्धिं विदुरो मुक्तसंशयः ।
पाण्डवानां हिते युक्तो न तथा मम कौरव ॥ ८

नारभेत् परसामर्थ्यात् पुरुषः कार्यमात्मनः ।
मतिसाम्यं द्वयोर्नास्ति कार्येषु कुरुनन्दन ॥ ९
भयं परिहरन् मन्द आत्मानं परिपालयन् ।
[1]वर्षासु क्लिन्नपटवन् तिष्ठन्नेवावसीदति ॥ १०

1. अ—वर्षासु काष्ठवजीर्णस् तिष्ठन्नेवावसीदति । क-ख—घटवत् ।

न व्याधयो नापि यमश् श्रेयःप्राप्तिं प्रतीक्षते ।
यावदेव भवेन् कल्यस् तावच्छ्रेयस्समाचरेत् ॥ ११

धृतराष्ट्रः—
सर्वथा पुत्र बलिभिर् विग्रहं तैर्न रोचये ।
वैरं विनाशं सृजति तद्वै शस्त्रमनायसम् ॥ १२

अनर्थमर्थं मन्यसे राजपुत्र
सङ्ग्रन्थितं कलहं चातिघोरम् ।
तद्वै प्रवृत्तं तु यथाकथञ्चित्
विमोक्षयेच्चाप्यसिस्मायकांश्च ॥ १३

दुर्योधनः—
द्यूते पुराणैर्व्यवहारः प्रणीतस्
तत्रात्ययो नास्ति न सम्प्रहारः ।
तद्रोचतां ते शकुनेर्वाक्यमद्य
सभां क्षिप्रं त्वमिहाज्ञापयस्व ॥ १४

स्वर्गद्वारं दीव्यतां नो विशिष्टं
तद्वर्तिनां चापि तथैव युक्तम् ।
भवेदेवं ह्यात्मना तुल्यमेव
दुरोदरं पाण्डवैस्त्वं कुरुष्व ॥ १५

धृतराष्ट्रः—
वाक्यं न मे रोचते यत् त्वयोक्तं
यन् ते प्रियं तत् क्रियतां नरेन्द्र ।

पश्चात्तेन् त्वं तप्यसे दुस्तरं च
वाक्यं न हीदं भावि चाद्य प्रयुक्तम् ॥ १६
दृष्टं ह्येतद्विदुरेणैव सर्वं
प्राप्तं ह्येतद्बुद्धिविद्यान्तगेन ।
[1]तदेवैतदयशस्य ह्युपैति
महद्भयं क्षत्रियबीजघाति ॥ १७

वैशम्पायनः—
इत्येवमुक्त्वा धृतराष्ट्रो मनीषी
दैवं मत्वा परमं दुस्तरं च ।
शशासोच्चैः पुरुषान पुत्रवाक्ये
स्थितो राजा दैवसम्मूढचेताः ॥ १८
सहस्रस्थूणां हेमवैडूर्यचित्रां
शतद्वारां स्फाटिक[2]तोरणाग्राम ।
सभामग्र्यां क्रोशमात्रायतां मे
एतद्विस्तारामाशु कुर्वन्तु युक्ताः ॥ १९
श्रुत्वा तस्य त्वरिता निर्विशङ्काः
प्राज्ञा दक्षास्तां तथा चक्रुराशु ।
सर्वद्रव्याण्युपजह्रुस्सभायां
सहस्रश[3]श्शिल्पिनां चापि युक्ताः ॥ २०

1. क-ख-ग-घ-ङ—तदेव तावदवश्यमभ्युपैति।
2. क—तोरणाढ्याम्। ख-घ—तोरणाग्र्याम्।
3. अ—श्शिल्पिनश्चापि युक्ताम्। क-ख-ग-घ—श्शिल्पिनश्चापि।

कालेनाल्पेनाथ निष्ठां गतां तां
सभां रम्यां बहुरत्नां विचित्राम् ।
चित्रैर्हैमैरासनैरभ्युपेताम्
आचख्युस्ते तस्य राज्ञः प्रतीताः ॥ २१
ततो विद्वान् विदुरं मन्त्रिमुख्यम्
उवाचेदं धृतराष्ट्रो नरेन्द्रः ।
युधिष्ठिरं राजपुत्रं हि गत्वा
मद्वाक्येन क्षिप्रमिहानयस्व ॥ २२
सभेयं मे बहुरत्ना विचित्रा
शय्यासनैरुपपन्ना महार्हैः ।
सा दृश्यतां भ्रातृभिस्सार्धमेत्य
सुहृद्द्यूतं वर्ततामत्र चैत्य ॥ २३

मतमाज्ञाय पुत्रस्य धृतराष्ट्रः प्रतापवान् ।
मत्वा च दुस्तरं दैवम् एतद्राजा चकार ह ॥ २४
अन्यायेन तथोक्तस्तु विदुरो विदुषां वरः ।
नाभ्यनन्दद्वचो भ्रातुर् वचनं चेदमब्रवीत् ॥ २५

विदुरः—

[1]नाहं नन्दे नृपते प्रैषमेतं
मैवं कृथाः कुलनाशाद्बिभेमि ।

1. अ-क—नाभिनन्दामि ।

पुत्रैर्भिन्नैः कलहस्ते ध्रुवस्स्याद्
एतच्छङ्के द्यूतकृते नरेन्द्र ॥ २६

धृतराष्ट्रः—

नेह क्षत्तः कलहस्तस्य वै मे
न चेद्दैवं प्रतिलोमं भविष्यत् ।
धात्रा तु दिष्टस्य वशे किलेदं
सर्वं जगच्चेष्टते न स्वतन्त्रम् ॥ २७

तदद्य विदुर प्राप्य राजानं मम शासनात् ।
क्षिप्रमानय दुर्धर्षं कुन्तीपुत्रं युधिष्ठिरम्* ॥ २८

वैशम्पायनः—

ततः प्रायाद्विदुरोऽश्वैरुदारैर्
महाजवैर्बलिभिस्साधु दान्तैः ।
बलान्नियुक्तो धृतराष्ट्रेण राज्ञा
मनीषिणां पाण्डवानां सकाशे ॥ २९

सोऽतिपत्य तदध्वानम् आसाद्य नृपतेः पुरम् ।
प्रविवेश महाबुद्धिः पूज्यमानो द्विजातिभिः ॥ ३०

स राजगृहमासाद्य कुबेरभवनोपमम् ।
अभ्यागच्छत धर्मात्मा धर्मराजं युधिष्ठिरम् ॥ ३१

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

स वै राजा सत्यधृतिर्महात्मा
ह्यजातशत्रुर्विदुरं यथावत् ।
पूजापूर्वं प्रतिगृह्याजमीढस्
ततोऽपृच्छद्धृतराष्ट्रं सपुत्रम् ॥ ३२

युधिष्ठिरः—
विज्ञायते ते मनसो[1]ऽप्रहर्षः
कच्चित् क्षत्तः कुशलेनागतोऽसि ।
कच्चित् पुत्रास्स्थविरस्यानुलोमा
वशानुगाश्चापि विशोऽपि कच्चित् ॥ ३३

विदुरः—
राजा महात्मा कुशली सपुत्र
आस्ते वृतो ज्ञातिभिरिन्द्रकल्पैः ।
प्रीतो राजन् पुत्रगणैर्विनीतैर्
विशोक एवात्मरतिर्दृढात्मा ॥ ३४
इदं त्वा कुरुराजो ह्युवाच
पूर्वं पृष्ट्वा कुशलं चाव्ययं च ।
इयं सभा त्वत्सभातुल्यरूपा
भ्रातॄणां ते पश्यतामेत्य पुत्र ॥ ३५
समागम्य भ्रातृभिः पार्थ तस्यां
सुहृद्द्यूतं क्रियतां रम्यतां च ।

1. क-ख—न हर्षः ।

प्रीयामहे भवतस्सङ्गमेन
सभागताः कुरवश्चापि सर्वे ॥ ३६

दुरोदरा विहिता ये तु तत्र
महात्मना धृतराष्ट्रेण राज्ञा ।
तान् द्रक्ष्यसे कितवान् सन्निविष्टान्
इत्यागतोऽहं नृपते तान्जुषस्व ॥ ३७

युधिष्ठिरः—

द्यूते क्षत्तः कलहो विद्यते नः
को वै द्यूतं रोचते बुध्यमानः ।
किं वा भवान् मन्यते युक्तरूपं
भवद्वाक्ये सर्व एव स्थितास्स्मः ॥ ३८

विदुरः—

जानाम्यहं द्यूतमनर्थमूलं
कृतश्च यत्नोऽस्य मया निवारणे ।
राजा च मां प्राहिणोत् त्वत्सकाशं
श्रुत्वा विद्वञ्श्रेय इहाचरस्व ॥ ३९

युधिष्ठिरः—

के [1]त्वान्ये कितवा दीव्यमाना
विना राज्ञो धृतराष्ट्रस्य पुत्रैः ।

---

1. अ-ख-ग—त्वासन् ।

प्रच्छामि त्वां विदुर ब्रूहि नस्तान्
यैर्दीव्यामश्शतशस्सन्निपत्य ॥ ४०

विदुरः—

गान्धारराजश्शकुनिर्विशाम्पते
राजाऽतिदेवी कृतहस्तो मताक्षः ।
विविंशतिश्चित्रसेनश्च राजा
सत्यव्रतः पुरुमित्रो जयश्च ॥ ४१

युधिष्ठिरः—

महामायाः कितवास्सन्निविष्टा
मायोपधा देवितारोऽत्र सन्ति ।
धात्रा तु दिष्टस्य वशे किलेदं
न देवनं कितवैरद्य तैर्मे ॥ ४२
नाहं राज्ञो धृतराष्ट्रस्य शासना-
[1]न्न गन्तुमिच्छामि कवे दुरोदरम् ।
इष्टो हि पुत्रस्य पिता सदैव
तदस्मि कर्ता विदुरात्थ मां यथा ॥ ४३
न चाकामश्शकुनिना देविताऽहं
न [2]ह्यात्मना धृष्णुराह्वयिता सभायाम् ।

1. क-ख—ह्यागन्तुमर्हामि । ब—ह्यागन्तुमिच्छामि ।
2. अ-क—ह्यात्मा धृष्णु ।

आहूतोऽहं न निवर्ते कदाचित्
तथा हीदं शाश्वतं वै व्रतं मे ॥ ४४

वैशम्पायनः—

[1]एवमुक्त्वा विदुरं धर्मराजः
प्रायाणिकं सर्वमाज्ञाप्य नूर्णम् ।
प्रायाच्छ्वोभूते सगणस्सानुयात्रस्
सह स्त्रीभिर्द्रौपदीमादिकृत्वा ॥ ४५

दैवं हि प्रज्ञां मुष्णाति तेजश्चक्षुरिवापतत् ।
धातुश्च वशमन्वेति पाशैरिव करी स्थितः ॥ ४६

इत्युक्त्वा प्रययौ राजा सह क्षत्त्रा युधिष्ठिरः ।
अमृष्यमाणस्तस्याथ समाह्वानमरिन्दमः ॥ ४७

बाह्लिकेन रथं यत्तम् आस्थाय परवीरहा ।
परिच्छिन्नो ययौ पार्थो भ्रातृभिः परिवारितः ॥ ४८

राजश्रिया दीप्यमानो ययौ ब्रह्मपुरस्सरः ।
सन्दिदेश ततः प्रेष्यान् नागाह्वयगतिं प्रति ॥ ४९
ततस्ते नृपशार्दूलाश् चक्रुर्वै नृपशासनम् ॥ ४९॥

ततो राजा महातेजास् सधौम्यस्सपरिच्छदः ।
ब्राह्मणैस्स्वस्ति वाच्यैव निर्ययौ मन्दिराद्बहिः ॥ *५०॥

1. ग-ङ—कोशयोः अर्धाष्टकं नास्ति ।

ब्राह्मणेभ्यो धनं दत्त्वा गत्यर्थं स यथाविधि ।
अन्येभ्यस्स तु दत्त्वाऽर्थं गन्तुमेवोपचक्रमे ॥ ५१॥
सर्वलक्षणसम्पन्नं [1]राजार्हं सपरिच्छदम् ।
तमारुह्य महाराजो गजेन्द्रं षष्टिहायनम् ॥ ५२॥
निषसाद गजस्कन्धे काञ्चने परमासने ।
हारी किरीटी हेमाभस् सर्वाभरणभूषितः ॥ ५३॥
रराज राजन् पार्थो वै परया नृपशोभया ।
रुक्मवेदिगतः प्राज्यो ज्वलन्निव हुताशनः ॥ ५४॥
ततो जगाम राजा स प्रहृष्टनरवाहनः ।
रथघोषेण महता पूरयन् वै नभस्स्थलम् ॥ ५५॥
संस्तूयमानस्स्तुतिभिस् सूतमागधवन्दिभिः ।
महासैन्येन संवीतो यथाऽऽदित्यस्स्वरश्मिभिः ॥ ५६॥
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
बभौ युधिष्ठिरो राजा पौर्णमास्यामिवोडुराट् ॥ ५७॥
उभयोः पक्षयोश्चैव गजाश्वैः कुरुनन्दनः ।
राजश्रिया दीप्यमानो ययौ ब्रह्मपुरस्सरः ॥ ५८॥
चामरैर्हेमदण्डैश्च धूयमानस्समन्ततः ।
जयाशिषः प्रहृष्टानां नराणां पथि पाण्डवः ॥ ५९॥

---

1. ङ—राजहंसपरिच्छदम् ।

प्रत्यगृह्णाद्यथान्यायं यथावद्भरतर्षभः ॥ ६०
अपरे कुरुराजानं पथि यान्तं समाहिताः ।
स्तुवन्ति सततं सौख्यान्मृगपक्षिस्वनैर्नराः ॥ ६१
तथैव सैनिका राजन् राजानमनुयान्ति ये ।
तेषां हलहलाशब्दो दिवं स्तब्ध्वा प्रतिष्ठितः ॥ ६२
नृपस्याग्रे ययौ भीमो गजस्कन्धगतो बली ॥ ६२॥
उभौ [1]पार्श्वे गजौ राज्ञस् सतल्पौ वै सुकल्पितौ ।
अधिरूढौ यमौ चापि जग्मतुर्भरतर्षभ ॥ ६३॥
शोभयन्तौ महासैन्यं तावुभौ रूपशालिनौ ॥ ६४
पृष्ठतोऽनुययौ धीमान् पार्थश्शस्त्रभृतां वरः ।
श्वेताश्वो गाण्डिवं गृह्य अग्निदत्तं रथं गतः ॥ ६५
सैन्यमध्ये ययौ राजन् कुरुराजो युधिष्ठिरः ॥ ६५॥
द्रौपदीप्रमुखा नार्यस् सानुगास्सपरिच्छदाः
आरुह्य ता विचित्राणि शिबिकानां शतानि च ॥ ६६॥
महत्या सेनया राजन्नग्रे राज्ञो ययुस्तदा ॥ ६७
समृद्धनरनागाश्वं सपताकरथध्वजम् ।
समृद्धरथनिस्त्रिंशं पत्तिभिर्घोषितस्वनम् ॥ ६८
शङ्खदुन्दुभितालानां वेणुवीणानुनादितम् ।

---

1. क—पार्श्वगतौ राज्ञः सदश्वौ । ख-घ—पार्श्वगतौ राज्ञः सतल्पौ ।

शुशुभे पाण्डवं सैन्यं [1]प्रयातं तत् तदा नृप ॥ ६९
यथा कुबेरो लङ्कायां पुरा चात्यन्तशोभया ।
महत्या सेनया सार्धं गुरुमित्रं स गच्छति ॥ ७०
तथा ययौ स पार्थोऽपि महत्या च विभूतिना ।
सुसमृद्धेन सैन्येन यथा वैश्रवणस्तथा ॥ ७१
स सरांसि नदीश्चैव वनान्युपवनानि च ।
अत्यक्रामन्महाराज पुरीं चाभ्यवपद्यत ॥ ७२
हस्तीपुरसमीपे तु कुरुराजो युधिष्ठिरः ।
चक्रे निवेशनं तत्र ततस्स सहसैनिकः ॥ ७३
शिवे देशे समे चैव न्यवसत् पाण्डवस्तदा ॥ ७३॥
ततो राजन् समाहूय शोकविह्वलया गिरा ।
एतद्वाक्यं च सर्वस्वं धृतराष्ट्रचिकीर्षितम् ॥ ७४॥
आचचक्षे यथावृत्तं विदुरोऽथ नृपस्य ह ॥ ७५
श्रुत्वा तु भाषितं तेन धर्मराजोऽब्रवीदिदम् ॥ ७५॥

युधिष्ठिरः—

[2]मर्पयामि ह्यहं क्षत्तस् समाह्वानं व्रतेन मे ।
स्वस्त्यस्तु लोके विप्राणां प्रजानां चैव सर्वथा ॥ ७६॥

वैशम्पायनः—

इत्युक्त्वा प्रययौ राजा पुरं नागाह्वयं ततः ॥ ७७

---

1. क—प्रयास्यत्ततदा। ख-घ—अपयान्तं तदा।
2. क-ख-घ—न मर्षयाम्यहं क्षत्तः समाह्वानं वृतेन मे।

[1]धृतराष्ट्रेण चाहूतः कालस्य समयेन च ।
स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ ॥ ७८
समेयाय च धर्मात्मा धृतराष्ट्रेण पाण्डवः ॥ ७८॥
ततो द्रोणेन भीष्मेण कर्णेन च कृपेण च ।
समेयाय यथान्यायं द्रौणिना च विभुस्सह ॥ ७९॥
समेयाय यथान्यायं सोमदत्तेन चाभिभूः ।
दुर्योधनेन सभ्रात्रा सौवलेन च वीर्यवान् ॥ ८०॥
ये चान्ये तत्र राजानः पूर्वमेव समागताः ।
[2]दुश्शासनेन कौन्तेयस् सर्वैर्भ्रातृभिरेव च ॥ ८१॥
जयद्रथेन हि तथा कुरुभिश्चापि सर्वशः ।
[3]समेत्य कुरुभिस्सर्वैर् यथान्यायमरिन्दमः ॥ ८२॥
ततस्सर्वैर्महाबाहुर् भ्रातृभिः परिवारितः ।
प्रविवेश गृहं राज्ञो धृतराष्ट्रस्य सम्मतम् ॥ ८३॥
ददर्श तत्र गान्धारीं देवीं पतिमनुव्रताम् ।
स्नुषाभिस्संवृतां शश्वत् ताराभिरिव रोहिणीम् ॥ ८४॥
अभिवाद्य च गान्धारीं तया च प्रतिनन्दितः ।
ददर्श पितरं वृद्धं प्रज्ञाचक्षुषमीश्वरम् ॥ ८५॥

---

1. क-ख-ग-घ-ङ—कोशेषु इदमर्धं नास्ति ।
2. अ—कोशे इदमर्धं नास्ति । 3. अ—कोशे इदमर्धं नास्ति ।

राज्ञा मूर्धन्युपाघ्रातास् ते च कौरवनन्दनाः ।
चत्वारः पाण्डवा राजन् भीमसेनपुरोगमाः ॥ ८६॥

ततो हर्षस्समभवत् कौरवाणां विशाम्पते ।
तान् दृष्ट्वा पुरुषव्याघ्रान् पाण्डवान् प्रियदर्शनान् ॥ ८७॥

विविशुस्तेऽभ्यनुज्ञाता रत्नवन्ति गृहाण्यथ ।
विविशुस्ता उपायाता द्रौपदीप्रमुखास्स्त्रियः ॥ ८८॥

याज्ञसेन्याः परां वृद्धिं दृष्ट्वा प्रज्वलितामिव ।
स्नुषास्ता धृतराष्ट्रस्य नातिप्रमनसोऽभवन् ॥ ८९॥

ततस्ते पुरुषव्याघ्रा गत्वा स्त्रीभिश्च संविदम् ।
कृत्वा व्यायामपूर्वाणि कृत्यानि प्रतिकर्म च ॥ ९०॥

ततः कृताह्निकास्सर्वे दिव्यचन्दनरूषिताः ।
कल्याणमनसस्सर्वे ब्राह्मणान् स्वस्ति वाच्य च ॥ ९१॥

मनोज्ञमशनं भुक्त्वा विविशु[1]श्शयनान्यथ ।
उपगीयमाना नारीभिर् अस्वपन् कुरुनन्दनाः ॥ ९२॥

जगाम तेषां सा रात्रिः पुण्या रतिविहारिणाम् ।
संस्तूयमाना विश्रान्ताः काले निद्रामथात्यजन् ॥ ९३॥

1. क-ख—शरणान्यथ ।

सुखोषितास्ते रजनीं प्रातस्सर्वे कृताह्निकाः ।
सभां रम्यां प्रविविशुः कितवैराभिसंवृताम् ॥ ९४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

॥ २७ ॥ द्यूतपर्वणि षष्ठोऽध्यायः॥ ६ ॥

[अस्मिन्नध्याये ९४॥ श्लोकाः]

---

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

शकुनियुधिष्ठिरयोः संवादः ॥ १ द्यूतनिर्धारणम् ॥ २ ॥

---

शकुनिः—

उपस्तीर्णा सभा राजन् वयं त्वेते कृतक्षणाः ।
अक्षानुप्त्वा देवनस्य समयोऽस्तु युधिष्टिर ॥ १

युधिष्ठिरः—

[1]निकृत्या देवनं पापं न क्षात्रोऽत्र पराक्रमः ।
न च नीतिर्ध्रुवा राजन् किं त्वं द्यूतं प्रशंससि ॥ २

न च [2]मायां प्रशंसन्ति कृतिनः कितवस्य हि ।
शकुने मैव नो जैपीर् अमार्गेण नृशंसवत् ॥ ३

1. ख-क—निकृतिर्देवनं ।
2. ग-ङ—मानं ।

शकुनिः—

योऽन्वेति सख्यं निकृतौ विधिज्ञश्
चेष्टास्वखिन्नं कितवोऽक्षजासु ।
महामतिर्यो विदधाति द्यूतं
स वै सर्वं लभते प्रक्रियासु ॥ ४

अक्षग्लहस्सोऽभिभवेत् परं तु
तेनैव कालो भवतीदमात्थ ।
दीव्यावहे पार्थिव मा विशङ्कां
कुरुष्व पाणं च चिरं च मा कृथाः ॥ ५

युधिष्ठिरः—

एवमाहासितो राजन् देवलो मुनिसत्तमः ।
इमानि लोकद्वाराणि यो वै सञ्चरते सदा ॥ ६

इदं वै देवनं पापं मायया कितवैस्सह ।
धर्मेण तु जयो युद्धे तत् परं न तु देवनम् ॥ ७

[1]नार्या म्लेच्छन्ति भाषाभिर् मायया न चरन्त्युत ।
अजिह्ममशठं युद्धम् एतत् सत्पुरुषव्रतम् ॥ ८

शक्तितो ब्राह्मणार्थाय शिक्षितुं प्रयतामहे ।

---

1 अ—आर्याम्लृधन्ति भाषाभिर्मायया विचरन्त्युत ।
क—आर्या मिच्छन्ति वासोभिर्मायया विचरन्त्युत ।
ख-घ—नार्यो दीव्यन्ति भाषाभिः ।

तद्वै विद्वन् माऽतिदेवीर् मा जैषीश्शकुने परम् ॥ ९

नाहं निकृत्या कामेयं सुखान्युत धनानि वा ।
[1]कितवासाद्यनिकृतेर् वृत्तमेतन्न पूज्यते ॥ १०

शकुनिः—

श्रोत्रियोऽश्रोत्रियमुत निकृत्यैव युधिष्ठिर ।
विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ॥ ११

[2]अक्षैर्हि शिक्षितोऽभ्येति निकृत्यैव युधिष्ठिर ।
विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ॥ १२

अकृतास्त्रं कृतास्त्रश्च दुर्बलं बलवत्तरः ॥ १२॥

एवं त्वं मामिहाभ्येत्य निकृतिं यदि मन्यसे ।
देवनाद्विनिवर्तस्व यदि ते विद्यते भयम् ॥ १३॥

युधिष्ठिरः—

आहूतो न निवर्तेयम् इति मे व्रतमाहितम् ।
विधिश्च बलवान् राजन् दिष्टस्यास्मि वशे स्थितः ॥ १४॥

अस्मिन् समागमे केन देवनं मे भविष्यति ।
प्रतिपाणश्च को न्यस्तस् ततो द्यूतं प्रवर्तताम् ॥ १५॥

---

1. क—कितवैस्साद्यनिकृतिर् वृत्तिर्मे ते न पूज्यते । ग—कितवस्याद्य । ख-घ—कितवासाद्यनिकृतेर्वृत्तिरेतेन पूज्यते ।

2. अ-ख-ग—अक्षाणि ।

दुर्योधनः—

अहं दातास्मि रत्नानां धनानां च विशाम्पते ।

मदर्थे देविता चायं शकुनिर्मातुलो मम ॥ १६॥

युधिष्ठिरः—

अन्येनान्यस्य विषमं देवनं प्रतिभाति मे ।

एतद्विद्वन्नुपादत्स्व काममेवं प्रवर्तताम् ॥ १७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

॥ २७ ॥ द्यूतपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

[अस्मिन्नध्याये १७॥ श्लोका ]

## ॥ षट्पञ्चाशोऽध्यायः ॥

द्यूतोपक्रमः ॥ १ ॥ युधिष्ठिरेण पणीकृतानां सर्ववस्तूनां शकुनिना अपहारः ॥ २ ॥

वैशम्पायनः—

उपोह्यमाने द्यूते तु [1]राजानस्सर्व एव ते ।

धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां ततः ॥ १

भीष्मो द्रोणः कृपश्चैव विदुरश्च महामतिः ।

* अ—कोशे नाताध्यायसमाप्तिः

1. क-ख-ग-घ—राजानं सर्वपार्थिवाः

नातीव प्रीतमनसस् तेऽन्ववर्तन्त भारत ॥ २

ते द्वन्द्वशः पृथक्चैव सिंहस्कन्धा महौजसः ।
सिंहासनानि भूरीणि विचित्राणि च भेजिरे ॥ ३

शुशुभे सा सभा राजन् राजभिस्तैस्समागतैः ।
देवैरिव महाभागैस् समुदीर्णं त्रिविष्टपम् ॥ ४

सर्वे वेदविद[1]श्शूरास् सर्वे भास्वरमूर्तयः ।
प्रावर्तत महाराज सुहृद्द्यूतमनन्तरम् ॥ ५

युधिष्ठिरः—

अयं बहुधनो राजन् सागरावर्तसन्निभः ।
मणिहारोत्तमश्श्रीमान् कनकोत्तमभूषणः ॥ ६

एतद्राजधनं मह्यं प्रतिपाणोऽत्र कस्तव ।
भवत्वेष क्रमस्तात जयाम्येतद्दुरोदरम् ॥ ७

दुर्योधनः—

सन्ति मे मणयश्चैव धनानि विविधानि च ।
मत्सरश्च न मेऽर्थेषु जयामैतद् दुरोदरम् ॥ ८

वैशम्पायनः—

ततो जग्राह शकुनिस् तानक्षानक्षतत्त्ववित् ।
जितमित्येव शकुनिस् तानक्षान् प्रत्यपद्यत* ॥ ९

1. ख-ग-घ-ङ—श्शिष्टाः।
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

युधिष्ठिरः—

मत्तः कैतवकेनैव यज्जितोऽसि दुरोदरम् ।

शकुने हन्त दीव्यावो ग्लहमानौ सहस्रशः ॥ १०

इमे निष्कसहस्रस्य कुण्डिनो हारिणश्शतम् ।

कोशो हिरण्यमक्षय्यं जातरूपमनेकशः ॥ ११

एतद्राजधनं मह्यं तेन दीव्याम्यहं त्वया ॥ ११॥

वैशम्पायनः—

इत्युक्तश्शकुनिः प्राह जितमित्येव तं नृपम् ॥ १२

युधिष्ठिरः—

अयं सहस्रसमितो वैयाघ्रस्सुप्रवर्तितः ।

सुचक्रोपस्करश्श्रीमान् किङ्किणीजालमण्डितः ॥ १३

संह्रादनो राजरथो य इहास्मानुदावहत् ॥ १३॥

जैत्रो रथवरः पुण्यो मेघसागरनिस्स्वनः ॥ १४

अष्टौ यं कुलसम्पन्नास् सदश्वा [1]राष्ट्रसम्मताः ।

वहन्ति नैषां मुच्येत पदाद् भूमिमुपस्पृशन् ॥ १५

एतद्राजधनं मह्यं तेन दीव्याम्यहं त्वया ॥ १५॥

वैशम्पायनः—

तमेवंवादिनं पार्थं प्रहसन्निव सौबलः ।

जितमित्येव शकुनिर् युधिष्ठिरमुवाच ह ॥ १६॥

---

1. ख-घ—राष्ट्रसंमताः ।

[1]सहस्रसङ्ख्या नागा मे मत्तास्तिष्ठन्ति सौबल।
हेमकक्ष्याः कृतापीडाः पद्मिनो हेममालिनः ॥ १७॥

सुदन्ता राजवहनास् सर्वशस्त्रसहा युधि ।
ईषादन्ता महाकायास् तावत्यश्च करेणवः ॥ १८॥

सर्वे च पुरभेत्तारो नवमेघनिभा गजाः ।
एतद्राजधनं मह्यं तेन दीव्याम्यहं त्वया ॥ १९॥

वैशम्पायनः—

तमेवंवादिनं पार्थं प्रहसन्निव सौबलः ।
जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ २०॥

युधिष्ठिरः—

शतं दासीसहस्राणां तरुण्यो हेमभद्रिकाः ।
कम्बुकेयूरहारिण्यो निष्ककण्ठ्यस्स्वलङ्कृताः ॥ २१॥

महार्हमाल्याभरणास् सुवस्त्राश्चन्दनोक्षिताः ।
मणिहेमानि बिभ्रत्यस् सर्वा वै सूक्ष्मवाससः ॥ २२॥

अनुसेवां चरन्तीमाः कुशला नृत्तसामसु ।
स्नातकानाममात्यानां राज्ञां च मम शासनात् ॥ २३॥

एतद्राजधनं मह्यं तेन दीव्याम्यहं त्वया ॥ २४

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं स्वयमाश्रितः ।
जितमित्येव शकुनिर् युधिष्ठिरमुवाच ह ॥ २५

1. ङ—कोशे अर्धाष्टकं नास्ति।

युधिष्ठिरः—
एवं तावन्ति दासानां [1]सहस्राणि वसन्ति मे ।
प्रदक्षिणानुलोमाश्च प्रावारवसनास्सदा ॥ २६
प्राज्ञा मेधाविनो दक्षा युवानो मृष्टकुण्डलाः ।
पात्रहस्ता दिवारात्रम् अतिथीन् भोजयन्त्युत ॥ २७
एतद्राजधनं मह्यं तेन दीव्याम्यहं त्वया ॥ २७॥

वैशम्पायनः—
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ २८॥

युधिष्ठिरः—
[2]रथास्तावन्त एवैते हेमभाण्डाः पताकिनः ।
हयैर्विनीतैस्सम्पन्ना रथिभिश्चित्रयोधिभिः ॥ २९॥
एकैको यत्र लभते सहस्रपरमां भृतिम् ।
युध्यतोऽयुध्यतो वाऽपि वेतनं मासकल्पितम् ॥ ३०॥
एतद्राजधनं मह्यं तेन दीव्याम्यहं त्वया ॥ ३१

वैशम्पायनः—
इत्येवमुक्तः पार्थेन कृतवैरो दुरात्मवान् ।
जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ ३२

युधिष्ठिरः—
अश्वांस्तित्तिरिकल्माषान् गान्धर्वान् हेममालिनः ।

---

1. अ-क-ख—सहस्राण्युत सन्ति मे ।
2. ङ—कोशे श्लोकषट्कं नास्ति ।

दद‍ौ चित्ररथस्तुष्टो यांस्तान् गाण्डीवधन्वने ॥ ३२

एतद्राजधनं मह्यं तेन दीव्याम्यहं त्वया ॥ ३३॥

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।

जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ ३४॥

युधिष्ठिरः—

रथानां शकटानां च यानानां चायुतानि मे ।

युक्तानामेव तिष्ठन्ति वाहैरुच्चावचैर्हयैः ॥ ३५॥

एवं वर्णस्य वर्णस्य समुच्चयसहस्रशः ।

क्षीरं पिबन्ति तिष्ठन्ति भुञ्जानाश्शालितण्डुलान् ॥ ३६॥

षष्टिस्तानि सहस्राणि सर्वे पृथुलवक्षसः ।

एतद्राजधनं मह्यं तेन दीव्याम्यहं त्वया ॥ ३७॥

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।

जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ ३८॥

युधिष्ठिरः—

[1]ताम्रलोहैः परिवृता निधयो मे चतुश्शतम् ।

पञ्चद्रौणिकमेकैकं सुवर्णस्याहतस्य वै ॥ ३९॥

एतद्राजधनं मह्यं तेन दीव्याम्यहं त्वया ॥ ४०

1. क-ग-च-ङ—कोशेषु अर्धपञ्चकं नास्ति ।

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ ४१

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

॥ २७ ॥ द्यूतपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

[अस्मिन्नध्याये ४१ श्लोकाः]

---

## ॥ सप्तपञ्चाशोऽध्यायः ॥

विदुरेण धृतराष्ट्रं प्रति दुर्योधननिन्दापूर्वकं द्यूतोपरमचोदनम् ॥ १ ॥

---

विदुरः—

महाराज विजानीहि यत् त्वां वक्ष्यामि तच्छृणु ।
मुमूर्षोरौषधमिव रोचेत हि न ते श्रुतम् ॥ १

यो वै पुरा जातमात्रो रुरोद
गोमायुवद्विस्वरं पापचेताः ।
दुर्योधनो भारतानां कुलघ्नस्
सोऽयं युक्तो भविता कालहेतुः ॥ २

गृहे वसन्तं गोमायुं त्वं वै [1]तं तु न बुध्यसे ।

---

1. अ—मन्दो । क—नं तु ।

दुर्योधनस्वरूपेण शृणु [1]काव्यां गिरं मम ॥ ३
मधु वै माध्विको लब्ध्वा प्रपातं नावबुध्यते ।
आरुह्य तेन सज्जेत पतनं वाऽपि गच्छति ॥ ४
सोऽयं मत्तः कैतवेन मधुवन्न परीक्षते ।
[2]प्रपातं बुध्यते नैवं वैरं कृत्वा महारथैः ॥ ५
विदितं मे महाराज [3]स्वे परेवाऽसमञ्जसम् ॥ ५॥
अन्धका यादवा भोजास् समेताः कंसमत्यजन् ।
नियोगाच्च हते तस्मिन् कृष्णेनाऽमित्र[4]घातिना ॥ ६॥
एवं ते ज्ञातयस्सर्वे मोदमानाश्शतं समाः ।
त्वन्नियुक्तस्सव्यसाची निगृह्णातु सुयोधनम् ॥ ७॥
निग्रहादस्य पापस्य मोदन्तां कुरवस्सुखम् ॥ ८
काकेनेमांश्चित्रबर्हान् शार्दूलान् क्रोष्टुकेन च ।
क्रीणीष्व पाण्डवान् राजन् मा मज्जीश्शोकसागरे ॥ ९
त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ १०
सर्वज्ञस्सर्वभावज्ञस् सर्वशत्रुभयङ्करः ।
इति स्म भाषते काव्यो जम्भत्यागे महासुरान् ॥ ११

1. क—कार्म्यां । 2. ख-ग-घ-ङ—प्राप्य तद् ।
3. ख-ग-घ-ङ—राजसेवाऽ क—स्वपक्षेषु ।
4. क-ख-ग-घ—कर्शिना ।

हिरण्यष्ठीविनः कांश्चित् पक्षिणो वनगोचरान् ।
गृहे किल कृतावासाँल्लोभाद्राजन्नपीडयत् ॥ १२
[1]सदैव लोभाद्धोगात्मा हिरण्यार्थी परन्तप ।
आयतिं च तदात्वं च उभे सद्यो व्यनाशयत् ॥ १३
[2]तदर्थकामः पाण्डूनां मा द्रुहः पुरुषर्षभ ।
मोहात्मा तप्स्यसे पश्चात् पक्षिहा पुरुषो यथा ॥ १४
एतेन तव नाशस्स्याद् बडिशाच्छफरो यथा ॥ १४॥
जातं जातं पाण्डवेभ्यः पुष्पमादत्स्व भारत ।
मालाकार इवारामे स्नेहं कुर्वन् पुनः पुनः ॥ १५॥
वृक्षानङ्गारकारीव मा च धाक्षीस्समूलकान् ।
मा गमस्ससुतामात्यस् ससुहृच्च पराभवम् ॥ १६॥
समवेतान् हि कः पार्थान् प्रतियुध्येत भारत ॥ १७
मरुद्भिस्साहितो राजन्नपि साक्षान्मरुत्पतिः ।
[3]युधि जेतुमशक्तो हि पाण्डवान् पुरुषोत्तमान्* ॥ १८

द्यूतं मूलं कलहस्यातिघोरं
मिथो भेदो महते वै रणाय ।

---

1. अ—सदैव भोज्याँल्लोभात्मा हिरण्यार्थेऽतपत्पुनः ।
क—सदोऽपि भोग्याँल्लोभान्धो हिरण्यार्थे ।
2. क-ख-ग-घ-ङ—तदात्म ।
3. क-ग-घ-ङ—कोशेषु इदमर्धं नास्ति ।
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

यदा स्थितोऽयं धृतराष्ट्रस्य पुत्रो
दुर्योधनस्सृजति वैरमुग्रम् ॥ १९

प्रातिपीयाश्शान्तनवा भैमसेनास्सबाह्लिकाः ।
दुर्योधनापराधेन कृच्छ्रं प्राप्स्यन्ति सर्वशः ॥ २०

दुर्योधनो मदेनैव क्षेमं राष्ट्रादपोहति ।
विषाणं गौरिव मदात् स्वयमारुजते बलात् ॥ २१

यश्चित्तमन्वेति परस्य राजन्
वीरः कविस्स्वामतिपत्य दृष्टिम् ।
नावं समुद्रे इव बालनेत्राम्
आरुह्य घोरे व्यसने निमज्जेत् ॥ २२

दुर्योधनो ग्लहते पाण्डवेन
सम्प्रीयसे त्वं जयतीति यच्च ।
[1]अतिमात्रं जायते सम्प्रहारो
यतो विनाशस्समुपैति पुंसाम् ॥ २३

[2]आकर्षते वाक्यबलप्रणीतो
हृदि प्रौढो मन्त्रपदस्समाधिः ।
[3]युधिष्ठिरेण कलहस्तवास्तु
सुखप्रदस्सुचिरं ते सुधन्वा ॥ २४

---

1 अ—अतीव न ज्ञायते ।

2. अ—आकर्षते वाग्बलं संप्रणीतो । क—ऽवाक्फलः ।
घ-ङ—आकर्षस्तेऽत्राक्फलः कुप्रणीतो

3. ङ—कोशे अर्धत्रयं नास्ति ।

प्रातिपीयाश्शान्तनवाश्च राजन्
काम्यां वाचं शृणुतां माऽत्यगास्ताम् ।
वैश्वानरं प्रज्वलितं सुघोरं
को युद्धेन प्रशमयितोत्पतन्तम् ॥ २५
यदा मन्युं पाण्डवोऽजातशत्रुर्
न संयच्छे[1]दक्षमयाऽभिभूतः ।
वृकोदरस्सव्यसाची यमौ च
कोऽत्र स्थाता तुमुले वै तदानीम् ॥ २६
महाराज प्रभवस्त्वं धनानां
पुरा द्यूतं मनसा यावदिच्छेः ।
बहु वित्तं पाण्डवांश्चेज्जयस्त्वं
किं चेदं स्याद्वसु विन्देत पार्थान् ॥ २७
जानीमहे [2]देवितं सौबलस्य
वेद द्यूते निकृतिं पार्वतीयः ।
यतः प्राप्तश्शकुनिस्तत्र यातु
मायायोगी भारत पार्वतीयः ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ २७ ॥ द्यूतपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये २८ श्लोका.]

---

1. ख-ङ—दक्षमदाभिभूतः । 2. ख-ग-घ-ङ—जल्पितं ।

## ॥ अष्टपञ्चाशोऽध्यायः ॥

दुर्योधनेन विदुरोपालम्भः ॥ १ ॥ विदुरेण धृतराष्ट्रस्य हितोपदेशः ॥ २ ॥

दुर्योधनः—

परेषामेव यशसा श्लाघसे त्वं
सदा छन्नः कुत्सयन् धार्तराष्ट्रान् ।
जानीमस्त्वां विदुर विप्रियस्त्वं
बालानिवास्मानवमन्यसे त्वम् ॥ १

स विज्ञेयः पुरुषोऽन्यत्रकामो
निन्दाप्रशंसे हि तथा युनक्ति ।
जिह्वाऽऽत्मनो हृदये[1] निर्णिनक्ति
ज्यायो निरीहमनसः प्रातिकूल्यम् ॥ २

[2]उत्सङ्गे च व्याल इवाहितोऽसि
मार्जारवत् पोषकं चोपहंसि ।
भर्तृघ्नं त्वां न हि पापीय आहुस्
तस्मात् क्षत्तः किं [3]न बिभेषि पापात् ॥ ३

1. अ-ङ—निर्णनक्ति ।
2. अ-क-ख—उत्सङ्गेन ।
3. अ-क—मा तितिक्षून् क्षिपेस्त्वम् ।

[1]जित्वा शत्रून् फलमाप्तं महन्नो
मा न क्षत्तः परुषाणीह वोचः ।
विद्वद्भिस्त्वं सम्प्रयोगाभिनन्दी
मुहुर्दोषं याहि नस्सम्प्रमोहात् ॥ ४
अमित्रतां याति परोक्षमब्रुवन्
निगूहसे गुह्यममित्रसंस्तवे ।
तवाश्रितो यत् त्वरितं न बाधते
यदिच्छसि त्वं तदिहास्य भाषसे ॥ ५
मा नोऽवमंस्था विमनास्तवेमां
शिक्षस्व बुद्धिं स्थविराणां सकाशात् ।
यशो रक्षस्व विदुर त्वं वृणीहि
मा व्यापृतः परकार्येषु भूस्त्वम् ॥ ६
अहं कर्तेति विदुर माऽतिमंस्था
मा नो नित्यं परुषाणीह वोचः ।
न त्वां पृच्छामि विदुर यद्धितं मे
स्वस्ति [2]क्षत्तर्मा तितिक्षुं क्षिणु त्वम् ॥ ७
एकश्शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता ।

---

1. अ-कोशे—अर्धाष्टकं नास्ति ।
2. ख-घ—क्षत्तर्मा तितिक्षून् क्षिपेस्त्वम् ।

तेनानुशिष्टः प्रवणादिवाम्भो
यथा नियुक्तोऽस्मि तथा [1]वहामि ॥ ८

भिनत्ति शिरसा शैलं महीं भेदयते च यः ।
स एव तस्य कुरुते कार्याणामनुशासनम् ॥ ९

यो बालमनुशास्तीह सोऽमित्रं तेन विन्दति ।
यस्सतामनुवृत्तं तु समुपेक्षत्यपण्डितः ॥ १०

आदीप्य यः प्रदीप्ताग्निं [2]प्रज्वरं नाभिधावति ।
भस्मापि न स विन्देत शिष्टं किञ्चन भारत ॥ ११

न वासयेत् पारवर्ग्यं द्विषन्तं
विशेषतः क्षत्तरहितं चैव मन्ये ।
यत्रेच्छसि त्वं विदुर तत्र गच्छ
सान्त्व्यमानाऽपि ह्यसती स्त्री जिहासति ॥ १२

विदुरः—

एतावता ये पुरुषं सन्त्यजन्ति
तेषां सख्य[3]मन्तवद्ब्रूम राजन् ।
राज्ञां हि चित्तानि परिप्लुतानि
सान्त्वं दत्वा मुसलैर्घातयन्ति ॥ १३

---

1. अ-क-ख-घ—भवामि
2. -ग—सत्वरं । ख-घ—प्रत्यरं । च—प्रदहन्नभि ।
3. अ—मन्तवन्त ब्रवीमि । क—मन्तवत्तद्ब्रवीषि ।
ख-घ—मन्तवद्ब्रूहि राजन् ।

अबालं मां मन्यसे राजपुत्र
बालोऽयमित्येव सुमन्दबुद्धे ।
यस्सौहृदे पुरुषं स्थापयित्वा
पश्चादेनं दूषयते स बालः ॥ १४

न श्रेयसे नीयते मन्दबुद्धिस्
स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा ।
ध्रुवन्न[1] रुच्येद्भरतर्षभाय
पतिः कुमार्या इव षष्टिवर्षः ॥ १५

[2]मामप्रियं चेदनुकाङ्क्षसे त्वं
सर्वेपु कार्येषु हिताहितेपु ।
स्त्रियश्च राजञ्जडपङ्गुकांश्च
पृच्छस्व तांस् तादृशांश्चैव मूढान् ॥ १६

लभ्यः खलु प्रातिपीयो नरोऽनु प्रियवागिह ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १७

यस्तु धर्मे[3] परश्च स्याद्धित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ १८

1. अ—रुच्येत्पुरुषर्षभस्य । क—रुच्यै भरतर्षभस्य ।
ख—रुच्यद्भरतर्षभाय ।
2. क—अनुप्रियं । ख-घ—मम प्रियं ।
3. क—पुराद्धस्य । ख—परश्चास्य । ग—पराश्चास्य ।

नाप्रियस्साधुर्भवति न मेधावी न पण्डितः ।
प्रियेष्वेतानि दृश्यन्ते [1]यावद्द्वेषो हि भारत ॥ १९

अत्याधिकं कटुकं तीक्ष्णमुष्णं
यथौषधं परुषं पूतिगन्धि ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज परं प्रशाम्य ॥ २०

वैचित्रवीर्यस्य यशो धनं च
वाञ्छाम्यहं सहपुत्रस्य शश्वत्
यथा तथा वाऽस्तु [2]मनश्च वोऽस्तु
ममापि च स्वस्ति दिशन्तु विप्राः ॥ २१

आशीविषान् नेत्रविषान् कोपयेन्न तु पण्डितः ।
एवं तेऽहं वदामीदं वदतः कुरुनन्दन ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

॥ २७ ॥ द्यूतपर्वणि दशमोऽध्यायः ॥ १० ॥

[अस्मिन्नध्याये २२ श्लोकाः]

---

1. अ—यां च द्वेषे च भारत । क—द्वेष्ये पापानि । ध—यावद्धर्षो हि ।
2. ङ—नमश्च तेऽस्तु ।

## ।। एकोनषष्टितमोऽध्यायः ।।

सपत्नीभ्रातृकस्य युधिष्ठिरस्य शकुनिना पराजयः ॥ १ ॥

शकुनिः—

बहु वित्तं पराजैषीः पाण्डवानां युधिष्ठिर ।
आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् ।। १

युधिष्ठिरः—

मम वित्तमसङ्ख्येयं यदहं वेद सौबल ।
अथ त्वं शकुने कस्माद् वित्तं समनुपृच्छसि ।। २

अयुतं प्रयुतं चैव निखर्वं खर्वमर्बुदम् ।
कचं प्रतिकचं चैव समुद्रं चात्र पण्यताम् ।। ३

एतन्मम धनं राजंस् तेन दीव्याम्यहं त्वया ।। ३।।

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिस् [1]तानक्षान् प्रत्यपद्यत ।। ४।।

युधिष्ठिरः—

गजाश्वं बहुधेनूकम् असङ्ख्येयमजाविकम् ।
यत्किञ्चिदनुवर्णानां प्राक् सिन्धोरिति सौबल ।। ५।।
एतन्मम धनं राजन् तेन दीव्याम्यहं त्वया ।। ६

1. अ-ग—र्युधिष्ठिरमभाषत ॥

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिस् तानक्षान् प्रत्यपद्यत ॥ ७

युधिष्ठिरः—

पुरं जनपदो भूमिर् अब्राह्मणधनैस्सह ।
अब्राह्मणाश्च पुरुषा राजन् शिष्टं धनं मम ॥ ८
एतन्मम धनं राजंस् तेन दीव्याम्यहं त्वया ॥ ८॥

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिस् तानक्षान् प्रत्यपद्यत ॥ ९॥

युधिष्ठिरः—

राजपुत्रा इमे राजञ् छोभन्ते यैश्च भूषिताः ।
कुण्डलानि च निष्काश्च सर्वशश्चाङ्गभूषणाः ॥ १०॥
एतन्मम धनं राजंस् तेन दीव्याम्यहं त्वया ॥ ११

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ १२

युधिष्ठिरः—

श्यामो युवा लोहिताक्षस् सिंहस्कन्धो महाद्युतिः ।
नकुलो [1]ग्लह एवैक एतद्वै मद्गतं धनम् ॥ १३

---

1. च—अर्भक एवैकः ।

शकुनिः—

प्रियस्ते नकुलो राजन् राजपुत्रो युधिष्ठिर ।
[1]अस्माकं धनतां प्राप्तो भूयस्त्वं केन दीव्यसे ॥ १४

वैशम्पायनः—

एवमुक्त्वाऽथ शकुनिस् तानक्षान् प्रत्यपद्यत ।
जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ १५

युधिष्ठिरः—

अयं धर्मान् सहदेवोऽनुशास्ति
लोके ह्यस्मिन् पण्डिताख्यां गतश्च ।
अनर्हता राजपुत्रेण [2]तेन
त्वया दीव्याम्यप्रियवत् प्रियेण ॥ १६

शकुनिः—

माद्रीपुत्रौ प्रियौ राजंस् तवेमौ विजितौ मया ।
गरीयांसौ तु तौ मन्ये भीमसेनधनञ्जयौ ॥ १७

युधिष्ठिरः—

अधर्मं चरसे वै त्वं [3]यत् ते नावेक्षिता वयम् ।
यो नस्सुमनसां मूढ विभेदयितुमिच्छसि ॥ १८

---

1. घ—अकस्माद्धनतां प्राप्तो भूयस्त्वं येन ।
2. अ-क-ख-ग-घ—सौबल ।
3. अ-ग—यत्नेना ख—यत्ते तापेक्षिता यथा ? ।

शकुनिः—

गर्ते [1]मन्दः प्रपतति प्रमत्तस्स्थाणुमृच्छति ।
ज्येष्ठो राजन् वरिष्ठोऽसि नमस्ते भरतर्षभ ॥ १९

स्वप्नेऽपि तानि पश्यन्ति जाग्रतोऽपि युधिष्ठिर ।
कितवा यानि दीव्यन्तः प्रलपन्त्युत्कटा इव ॥ २०

युधिष्ठिरः—

यो नस्सङ्ख्ये नौरिव पारनेता
जेताऽरीणां राजपुत्रस्तरस्वी ।
अनर्हता लोकवीरेण तेन
दीव्याम्यहं शकुने चार्जुनेन ॥ २१

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ २२

शकुनिः—

अयं मया पाण्डवानां [2]धनुर्धरः
पराजितः पाण्डवस्सव्यसाची ।
भीमेन राजन् दयितेन दीव्य
[3]यत् कैतवं पाण्डव तेऽवशिष्टम् ॥ २३

---

1 अ—मत्तः प्रपतितः प्रमत्तः स्थाणुमृच्छति ।
क-ख-घ—मत्तः प्रपतति प्रमत्तश्चानुमूर्च्छसि ।

2. ख-घ—स राजा ।

3. अ-ख-घ—यज्जेतव्यं पाण्डव ते विशिष्टम् ।

युधिष्ठिरः—

[1]सेनां नेता [2]संयुगार्थं प्रणेता
यथा वज्री दानवशत्रुरेकः ।
तिर्यक्प्रेक्षी सङ्गतभ्रूर्महात्मा
सिंहस्कन्धो यश्च सदाऽत्यमर्षी ॥ २४

बलेन तुल्यो यस्य पुमान् न विद्यते
गदा[3]भृतां मान्य इहारिमर्दनः ।
अनर्हता राजपुत्रेण तेन
दीव्याम्यहं भीमसेनेन राजन् ॥ २५

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिस् [4]तानक्षान् प्रत्यपद्यत ॥ २६

शकुनिः—

बहु वित्तं पराजैषीर् भ्रातॄंश्च सहयद्विपान् ।
आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् ॥ २७

युधिष्ठिरः—

अहं विशिष्टस्सर्वेषां भ्रातॄणां दयितस्तथा ।

---

1. क—स नो नेता संयुगान्तप्रणेता।
2. अ-घ—संयुगान्तं। संयुगान्तं।
3. अ-क—भृतामग्र्य। ख-घ—भ्राता।
4. क—युधिष्ठिरमभाषत। ख-घ—निकृतिं समुपाश्रितः।

[1]कुर्याम ते पणं द्यूते स्वयमात्मन्युपग्रहे ॥ २८

वैशम्पायनः—

एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ २९

शकुनिः—

एतत् पापिष्ठमकरोर् यदात्मानं [2]पराजित. ।
शिष्टे सति धने राजन् पाप आत्मपराजयः ॥ ३०

वैशम्पायनः—

एवं जित्वा मताक्षस्तान् ग्लहे सर्वानवस्थितान् ।
अपाजयल्लोकवीरान् [3]अवैक्षत पृथक् पृथक् ॥ ३१

शकुनिः—

अस्ति ते वै प्रिया देवी ग्लह एकोऽपराजितः ।
पणस्व कृष्णां पाञ्चालीं तयाऽऽत्मानं पुनर्जय ॥ ३२

युधिष्ठिरः—

नैव ह्रस्वा न महती [4]नैवं कृष्णा न रोहिणी ।
सा रागरक्तवसना तया दीव्याम्यहं त्वया ॥ ३३

---

1. अ—कुर्यामस्ते जिताः कर्म स्वयमात्मन्युपग्लहे ।
क—कुर्यामस्ते जिता कर्म स्वयमात्मन्युपप्लुवे ।
ख-घ—कुर्याम ते जिताः कर्म स्वयमात्मन्युपप्लवौ ।
2. ख-घ—पराजितम् ।
3. अ—नुत्क्षेपेण । क—नाक्षेपेण । 4. अ-क—नातिकृष्णा

शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया ।
[1]शारदोत्पलसेविन्या रूपेण श्रीसमानया ॥ ३४

तथैव स्यादानृशंस्यात् तथा स्याद्रूपसम्पदा ।
तथा स्यात् पुत्रसम्पत्त्या यामिच्छेत् पुरुषस्स्त्रियम् ॥ ३५

चरमं [2]संविशन्ती या प्रथमं च प्रबुध्यते ।
आगोपालाविपालेभ्यस् सर्वं वेद कृताकृतम् ॥ ३६

आभाति पद्मवद्वक्त्रं [3]सस्वेदं मल्लिकेव च ।
वेदीमध्या दीर्घकेशी ताम्राक्षी नातिरोमशा ॥ ३७

तयैवंविधया राजन् पाञ्चाल्याऽहं सुमध्यया ।
ग्लहं दीव्यामि चार्वङ्ग्या द्रौपद्या हन्त सौबल ॥ ३८

वैशम्पायनः—

एवमुक्ते तु वचने धर्मराजेन धीमता ।
धिग्धिगित्येव वृद्धानां सभ्यानां निस्सृता गिरः ॥ ३९

चुक्षुभे सा सभा राजन् राज्ञां शोको महानभूत् ।
भीष्मद्रोणकृपादीनां स्वेदश्च समजायत ॥ ४०

शिरो गृहीत्वा विदुरो गतसत्व इवाभवत् ।
आस्ते ध्यायन्नधोवक्त्रो निश्श्वसन्नुरगो यथा ॥ ४१

---

1. अ—कोश इदमर्धं नास्ति ।
2. अ—सञ्चरन्ती । क-ग-ख—संविशन्ती ।
3. अ—सम्मिता । क—सौरभ्यात् । ख-ग—सस्मिता ।

बाह्लीकस्सोमदत्तश्च प्रातिपीयस्स सञ्जयः ।
द्रौणिर्भूरिश्रवाश्चैव युयुत्सुर्धृतराष्ट्रजः ॥ ४२
हस्तौ पिंषन्नधोवक्त्रा निश्वसन्त इवोरगाः ॥ ४२॥
धृतराष्ट्रस्तु संहृष्टः पर्यपृच्छत पुनः पुनः ।
किं जितं किं जितमिति [1]ह्याकारं नाभ्यगूहत ॥ ४३॥
जहर्ष कर्णोऽतिभृशं सह दुश्शासनादिभिः ।
इतरेषां च सभ्यानां नेत्रेभ्यः प्रापतज्जलम् ॥ ४४॥
सौबलस्त्वविचार्यैव जितकाशी मदोत्कटः ।
जितमित्येव तानक्षान् पुनरेवान्वपद्यत ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
॥ २७ ॥ द्यूतपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये ४५॥ श्लोकाः]

---

## ॥ षष्टितमोऽध्यायः ॥

---

दुश्शासनेन द्रौपद्याः सभां प्रत्यानयनम् ॥ १ ॥ द्रौपद्या सभ्यान् प्रति प्रश्नः ॥ २ ॥

---

दुर्योधनः—

एहि क्षत्तर्द्रौपदीमानयस्व
प्रियां भार्यां सम्मतां पाण्डवानाम् ।

---

1. अ—भूत्वा रत्नान्यगणयत । ख-ग-घ-ङ—व्याहरन् ।

सम्मार्जतां वेश्म परैतु शीघ्रम्
आनन्दो नस्सह दासीभिरस्तु ॥ १

विदुरः—

[1]दुर्विभाव्यं भवति त्वादृशेन
न मन्द सम्बुद्ध्यसि पाशबद्धम् ।
प्रपाते त्वं लम्बमानो न वेत्सि
व्याघ्रं मृगः कोपयते हि बाल्यात् ॥ २

आशीविषाञ्छराशितान्न पूर्णकोपान् महाविषान् ।
मा कोपिष्ठास्सुमन्दात्मन् मा गमस्त्वं यमक्षयम् ॥ ३

न हि दासीत्वमापन्ना कृष्णा भवति धर्मतः ।
अनीशेन हि राज्ञैषा पणे न्यस्तेति मे मतिः ॥ ४

[2]अयं धत्ते वेणुरिवात्मघातं
फलं राजा धृतराष्ट्रस्य पुत्रः ।
द्यूतं हि वैराय महाभयाय
पक्वं न बुध्यत्ययमन्तकालम् ॥ ५

नारुन्तुदस्स्यान्न नृशंसवादी
[3]न चातिभीतः परमाददीत ।

---

1. क—न दुर्विभाव्यं भवति त्वादृशेन न मन्दबुद्ध्या सितपाशबद्धः ।
ग—न दुर्विभाव्या भवति त्वादृशेन ।
2. क—आयं धत्ते वेणुरिवात्मघाती फलं राजा धृतराष्ट्रस्सपुत्रः ।
3. अ—न हीनतः परमपूर्वदित? । क—न हीनतः परमभ्याददीत ।

यया ऽस्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम् ॥ ६
समुच्चरन्त्यतिवादाश्च वक्राद्
यैराहतश्शोचति रात्र्यहानि ।
परस्य [1]चेन्मर्मसु ते पतन्ति
तान् पण्डितो नावसृजेत् परेषु ॥ ७
अजो हि शास्त्रमखनत् किलैकश्
शास्त्रे विपन्ने पद्भिरपास्य भूमिम् ।
निकृन्तनं स्वस्य कण्ठस्य घोरं
तद्वद्वैरं मा खनीः पाण्डुपुत्रैः ॥ ८
न किञ्चिदित्थं प्रवदन्ति पापं
वनेचरं वा गृहमेधिनं वा ।
तपस्विनं सम्परिपूर्णविद्यं
[2]भषन्ति ये वै श्वनरास्सुधीरम् ॥ ९
द्वारं सुघोरं नरकस्य जिह्मं
न बुध्यसे धृतराष्ट्रस्य पुत्र ।
[3]त्वामन्वेतारो बहवः कुरूणां
द्यूतोदये सह दुश्शासनेन ॥ १०

1. अ—नो मर्मसु । क—ना मर्मसु ।
2. अ—भक्ष्यन्ति । क-ख-ङ—द्विषन्ति ।
3. क-ग—तमन्वेतारो ।

मज्जन्त्यलाबूनि शिलाः प्लवन्ते
मुह्यन्ति नावोऽम्भसि शश्वदेव ।
अहो राजा धृतराष्ट्रस्सपुत्रो
न मे वाचं पथ्यरूपां शृणोति ॥ ११

अतो नूनं भविताऽयं कुरूणां
सुदारुणस्सर्वहरो विनाशः ।
वाचः पुण्यास्सुहृदां पथ्यरूपा
न श्रूयन्ते वर्धते लोभ एव* ॥ १२

**वैशम्पायनः—**

धिगस्तु क्षत्तारमिति ब्रुवाणो
दर्पेण मत्तो धृतराष्ट्रस्य पुत्रः ।
अवैक्षत प्रातिकामीं सभायाम्
उवाचैनं परमाचार्यमध्ये ॥ १३

**दुर्योधनः—**

त्वं प्रातिकामिन् द्रौपदीमानय्स्व
न ते भयं विद्यते पाण्डवेभ्यः ।
क्षत्ता ह्ययं विवदत्येष भीरुर्
न चास्माकं वृद्धिकामस्सदैव ॥ १४

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

वैशम्पायनः—

एवमुक्तः प्रातिकामी स सूतः
प्रायाच्छीघ्रं राजवचो निशम्य ।
प्रविश्य च श्वेव स सिंहगोष्ठं
समासदन्महिषीं पाण्डवानाम् ॥ १५

प्रातिकामी—

युधिष्ठिरे द्यूतमदेन मत्ते
दुर्योधनो द्रौपदि त्वामजैषीत् ।
[1]समागच्छ त्वं धृतराष्ट्रस्य वेश्म
नयामि त्वां कर्मणे याज्ञसेनि ॥ १६

द्रौपदी—

कथं त्वेवं वदसि प्रातिकामिन्
को वै दीव्येद्भार्यया राजपुत्रः ।
मूढो राजा द्यूतमदेन मत्त
आहो नान्यत् कैतवमस्य किञ्चित् ॥ १७

प्रातिकामी—

[2]यदा नासीत् कैतवमन्यदस्य
तदाऽदेवीत् पाण्डवोऽजातशत्रुः ।
न्यस्ताः पूर्वं भ्रातरस्तेन राज्ञा
स्वयं चात्मा त्वमथो राजपुत्रि ॥ १८

---

1 अ-क-ख-ग—सा गच्छ । 2. ख-ग-घ-ङ—यद्वा नाभूत् ।

द्रौपदी—

गच्छ त्वं कितवं गत्वा सभायां पृच्छ सूतज ।

[1]किं त्वं पूर्वं पराजैषीर् आत्मानमथवाऽपि माम् ॥ १९

[2]एतज्ज्ञात्वा समागच्छ ततो मां नय सूतज ॥ १९॥

वैशम्पायनः—

सभां गत्वा स चोवाच द्रौपद्यास्तद्वचस्तदा ॥ २०

प्रातिकामी—

कस्येशो नः पराजैषीर् इति त्वामाह द्रौपदी ।

किं त्वं पूर्वं पराजैषीर् आत्मानमथवाऽपि माम् ॥ २१

वैशम्पायनः—

युधिष्ठिरस्तु तच्छ्रुत्वा गतसत्त्व इवाभवत् ।

न तं सूतं प्रत्युवाच वचनं साध्वसाधु वा ॥ २२

दुर्योधनः—

इहैत्य कृष्णा पाञ्चाली प्रश्नं समनुपृच्छताम् ।

इहैव सर्वे शृण्वन्तु तस्या अस्य च यद्वचः ॥ २३

वैशम्पायनः—

स गत्वा राजभवनं दुर्योधनवशानुगः ।

उवाच द्रौपदीं सूतः प्रातिकामी व्यथन्निव ॥ २४

प्रातिकामी—

सभ्यास्त्वामिह राजपुत्र्याह्वयन्ति

मन्ये प्राप्तं संक्षयं कौरवाणाम् ।

---

1. क—किं नु पूर्वं पराजैषीरात्मानं किं नु भारत ।

2. क—पुनर्ज्ञात्वा त्वमागच्छ ।

न वै समृद्धिं पालयते लघीयान्
यस्त्वां सभां नेष्यति राजपुत्रि ॥ २५

द्रौपदी—

एवं द्यूतं व्यदधात् संविधाता
स्पर्शावुभौ स्पृशतो धीरबालौ ।
धर्मं त्वेकं परमं प्राप्य लोके
स नश्शमं दास्यति गोप्यमानः* ॥ २६

---

* अस्माभिरुपलब्धासु षट्सु तालपत्रमातृकासु उपरि मुद्रित-प्रकारेणैव पाठो दृश्यते । मुद्रितग्रन्थलिपिकोशे तु अधः प्रदर्शितरीत्या पाठ उपलभ्यते । मुद्रितग्रन्थलिपिकोशस्थपाठ एव कथासन्दर्भानुकूल इव प्रतिभाति ।

सोयं धर्मो माऽत्यगात् कौरवान् वै
सभ्यान् गत्वा पृच्छ धर्म्यं वचो मे ।
ते मां ब्रूयुर्निश्चितं तत् करिष्ये
धर्मात्मानो नीतिमन्तो वरिष्ठाः ॥

वैशम्पायनः—

श्रुत्वा सूतस्तद्वचो याज्ञसेन्यास्
सभां गत्वा प्राह वाक्यं तदानीम् ।
अधो मुखास्ते न च किञ्चिदूचुर्
निर्बन्धं तं धार्तराष्ट्रस्य बुद्ध्वा ॥
युधिष्ठिरस्तु तच्छ्रुत्वा दुर्योधनचिकीर्षितम् ।
द्रौपद्यास्सम्मतं दूतं प्राहिणोद्भरतर्षभ ॥

वैशम्पायनः—

युधिष्ठिरस्तु तच्छ्रुत्वा दुर्योधनचिकीर्षितम् ।
द्रौपद्यास्सम्मतं दूतं प्राहिणोद्भरतर्षभ ॥ २७

एकवस्त्रा त्वधोनीवी रोदमाना रजस्वला ।
सभामागम्य पाञ्चाली श्वशुरस्याग्रतोऽभवत् ॥ २८

ततस्तेषां मुखमालोक्य राजा
दुर्योधनस्सूतमुवाच [1]हृष्टः ।
इहैवैतामानय प्रातिकामिन्
प्रत्यक्षमस्याः कुरवो ब्रुवन्तु ॥ २९

ततस्सूतस्तस्य वशानुगामी
भीतश्च कोपाद्द्रुपदात्मजायाः ।

---

पूर्वतोऽनुवृत्तम्—

युधिष्ठिरः—

एकवस्त्रा त्वधोनीवी रोदमाना रजस्वला ।
सभामागम्य पाञ्चालि श्वशुरस्याग्रतो भव ॥
अथ त्वामागतां दृष्ट्वा राजपुत्रीं सभां तदा ।
सभ्यास्सर्वे विनिन्देरन् मनोभिर्धृतराष्ट्रजम् ॥

वैशम्पायनः—

स गत्वा त्वरितं दूतः कृष्णाया भवनं नृप ।
न्यवेदयन्मतं धीमान् धर्मराजस्य निश्चितम् ॥
पाण्डवाश्च महात्मानो दीना दुःखसमन्विताः ।
सत्येनातिपरीताङ्गा नोदीक्षन्ते स्म किञ्चन ॥

1. ख—घृष्टः । क-ग-ङ—दृष्टः ।

[1]विहाय मानं पुनरेव सभ्यान्
उवाच कृष्णां किमहं ब्रवीमि ॥ ३०

दुर्योधनः—
दुश्शासनैषां मम सूतपुत्रो
वृकोदरादुद्विजतेऽल्पचेताः ।
स्वयं प्रगृह्यानय याज्ञसेनीं
किं ते करिष्यन्त्यवशास्सपत्नाः ॥ ३१

वैशम्पायनः—
ततस्समुत्थाय स राजपुत्रश्
श्रुत्वा भ्रातु[2]श्शासनं रक्तदृष्टिः ।
प्रविश्य तद्वेश्म महारथानाम्
इत्यब्रवीद्द्रौपदीं राजपुत्रीम् ॥ ३२

दुश्शासनः—
एह्येहि पाञ्चालि जिताऽसि कृष्णे
दुर्योधनं पश्य विमुक्तलज्जा ।
कुरून् भजस्वायतपत्रनेत्रे
धर्मेण लब्धाऽसि सभां परैहि ॥ ३३

वैशम्पायनः—
ततस्समुत्थाय सुदुर्मनास्सा
विवर्णमा[3]वृत्य मुखं करेण ।

---

1. अ—विगाहमानः। क-ग-घ—विगर्हमाणः। ख—विगर्हमानां।
2. अ-क-ख-ग-घ—:कोपविरक्तदृष्टिः। 3. अ—हृत्य। क—मृज्य।

आर्ता प्रदुद्राव यतस्त्रियस्ता
वृद्धस्य राज्ञः कुरुपुङ्गवस्य ॥ ३४

ततो जवेनाभिससार रोषाद्
दुश्शासनस्तामभिगर्जमानः ।
दीर्घेषु नीलेष्वथ चोर्मिमत्सु
जग्राह केशेषु नरेन्द्रपत्नीम् ॥ ३५

ये राजसूयावभृथे जलेन
महाक्रतौ मन्त्रपूतेन सिक्ताः ।
ते पाण्डवानां परिभूय वीर्यं
बलात् प्रमृष्टा धृतराष्ट्रजेन ॥ ३६

स तां परामृश्य सभासमीपम्
आनीय कृष्णामतिकृष्णकेशीम् ।
दुश्शासनो नाथवतीमनाथवच्
चकर्ष वायुः कदलीमिवार्ताम् ॥ ३७

सा कृष्यमाणा नमिताङ्गयष्टिश्
शनैरुवाचाद्य रजस्वलाऽस्मि ।
एकं च वासो मम मन्दबुद्धे
नेतुं सभां नार्हसि मामनार्य ॥ ३८

ततोऽब्रवीत् तां [1]प्रसभं प्रगृह्य
केशेषु कृष्णेषु तथा स कृष्णाम् ।
जिष्णुं च कृष्णं च हरिं नरं च
त्राणाय विक्रोशय याज्ञसेनि ॥ ३९

रजस्वला वा भव याज्ञसेनि
एकाम्बरा वाऽप्यथवा विवस्त्रा ।
द्यूते जिता चासि कृता च दासी
दासीषु कामं च यथोपजोषम् ॥ ४०

प्रकीर्णकेशी पतिता[2]र्द्धवस्त्रा
दुश्शासनेन व्यवधूयमाना ।
ह्रीमत्यमर्षेण च दह्यमाना
शनैरिदं वाक्यमुवाच कृष्णा ॥ ४१

द्रौपदी—

इमे सभायामुपदिष्टशास्त्राः
क्रियावन्तस्सर्व एवेन्द्रकल्पाः ।
गुरुस्थाना गुरवश्चैव सर्वे
तेषामग्रे नोत्सहे स्थातु[3]मेवम् ॥ ४२

नृशंसकर्मंस्त्वमनार्यवृत्त
मा मा विवस्त्रामिति मा [4]विकार्षीः ।

---

1. ख-घ—प्रहसन् । 2. ख-घ—र्धं ।
3. ख-ग-घ—मद्य । 4. क—विवक्षीः ।

न मर्षयेयुस्तव राजपुत्रास्
सेन्द्रा देवा यदि ते वै सभायाम् ॥ ४३

धर्मे स्थितो धर्मसुतश्च राजा
धर्मश्च सूक्ष्मो निपुणैश्च लक्ष्यः ।
न चापि भर्तुः परमाणुमात्रम्
इच्छामि दोषं स्वगुणान् विसृज्य ॥ ४४

इदं त्वनार्यं कुरुवीरमध्ये
रजस्वलां यत् परिकर्षसे माम् ।
न चापि कश्चित् कुरुते स्म पूजां
[1]बलं तवेदं [2]परमं त्ववेक्ष्य ॥ ४५

धिगस्तु नष्टः खलु भारतानां
धर्मस्तथा क्षत्रविदां च वृत्तम् ।
यत्र ह्यतीतां कुरुधर्मवेलां
प्रेक्षन्तिं सर्वे कुरवस्सभायाम् ॥ ४६

द्रोणस्य भीष्मस्य च नास्ति सत्वं
ध्रुवं तथैवाद्य महात्मनोऽपि ।
राज्ञस्तथा भीममधर्ममुग्रं
न लक्षयन्ते कुरुवृद्धमुख्याः ॥ ४७

1. क—ध्रुवं तवेदं मतमन्वपद्य ।
2. ख-ग-घ—परममन्ववेक्ष्य ।

[1]इमं प्रश्नमिमे ब्रूत सर्वे एव सभासदः ।
जितां वाऽप्यजितां वा मां मन्यध्वे सर्वभूमिपाः ॥ ४८

वैशम्पायनः—

तथा ब्रुवन्ती करुणं सुमध्यमा
कटाक्षेण भर्तॄन् कुपितानपश्यत् ।
सा पाण्डवान् कोपपरीतदेहान्
सन्दीपयामास कटाक्षपातैः ॥ ४९

हृतेन राज्येन तथा[2]विधेन
रत्नैश्च मुख्यैर्न तथा बभूव ।
यथाऽऽर्तिमत्कोपसमीरितेन
कृष्णाकटाक्षेण बभूव दुःखम् ॥ ५०

दुश्शासनश्चापि समीक्ष्य कृष्णाम्
अवेक्षमाणां कृपणान् पतींस्तान् ।
आधूय वेगेन विसंज्ञकल्पाम्
उवाच दासीति हसन्निवोग्रम् ॥ ५१

कर्णस्तु तद्वाक्यमतीव हृष्टस्
सम्पूजयामास हसन् सशब्दम् ।
गान्धारराजस्सुबलस्य पुत्रस्
तथैव दुश्शासनमभ्यनन्दत् ॥ ५२

1. ऊ—कोशे इदमर्धद्वयं नास्ति । 2. अ-क—धनेन

सभ्यास्तु ये तत्र बभूवुरन्ये
ताभ्यामृते धार्तराष्ट्रेण चैव ।
तेषामभूद्दुःखमतीव कृष्णां
दृष्ट्वा सभायां परिकृष्यमाणाम् ॥ ५३

**भीष्मः—**

[1]न धर्मसौक्ष्म्यात् सुभगे विवेक्तुं
शक्नोमि ते प्रश्नमिमं यथावत् ।
अस्वो ह्यशक्तः पणितुं परस्वं
स्त्रियाश्च भर्तुर्वशतां समीक्ष्य ॥ ५४

त्यजेत सर्वां पृथिवीं समृद्धां
युधिष्ठिरस्सत्यमथो न जह्यात् ।
उक्तं जितोऽस्मीति च पाण्डवेन
तस्मान्न शक्नोमि विवेक्तुमेतत् ॥ ५५

द्यूतेऽद्वितीयश्शकुनि[2]र्नरेषु
कुन्तीसुतस्तेन निसृष्टकामः ।
न मन्यते तां निकृतिं महात्मा
तस्मान्न ते प्रश्नमिमं ब्रवीमि ॥ ५६

1. क—दिष्टं विजानन् निस्सङ्गस् सर्वशास्त्रविशारदः ।
उवाच द्रौपदीं भीष्मस् तन्मतज्ञो महामतिः ॥ [अधिकः पाठः]

2. क—श्छलात्मा

द्रौपदी—

आहूय राजा कुशलैस्सभायां
दुष्टात्मभिर्नैकृतिकैरनार्यैः ।
द्यूतप्रियैर्नातिकृतप्रयत्नः
कस्मादयं [1]नाम निसृष्टकामः ॥ ५७

स शुद्धकामो निकृति[2]प्रवृत्तिम्
अबुध्यमानः कुरुपाण्डवाग्र्यः ।
सम्भूय सर्वैश्च जितोऽपि यस्मात्
पश्चाच्च यत् कैतवमभ्युपेतः ॥ ५८

तिष्ठन्ति चेमे कुरवस्सभायाम्
ईशास्सुतानां च तथा स्नुषाणाम् ।
समीक्ष्य सर्वे मम चापि वाक्यं
प्रब्रूत मे प्रश्नमिमं यथावत् ॥ ५९

न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत् सत्यं यच्छलेनानुविद्धम् ॥ ६०

वैशम्पायनः—

तथा ब्रुवन्तीं करुणं रुदन्तीम्
अवेक्षमाणामसकृत् पतींस्तान् ।

---

1. क—ह्यात्म । ख—नात्म  2. ख—प्रवृत्तेरबुध्यसानः

दुश्शासनः [1]परुषाण्यप्रियाणि
वाक्यान्युवाचामधुराणि मन्दः ॥ ६१

तां क्लिश्यमानां च रजस्वलां च
स्रस्तोत्तरीयामतदर्हमाणाम् ।
वृकोदरः प्रेक्ष्य युधिष्ठिरस्य
चकार रोषं परमार्त[2]रूपम् ॥ ६२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

॥ २७ ॥ द्यूतपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

[अस्मिन्नध्याये ६२ श्लोकाः]

---

## ॥ एकषष्टितमोऽध्यायः ॥

---

भीमवचनम् ॥ १ ॥ विकर्णवचनम् ॥ २ ॥ दुश्शासनेन द्रौपदीवस्त्रापहारः ॥ ३ ॥ श्रीकृष्णप्रसादात् द्रौपद्याः वस्त्रराशिप्रादुर्भावः ॥ ४ ॥ विदुरवचनम् ॥ ५ ॥

---

भीमः—

भवन्ति वेश्या [3]वर्धक्यः कितवानां युधिष्ठिर ।
न ताभिरपि दीव्यन्ति दया नैवास्ति ते विभो ॥ १

---

1. क—तां परुषाक्षराणि
2. क—रूपः
3. ख-च-ङ—वार्धक्यः

काश्यो यद्बलिमाहार्षीद् द्रव्यं यच्चान्यदुत्तमम् ।
तथाऽन्ये पृथिवीपाला यानि रत्नान्युपानयन् ॥ २
वाहनानि धनं चैव कवचान्यायुधानि च ।
राज्यमात्मा वयं चैव कैतवेन हृताः परैः ॥ ३
न च मे तत्र कोपोऽभूत् सर्वस्येशो हि नो भवान् ।
इदं त्वतिकृतं मन्ये द्रौपदी यत्र पण्यते ॥ ४
एषा ह्यनर्हती बाला पाण्डवान् प्राप्य कौरवैः ।
त्वत्कृते क्लिश्यते क्षुद्रैर् नृशंसैर्निकृतिप्रियैः ॥ ५
अस्याः कृते मन्युरयं त्वयि राजन् निपात्यते ।
बाहू ते सम्प्रधक्ष्यामि सहदेवाग्निमानय ॥ ६

अर्जुनः—

पुरा न भीमसेन त्वम् ईदृशं वदसे गिरम् ।
परैस्ते नाशितं नूनं नृशंसैर्धर्मगौरवम् ॥ ७
न सकामाः परे कार्या धर्ममेवाचरोत्तमम् ।
भ्रातरं धार्मिकं ज्येष्ठं नातिक्रमितुमर्हसि ॥ ८
आहूतोऽपि परै राजा क्षात्रं धर्ममनुस्मरन् ।
दीव्यते परकामेन तन्नः कीर्तिकरं महत् ॥ ९

भीमसेनः—

[1]एवमस्मिन् कृते विद्याम् यद्याह स्म धनञ्जय ।

---

1. ख-ग-घ-ङ—एवमस्य कृते विद्यामर्हस्याहं
अ-क—यद्यस्याहं । लक्षालङ्कारटीकायाम्—यद्याह स्म

दीप्तेऽग्नौ सहितौ बाहू प्रक्षिपेयं बलादिव ॥ १०

**वैशम्पायनः—**

तथा तान् दुःखितान् दृष्ट्वा पाण्डवान् धृतराष्ट्रजः ।
क्लिश्यमानां च पाञ्चालीं विकर्ण इदमब्रवीत् ॥ ११

**विकर्णः—**

याज्ञसेन्या यदुक्तं तद् वाक्यं विब्रूत पार्थिवाः ।
अविवेकेन वाक्यस्य नरकस्सद्य एव नः ॥ १२

भीष्मश्च धृतराष्ट्रश्च कुरुवृद्धतमावुभौ ।
समेत्य नाहतुः किञ्चिद् विदुरश्च महामतिः ॥ १३

भारद्वाजोऽपि सर्वेषाम् आचार्यः कृप एव च ।
कथमेतावपि प्रश्नं नाहतुर्द्विजसत्तमौ ॥ १४

ये त्वन्ये पृथिवीपालास् समेतास्सर्वतोदिशम् ।
कामक्रोधौ समुत्सृज्य ते ब्रुवन्तु यथामति ॥ १५

यदिदं द्रौपदी वाक्यम् उक्तवत्यसकृच्छुभम् ।
विमृश्य कस्य कः पक्षः पार्थिवा वदतोत्तरम् ॥ १६

**वैशम्पायनः—**

एवं स बहुशस्सर्वान् उक्तवांस्तान सभासदः ।
न च ते पृथिवीपालास् तमूचुस्साध्वसाधु वा ॥ १७

उक्त्वाऽसकृत् तथा सर्वान् विकर्णः पृथिवीपतीन् ।
पाणौ पाणिं विनिष्पिष्य निश्श्वसन्निदमब्रवीत् ॥ १८

विकर्णः—

विब्रूत पृथिवीपाला वाक्यं मा वा कथञ्चन ।
मन्ये न्याय्यं यदत्राहं तद्धि वक्ष्यामि कौरवाः ॥ १९

चत्वार्याहुर्मुनिश्रेष्ठा व्यसनानि महीक्षिताम् ।
मृगयां पानमक्षांश्च स्त्रीषु चैवातिसक्तताम् ॥ २०

एतेषु च नरस्सक्तो धर्ममुत्सृज्य वर्तते ।
तथाऽयुक्तेन च कृतां क्रियां लोको न पश्यति ॥ २१

तथेयं पाण्डुपुत्रेण व्यसने वर्तता भृशम् ।
[1]समाहूतेन कितवैर् आस्थिता द्रौपदी पणम् ॥ २२

साधारणी च सर्वेषां पाण्डवानामनिन्दिता ।
जितेन पूर्वं चानेन पाण्डवेन पणे कृता ॥ २३

इयं च कीर्तिता कृष्णा सौबलेन पणार्थिना ।
एतत् सर्वं विचार्याहं मन्ये न विजितामिमाम् ॥ २४

वैशम्पायनः—

एतच्छ्रुत्वा महान् नादस् सभ्यानामुदतिष्ठत ।
विकर्णं शंसमानानां सौबलं च विनिन्दताम् ॥ २५

तस्मिन्नुपरते शब्दे राधेयः क्रोधमूर्छितः ।
प्रगृह्य रुचिरं बाहुम् इदं वचनमब्रवीत् ॥ २६

1. ख-घ-ङ—समानीतेन कितवैराहिता द्रौपदी पणम् ।

कर्णः—

दृश्यन्ते वै विकर्णे तु वैकृतानि बहून्यपि ।

तज्जातस्तद्विनाशाय यथाऽग्निररणिप्रजः ॥ २७

व्याधिर्बलं नाशयते शरीरस्थोऽपि सम्भृतः ।

तृणानि पशवो घ्नन्ति स्वपक्षं चैव कौरवः ॥ २८

द्रोणो भीष्मः कृपो द्रौणिर् विदुरश्च महामतिः ।

धृतराष्ट्रश्च गान्धारी भवतः प्राज्ञवत्तराः ॥ २९

एते न किञ्चिदप्याहुश् चोद्यमानाश्च कृष्णया ।

धर्मेण विजितां कृष्णां मन्यन्ते च नृपात्मजाम् ॥ ३०

त्वं तु केवलबाल्येन धार्तराष्ट्र वदिष्यसि ।

[1]यद्ब्रवीपि सभामध्ये बालस्थविरभापितम् ॥ ३१

न च धर्मं यथावत् त्वं वेत्सि दुर्योधनावर ॥ ३१॥

यद्ब्रवीषि जितां कृष्णां न जितेति सुमन्दधीः ।

[2]कथं ह्यविजितां कृष्णां मन्यसे धृतराष्ट्रज ॥ ३२॥

यदा सभायां सर्वस्वं न्यस्तवान् पाण्डवाग्रजः ।

अभ्यन्तरांश्च सर्वस्वान् द्रौपदीं च नरर्षभः ॥ ३३॥

एवं धर्मजितां कृष्णां मन्यसे न जितां कथम् ॥ ३४

कीर्तिता द्रौपदी वाचाऽप्यनुज्ञाता च पाण्डवैः ।

1. ग-ङ—कोशयोः अर्धद्वयं नास्ति 2. अ—कोशे अर्धचतुष्टयं नास्ति

भवत्यविजिता केन हेतुनैषा मता तव ॥ ३५

अहं मन्ये सभामेताम् आनीतामेकवाससम् ।
अधर्मेणेति तत्रापि शृणु मे वाक्यमुत्तरम् ॥ ३६

एको भर्ता स्त्रियो देवैर् विहितः कुरुनन्दन ।
इयं त्वनेकवशगा वर्धकीति विनिश्चिता ॥ ३७

अस्यास्सभायां नयनं न चित्रमिति मे मतिः ॥ ३७॥
एकाम्बरधरत्वं वाऽप्यथवाऽपि विवस्त्रता ॥ ३८

यच्चैतद् द्रविणं किञ्चिद् या चैषा ये च पाण्डवाः ।
सौबलेनेह तत् सर्वं धर्मेण विजितं वसु ॥ ३९

दुश्शासन सुबालोऽयं विकर्णः प्राज्ञवादिकः ।
पाण्डवानां च वासांसि द्रौपद्याश्चाप्युपाहर ॥ ४०

वैशम्पायनः—

तच्छ्रुत्वा पाण्डवास्सर्वे स्वानि वासांसि भारत ।
अवकीर्योत्तरीयाणि सभायां समुपाविशन् ॥ ४१

ततो दुश्शासनो राजन् द्रौपद्या वसनं बलात् ।
सभामध्ये समाक्षिप्य व्यपाक्रष्टुं प्रचक्रमे ॥ ४२

[1]आकृष्यमाणे वसने विललाप सुदुःखिता ॥ ४२॥

---

1. अ—सा तत्काले तु गोविन्दे विनिवेशितमानसा ।
त्राहि मां कृष्ण कृष्णेति दुःखादेतदुदाहृता ॥ [अधिकः पाठः]

द्रौपदी—

[1]ज्ञातं मया वसिष्ठेन पुरा गीतं महात्मना ।
महत्यापदि सम्प्राप्ते स्मर्तव्यो भगवान् हरिः ॥ ४३॥

वैशम्पायनः—

गोविन्देति समाभाष्य कृष्णेति च पुनः पुनः ।
[2]मनसा चिन्तयामास देवं नारायणं प्रभुम् ॥ ४४॥
आपत्स्वभयदं कृष्णं लोकानां प्रपितामहम् ॥ ४५

द्रौपदी—

शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागताम् ॥ ४६
[3]हा कृष्ण द्वारकावास क्वासि यादवनन्दन ।
इमामवस्थां सम्प्राप्ताम् अनाथां किमुपेक्षसे ॥ ४७

वैशम्पायनः—

[4]कृष्णं च विष्णुं च हरिं नरं च
त्राणाय विक्रोशति याज्ञसेनी ।
ततस्तु धर्मोऽन्तरितो महात्मा
समावृणोद्विविधैर्वस्त्रपूगैः ॥ ४८

तस्य प्रसादाद्द्रौपद्याः कृष्यमाणेऽम्बरे तदा ।
तद्रूपमपरं वस्त्रं प्रादुरासीदनेकशः ॥ ४९
नानारागविरागाणि वसनान्यथ वै प्रभो ।

---

1. अ—कोशे अर्धद्वयं नास्ति
2. अ—कोशे अर्धद्वयं नास्ति
3. अ—कोशे अर्धद्वयं नास्ति
4. अ—कोशे अर्धषट्कं नास्ति

प्रादुर्भवन्ति शतशो धर्मस्य परिपालनात् ॥ ५०

ततो हलहलाशब्दस् तत्रासीद् घोरनिस्स्वनः ।
तदद्भुततमं लोके वीक्ष्य सर्वे[1] सभासदः ॥ ५१

धिग्धिगित्यनिशं वाचम् उत्सृजन् कौरवं प्रति ॥ ५१॥

यदा तु वाससां राशिस् सभामध्ये समाचितः ।
ततो दुश्शासनश्श्रान्तो व्रीडितस्समुपाविशत् ॥ ५२॥

शशाप तत्र भीमस्तु राजमध्ये महास्वनः ।
क्रोधाद्विष्फुरमाणोष्ठो विनिष्पिष्य करे करम् ॥ ५३॥

भीमः—

इदं मे वाक्यमादध्वं क्षत्रिया लोकवासिनः ।
नोक्तपूर्वं नरैरन्यैर् न चान्यो यद्वदिष्यति ॥ ५४॥

यद्येतदेवमुक्त्वा तु न कुर्यां पृथिवीश्वराः ।
पितामहानां पूर्वेषां नाहं गतिमवाप्नुयाम् ॥ ५५॥

अस्य पापस्य दुर्जातेर् भारतापशदस्य च ।
न पिबेयं बलाद्वक्षो भित्त्वा चेद्रुधिरं रणे ॥ ५६॥

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा सर्वलोकप्रहर्षणम् ।
प्रचक्रुर्बहुलां पूजां कुत्सन्तो धृतराष्ट्रजम् ॥ ५७॥

---

1. ख-ग-घ-ङ—महीक्षितः

[1]धिग्धिक्शब्दस्ततस्तत्र समभूद्रोमहर्षणः ।
सभ्यानां नरदेवानां दृष्ट्वा कुन्तीसुतांस्तदा ॥ ५८॥

न ब्रुवन्ति हि कौरव्याः प्रश्नमेतमिति स्म ह ।
सज्जनः क्रोशति स्मात्र धृतराष्ट्रं विगर्हयन् ॥ ५९॥

ततो बाहू समुद्धृत्य निवार्य च सभासदः ।
विदुरस्सर्वधर्मज्ञ इदं वचनमब्रवीत् ॥ ६०॥

विदुरः—

द्रौपदी प्रश्नमुक्त्वैवं रोरवीति ह्यनाथवत् ।
न च विब्रूत तं प्रश्नं सभ्या धर्मोऽत्र पीड्यते ॥ ६१॥

सभां प्रपद्यते प्रश्नः प्रज्वलन्निव हव्यवाट् ।
तं वै सत्येन धर्मेण सभ्याः प्रशमयन्त्युत ॥ ६२॥

धर्म्यं प्रश्नमतो ब्रूयाद् आर्यस्सभ्येषु मानवः ।
ते न ब्रूयुस्ततः प्रश्नं कामक्रोधवशानुगाः ॥ ६३॥

विकर्णेन यथाप्रज्ञम् उक्तः प्रश्नो नराधिपाः ।
भवन्तोऽपि हि तं प्रश्नं विब्रुवन्तु यथामति ॥ ६४॥

यो हि प्रश्नं न विब्रूयाद् धर्मदर्शी सभां गतः ।
अनृते या फलप्राप्तिस् तस्यास्सोऽर्धं समश्नुते ॥ ६५॥

यः पुनर्वितथं ब्रूयाद् धर्मदर्शी सभां गतः ।

1. अ-क—धिक्कारस्सुमहांस्तत्र

अनृतस्य फलं कृत्स्नं स प्राप्नोतीति निश्चयः ॥ ६६॥
अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराङ्गिरसस्य च ॥ ६७॥
प्रह्लादो नाम दैत्येन्द्रस् तस्य पुत्रो विरोचनः ।
कन्याहेतोराङ्गिरसं सुधन्वानमुपाद्रवत् ॥ ६८॥
अहं ज्यायानहं ज्यायान् इति कन्येप्सया तदा ।
तयोर्देवनमत्रासीत् प्राणयोरिति नश्श्रुतम् ॥ ६९॥
तयोः प्रश्नविवादोऽभूत् प्रह्लादं तावपृच्छताम् ।
ज्यायान् क आवयोरेकः प्रश्नं प्रब्रूहि मा मृषा ॥ ७०॥
स वै विवदनाद्भीतस् सुधन्वानमलोकयत् ।
तं सुधन्वाऽब्रवीत् क्रुद्धो ब्रह्मदण्ड इव ज्वलन् ॥ ७१॥

सुधन्वा—

यदि वै वक्ष्यसि मृषा प्रह्लादाथ न वक्ष्यसि ।
शतधा ते शिरो वज्री वज्रेण प्रहरिष्यति ॥ ७२॥

विदुरः—

सुधन्वना तथोक्तस्सन् व्यथितोऽश्वत्थपर्णवत् ।
जगाम कश्यपं दैत्यो धृतराष्ट्र महौजसम् ॥ ७३॥

प्रह्लादः—

त्वं वै धर्मस्य विज्ञाता दैवस्येहासुरस्य च ।
ब्राह्मणस्य महाप्राज्ञ धर्मकृच्छ्रमिदं शृणु ॥ ७४॥
यो हि प्रश्नं न विब्रूयाद् वितथं वा विनिर्दिशेत् ।

के च तस्य परे लोकास् तन्ममाचक्ष्व पृच्छतः ॥ ७५॥

कश्यपः—

प्रश्नान् यो हि न विब्रूयात् कामात् क्रोधाद्भयात् तथा ।
[1]सहस्रं वारुणान् पाशान् आत्मनि प्रतिमुञ्चति ॥ ७६॥

साक्षी च विब्रुवन् साक्ष्यं गोकर्णाशिथिलश्चरन् ।
सहस्रं वारुणान् पाशान् आत्मनि प्रतिमुञ्चति ॥ ७७॥

तस्य संवत्सरे पूर्णे पाश एकः प्रमुच्यते ।
तस्मात् सत्यं हि वक्तव्यं जानता सत्यमञ्जसा ॥ ७८॥

विद्धो धर्मोऽप्यधर्मेण सभां यत्रोपपद्यते ।
न चास्य शल्यं कृन्तन्ति विद्धास्सर्वे सभासदः ॥ ७९॥

अर्धं भजति वै श्रेष्ठः पादो भवति कर्तृषु ।
पादश्चैव सभासत्सु ये न निन्दन्ति निन्दितम ॥ ८०॥

अनेना भवति श्रेष्ठो मुच्यन्ते च सभासदः ।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥ ८१॥

वितथं तु वदेयुर्ये धर्मं प्रह्लाद पृच्छते ।
इष्टापूर्तं च ते घ्नन्ति सप्त चैव परावरान ॥ ८२॥

हृतस्वस्य च यद्दुःखं मृतपुत्रस्य चापि यत् ।
वैरिणा प्रतिपन्नस्य राज्ञा ग्रस्तस्य चापि यत् ॥ ८३॥

1. अ—कोशे इदमर्धं नास्ति

[1]स्त्रियाः पत्या विहीनायास् सार्थाद्भ्रष्टस्य चैव यत् ।
अपुत्रायाश्च यद्दुःखं व्याघ्राघ्रातस्य चैव यत् ॥ ८४॥

अध्यूढायाश्च यद्दुःखं साक्षिभिर्विहतस्य च ।
एतानि वै समान्याहुर् दुःखानि त्रिदशेश्वराः ॥ ८५॥

तानि दुःखानि सर्वाणि प्राप्नोति वितथं ब्रुवन् ॥ ८६

समक्षदर्शनात् [2]साक्ष्यं श्रवणाच्चेति धारणात् ।
तस्मात् सत्यं ब्रुवन् साक्षी धर्मार्थाभ्यां न हीयते ॥ ८७

विदुरः—

कश्यपस्य वचश्श्रुत्वा प्रह्लादः पुत्रमब्रवीत् ॥ ८७॥

प्रह्लादः—

श्रेयान् सुधन्वा त्वत्तो वै मत्तश्श्रेयांस्तथाऽङ्गिराः ।
माता सुधन्वनश्चैव श्रेयसी मातृतस्तव ॥ ८८॥

विरोचन सुधन्वाऽयं प्राणानामीश्वरस्तव ॥ ८९

सुधन्वा—

पुत्रस्नेहं परित्यज्य यस्त्वं धर्मे प्रतिष्ठितः ।
अनुजानामि ते पुत्रं जीवत्वेष शतं समाः ॥ ९०

विदुरः—

एवं वै परमं धर्मं श्रुत्वा सर्वे सभासदः ।
[3]यथाप्रश्नं याज्ञसेन्या मन्यध्वं तत्र किं परम् ॥ ९१

---

1. अ—कोशे अर्धद्वयं नास्ति  2. अ—सार्धं
3. ग-ङ—यथाप्रज्ञं

वैशम्पायनः—

विदुरस्य वचश्श्रुत्वा नोचुः किञ्चन पार्थिवाः ।
कर्णो दुश्शासनं त्वाह कृष्णां दासीं गृहान् नय ॥ ९२

तां वेपमानां सव्रीडां लोकयन्तीं च पाण्डवान् ।
दुश्शासनस्सभामध्ये विचकर्ष तपस्विनीम् ॥ ९३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

॥ २७ ॥ द्यूतपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

[अस्मिन्नध्याये ९३ श्लोकाः]

---

## ॥ द्विषष्टितमोऽध्यायः ॥

द्रौपदीवचनम् ॥ १ ॥ भीष्मकृतसमाधानम् ॥ २ ॥

---

द्रौपदी—

पुरस्तात् करणीयं मे न कृतं कार्यमुत्तमम् ।
विह्वलाऽस्मि कृताऽनेन कर्षता बलिना बलात् ॥ १

अभिवादं करोम्येषां कुरूणां कुरुसंसदि ।
न मे स्यादपराधोऽयं यदिदं न कृतं मया ॥ २

वैशम्पायनः—

सा तेन च समुद्धूता दुःखेन च तपस्विनी ।

पतिता [1]विललापैवं सभायामतथोचिता ॥ ३

द्रौपदी—

स्वयंवरे याऽस्मि नृपैर् दृष्टा रङ्गे समागतैः ।
अदृष्टपूर्वा चान्यत्र साऽहमद्य सभां गता ॥ ४

यां न वायुर्न चादित्यो दृष्टवन्तौ पुरा गृहे ।
साऽहमद्य सभामध्ये दृष्टाऽस्मि कुरुसंसदि ॥ ५

यां न मृष्यन्ति वातेन स्पृश्यमानां पुरा गृहे ।
स्पृश्यमानां सहन्तेऽद्य पाण्डवास्तां दुरात्मना ॥ ६

मृष्यन्ते कुरवश्चेमे मन्ये कालविपर्ययम् ।
स्नुषां दुहितरं चैव क्लिश्यमानामनर्हतीम् ॥ ७

किन्न्वतः कृपणं भूयो यदिदं स्त्री सती शुभा ।
[2]सभामध्ये विगाहेऽद्य क नु धर्मो महीक्षिताम् ॥ ८

धर्म्यं स्त्रियस्सभापूर्वं न नयन्तीति नश्श्रुतम् ।
स नष्टः कौरवेयेषु पूर्वो धर्मस्सनातनः ॥ ९

कथं हि भार्या पाण्डूनां पार्षतस्य स्वसा सती ।
वासुदेवस्य च सखी पार्थिवानां सभामिमाम् ॥ १०

मामिमां धर्मराजस्य भार्यां सदृशवर्णजाम् ।
ब्रूत दासीमदासीं मां किं करिष्यामि कौरवाः ॥ ११

1. अ-ग-घ-ङ—विह्वला चैव 2. ख-घ—सभामध्य विगाह्यद्य

अयं हि मां दृढं क्षुद्रः कौरवाणां यशोहरः ।
क्लिश्नाति नाहं तत् सोढुं चिरं शक्ष्यामि कौरवाः ॥ १२

जितां वाऽप्यजितां वाऽपि मन्यध्वे वा यथा नृपाः ।
तथा प्रत्युक्तमिच्छामि तत् करिष्यामि कौरवाः ॥ १३

भीष्मः—

उक्तवानस्मि कल्याणि धर्मस्यास्य परां गतिम् ।
लोके न शक्यते गन्तुम् अपि विप्रैर्महात्मभिः ॥ १४

बलवांस्तु यथा धर्मं लोके पश्यति पूरुषः ।
स धर्मो धर्मवेलायां भवत्यभिहतः परैः ॥ १५

न विवेक्तुं तु ते प्रश्नम् इमं शक्नोमि निश्चयात् ।
सूक्ष्मत्वाद्गहनत्वाच्च [1]कार्यस्यास्य च गौरवात् ॥ १६

नूनमन्तः कुलस्यास्य भविता न चिरादिव ।
तथा हि कुरवस्सर्वे लोभमोहपरायणाः ॥ १७

कुलेषु जाताः कल्याणि व्यसनाभ्याहता भृशम् ।
धर्म्यान्मार्गान्न च्यवन्ते [2]यथा नस्त्वं वधूस्स्थिता ॥ १८

उपपन्नं च पाञ्चालि तवेदं वृत्तमीदृशम् ।
यत् कृच्छ्रमपि सम्प्राप्ता धर्ममेवान्ववेक्षसे ॥ १९

1. अ-ख-ग-घ-ङ—धर्मस्या
2. क-ख-ग-ङ—यथातत्त्वव्यवस्थिताः ।

एते द्रोणादयश्चैव वृद्धा धर्मविदो जनाः ।
शून्यैश्शरीरैस्तिष्ठन्ति गतसत्त्वा इवानताः ॥ २०

युधिष्ठिरस्तु प्रश्नेऽस्मिन् प्रधानमिति मे मतिः ।
अजितां वा जितां वेति स्वयं व्याहर्तुमर्हति ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
॥ २७ ॥ द्यूतपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

## ॥ त्रिषष्टितमोऽध्यायः ॥

भीमादिभिर्दुर्योधनादिहननप्रतिज्ञा ॥ १ ॥ द्रौपद्या दुर्योधनादीनां शापदानसमये अन्तरिक्षात् पुष्पवृष्टिः ॥ २ ॥

वैशम्पायनः—

तथा [1]तु तां सर्वगुणोपपन्नां
रोरूयमाणां कुररीमिवार्ताम् ।
नोचुर्वचस्साध्वथवाऽप्यसाधु
महीक्षितो धार्तराष्ट्रस्य भीताः ॥ १

दृष्ट्वा तु [2]तान् पार्थिवपुत्रपौत्रांस्
तूष्णीम्भूतान् धृतराष्ट्रस्य पुत्रः ।

1. क-ख-घ—कृतां 2. ख-घ—तां

स्मयन्निवेदं वचनं बभाषे
पाञ्चालराजस्य सुतां तदानीम् ॥ २

दुर्योधनः—

तिष्ठत्वयं प्रश्न उदारसत्वे
भीमेऽर्जुने सहदेवे तथैव ।
पत्यौ च ते नकुले याज्ञसेनि
वदन्त्वेते वचनं त्वत्प्रसूतम् ॥ ३

अनीश्वरं विब्रुवन्त्वार्यमध्ये
युधिष्ठिरं तव पाञ्चालि हेतोः ।
कुर्वन्तु सर्वे चानृतं धर्मराजं
पाञ्चालि त्वं मोक्ष्यसे दासभावात् ॥ ४

धर्मे स्थितो धर्मराजो महात्मा
स्वयं चेदं कथयत्विन्द्रकल्पः ।
ईशो वा ते [1]ह्यनीशोऽथवैष
वाक्यादस्य क्षिप्रमेकं भजस्व ॥ ५

सर्वे हीमे कौरवेयास्सभायां
दुःखान्तरे वर्तमाना[2]स्सदैवम् ।
न विब्रुवन्त्यार्यवृत्ता यथावत्
पतींश्च ते समवेक्ष्याल्पभाग्यान् ॥ ६

---

1. अ-ख-घ—यद्यनीशो 2. क—स्त्वदर्थे ।

वैशम्पायनः—

ततस्सभ्याः कुरुराजस्य तत्र
वाक्यं सर्वे प्रशशंसुस्तथोच्चैः ।
चेलावेधांश्चापि चक्रुर्नदन्तो
हाहेत्यासीदपि चैवात्र नादः ॥ ७

सर्वे चासन् पार्थिवाः प्रीतिमन्तः
कुरुश्रेष्ठं धार्मिकं पूजयन्तः ॥ ७॥

युधिष्ठिरं च ते सर्वे समवैक्षन्त पार्थिवाः ।
किं नु वक्ष्यति धर्मात्मा इति साचीकृताननाः ॥ ८॥

किं नु वक्ष्यति बीभत्सुर् अजितो युधि पाण्डवः ।
भीमसेनो यमौ चेति भृशं कौतूहलान्विताः ॥ ९॥

तस्मिन्नुपरते शब्दे भीमसेनोऽब्रवीदिदम् ।
प्रगृह्य विपुलं वृत्तं भुजं चन्दनरूषितम् ॥ १०॥

भीमः—

यद्येष गुरुरस्माकं धर्मराजो युधिष्ठिरः ।
न प्रभुस्स्यात् कुलस्यास्य न वयं मर्षयेमहि ॥ ११॥

ईशो हि नः पुण्यतपाः प्राणानामपि चेश्वरः ।
मन्यते जितमात्मानं यद्येष विजिता वयम् ॥ १२॥

न हि मुच्येत जीवन् मे पदा भूमिमुपस्पृशन् ।
मर्त्यधर्मा परामृश्य पाञ्चाल्या मूर्धजानिमान् ॥ १३॥

पश्यध्वं ह्यायतौ वृत्तौ भुजौ मे [1]परिघाविव ।
नैतयोरन्तरं प्राप्य मुच्येतापि शतक्रतुः ॥ १४॥
[2]धर्मपाशस्थितस्त्वेवम् अधिगच्छामि सङ्कटम् ।
गौरवेण [3]निरुद्धोऽस्य निग्रहादर्जुनस्य च ॥ १५॥
धर्मराजनिसृष्टस्तु सिंहः क्षुद्रमृगानिव ।
धार्तराष्ट्रानिमान् पापान् निष्पिपेयं तलासिना ॥ १६॥

वैशम्पायनः—

एवमुक्त्वा महाबाहुं विष्फुरन्तं मुहुर्मुहुः ।
तमुवाच तदा भीष्मो द्रोणो विदुर एव च ॥ १७॥
[4]क्षाम्यतां क्षाम्यतामेवं सर्वं सम्भवति त्वयि* ॥ १८

कर्णः—

त्रयः किलेमे ह्यधना भवन्ति
दासश्शिष्यश्चास्वतन्त्रा च नारी ।
दासस्य पत्नी त्वधनस्य भद्रे
हीनेश्वरा दासधनं च दासी ॥ १९
प्रविश्य साऽन्तःपरिचारैर्भजस्व
तत् ते कार्यं दिष्टमाविश्य वेश्म ।

1. अ-क– परिघोपमौ ।　2. ख-घ—धर्मपाशावृत
3. अ-क—निरुद्धश्च　4. क-ख-ग-घ-ङ—शाम्यतां शाम्यतां
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

ईशाश्च सर्वे तव राजपुत्रि
भवन्ति ते धार्तराष्ट्रा न पार्थाः ॥ २०

अन्यं वृणीष्व पतिमाशु भामिनि
यस्य दास्यं न लभसि देवनेन ।
अनवद्या वै पतिषु कामवृत्तिर्
नित्यं तु दास्ये विदितं वै तवास्तु ॥ २१

पराजितो नकुलो भीमसेनो
युधिष्ठिरस्सहदेवोऽर्जुनश्च ।
दासीभूता प्रविशतु याज्ञसेनि
पराजितास्ते पतयो न सन्ति ॥ २२

प्रयोजनं जन्मनि किं तु मन्यते
पराक्रमं पौरुषं वेह पार्थः ।
पाञ्चाल्यस्य द्रुपदस्यात्मजां त्वां
सभामध्ये यो व्यदेवीद् ग्लहेषु ॥ २३

वैशम्पायनः—
[1]तच्च श्रुत्वा भीमसेनोऽत्यमर्षी
भृशं निशश्वास तदाऽर्तरूपः ।
राजानुजो धर्मपाशानुबद्धो
दहन्निवैनं क्रोधविरक्तचक्षुः ॥ २४

1. अ-क—तद्वै

भीमः—

नाहं कुप्ये [1]सूतपुत्राय राज-

न्निदं सत्यं दासधर्मं प्रविष्टः ।

किं विद्विषो वाक्यमाहारयेयुर्

नादेवीस्त्वं यद्यनया नरेन्द्र ॥ २५

वैशम्पायनः—

राधेयस्य वचश्श्रुत्वा राजा दुर्योधनस्तदा ।

युधिष्ठिरमुवाचेदं तूष्णीम्भूतमचेतनम् ॥ २६

दुर्योधनः—

भीमार्जुनौ यमौ चैव स्थितौ नृपतिशासने ।

प्रश्नं ब्रूहि च कृष्णां त्वम् अजितां यदि मन्यसे ॥ २७

वैशम्पायनः—

एवमुक्त्वा स कौन्तेयम् अपोह्य वसनं स्वकम् ।

स्मयन्नैक्षत पाञ्चालीम् ऐश्वर्यमदमोहितः ॥ २८

कदलीकाण्डसदृशं सर्वलक्षणपूजितम् ।

गजहस्तप्रतीकाशं वज्रप्रतिमगौरवम् ॥ २९

अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव ।

द्रौपद्याः प्रेक्षमाणायाः सव्यमूरुमदर्शयन् ॥ ३०

वृकोदरस्तदालोक्य नेत्रे उत्पाद्य लोहिते ।

---

1. अ-क—सूतपुत्रस्य

प्रोवाच राजमध्ये तं सभां विश्रावयन्निव ॥ ३१

भीमः—

पितृभिस्सह सालोक्यं मा स्म गच्छेद्वृकोदरः ।
यद्येतमूरुं गदया न भिन्द्यात् ते महाहवे ॥ ३२

वैशम्पायनः—

क्रुद्धस्य तस्य सर्वेभ्यस् स्रोतोभ्यः पावकार्चिषः ।
वृक्षस्येव विनिश्चेरुः कोटरेभ्यः प्रदह्यतः ॥ ३३

विदुरः—

परं भयं पश्यत भीमसेनाद्
बुध्यध्वं वै वरुणस्येव पाशात् ।
दैवेरितो नूनमयं पुरस्तात्
परोऽनयो भरतेषूदपादि ॥ ३४

अतिद्यूतं कृतमिदं धार्तराष्ट्रा
येऽस्यां स्त्रियां विवदध्वे सभायाम् ।
योगक्षेमो दृश्यते नैव राजन्
परीतात्मानः कुरवो मन्त्रयन्ते ॥ ३५

इमं धर्मं कुरवो जानताशु
ध्वस्ते धर्मे परिषत् सम्प्रदुष्येत् ।
इमां चेत् पूर्वं कितवोऽग्लहिष्य-
न्नैषाऽभविष्यदपराजितात्मा ॥ ३६

स्वप्ने यथैतद्धि धनं जितं स्यात्
तथैव मन्ये यदि दीव्यत्यनीशः ।
गान्धारपुत्रस्य वचो निशम्य
धर्मादस्मात् कुरवो माऽपगात ॥ ३७

दुर्योधनः—
भीमस्य वाक्ये तद्वदेवार्जुनस्य
स्थितोऽहं वै यमयोश्चैवमेव ।
[1]युधिष्ठिरश्चेद्विवदन्त्यनीशं
तदा दास्यान्मोक्ष्यते याज्ञसेनी ॥ ३८

अर्जुनः—
ईशो राजा पूर्वमासीद् ग्लहे नः
कुन्तीपुत्रो धर्मराजो महात्मा ।
ईशस्त्वयं कस्य पराजितात्मा
तज्जानीध्वं कुरवस्सर्व एव ॥ ३९

कर्णः—
दुश्शासन निबोधेदं वचनं मे प्रभाषितम् ।
किमनेन चिरं वीर नयस्व द्रुपदात्मजाम् ॥ ४०
दासीभावेन भुङ्क्ष्व त्वं यथेष्टं कुरु मानद ॥ ४०॥

वैशम्पायनः—
ततो गान्धारराजस्य पुत्रश्शकुनिरब्रवीत् ।

---

1. अ—युधिष्ठिरश्चेद्विवदत्वनीशं

साधु कर्ण महाबाहो यथेष्टं क्रियतामिति ॥ ४१॥

ततो दुश्शासनस्तूर्णं द्रुपदस्य सुतां बलात् ।
प्रवेशयितुमारब्धस् स चाकर्षद्दुरात्मवान् ॥ ४२॥

ततो विक्रोशती वेगात् पाञ्चाली देववर्णिनी ॥ ४३

द्रौपदी—

परित्रायस्व मां भीष्म द्रोण द्रौणे तथा कृप ।
परित्रायस्व विदुर धर्मिष्ठो धर्मवत्सल ॥ ४४

धृतराष्ट्र महाराज परित्रायस्व वै स्नुषाम् ।
गान्धारि त्वं महाभागे सर्वज्ञे सर्वदर्शिनि ॥ ४५

परित्रायस्व मां देवि सुयोधन[1]पराजिताम् ॥ ४५॥

त्वमार्ये वीरजननि किं मां पश्यसि यादवीम् ।
क्लिश्यमाना[2]मनार्यैर्मां त्रायस्वैनां स्वकां वधूम् ॥ ४६॥

यदि लालप्यमानां मां न कश्चित् किञ्चिदब्रवीत् ।
हा हताऽस्मि सुमन्दात्मा दुर्योधनवशं गता ॥ ४७॥

न वा पाण्डुर्नरपतिर् न धर्मो न च देवराट् ।
न वायुर्नाश्विनौ वाऽपि परित्रायन्ति वै स्नुषाम् ॥ ४८॥

धिक् कष्टं यदहं जीवे मन्दभाग्या पतिव्रता ॥ ४९

1. अ-क—भयार्दिताम् ।
2. क—मनार्येण न त्रायसि वधूं स्वकाम् ।

विदुरः—

श्रृणोमि वाक्यं तव राजपुत्रि

[1]नेमे पार्थाः किञ्चिदपि ब्रुवन्ति ।

सा त्वं प्रियार्थं श्रृणु वाक्यमेतद्

यदुच्यते पापमतिः कृतघ्नः ॥ ५०

सुयोधनस्सानुचरस्सुदुष्टस्

सहैव राजा विकृतस्सूनुना च ।

य एव वाक्यं महदुच्यमानं

न श्रोष्यते पापमतिस्सुदुष्टः ॥ ५१

वैशम्पायनः—

इत्येवमुक्त्वा द्रुपदस्य पुत्रीं

क्षत्ताऽब्रवीद्धृतराष्ट्रस्य पुत्रम् ॥ ५१॥

विदुरः—

मा क्लिश्यतां वै द्रुपदस्य पुत्री

मा त्वं [2]चान्तं द्रक्ष्यसि राजपुत्र ॥ ५२

वैशम्पायनः—

तमेवमुक्त्वा प्रथमं धृतराष्ट्रमुवाच ह ॥ ५२॥

विदुरः—

यद्येवं त्वं महाराज संक्लेशयसि द्रौपदीम् ॥ ५३

---

1. ग-ङ—न वै पापाः 2. अ—चारी। क—चारीं।

अचिरेणैव कालेन पुत्रस्ते सह मन्त्रिभिः ।
गमिष्यति क्षयं पापः पाण्डवाप्रियकारकः ॥ ५४
भीमार्जुनाभ्यां क्रुद्धाभ्यां माद्रीपुत्रद्वयेन च ॥ ५४॥
तस्मान्निवारय सुतं मा विनाशं विचिन्तय ॥ ५५

वैशम्पायनः—
एतच्छ्रुत्वा मन्दबुद्धिर् नोत्तरं किञ्चिदब्रवीत् ॥ ५५॥
ततो दुर्योधनस्तत्र दैवमोहबलात्कृतः ।
अचिन्त्य क्षत्तुर्वचनं हर्षेणायतलोचनः ॥ ५६॥
[1]ऊरू दर्शयते पापो द्रौपद्या वै मुहुर्मुहुः ॥ ५७
ऊरौ सन्दर्श्यमाने तु निरीक्ष्य तु सुयोधनम् ।
वृकोदरस्तदालोक्य नेत्रे [2]उत्पाद्य लोहिते ॥ ५८

एतत् समीक्ष्यात्मनि चावमानं
नियम्य मन्युं बलवान् स मानी ।
राजानुजस्संसदि कौरवाणां
विनिष्क्रमन् वाक्यमुवाच भीमः ॥ ५९

भीमः—
अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः ।
शकुनिं चाक्षकितवं सहदेवो हनिष्यति ॥ ६०

---

1. अ—पाञ्चाल्यां क्लिश्यमानायां निरीक्षन्ते स्म कौरवाः ।
[अधिकः पाठः]

2. क—उत्पाटय

इदं च भूयो वक्ष्यामि सभामध्ये बृहद्वचः ।
सत्यं देवाः करिष्यन्ति यदा युद्धं भविष्यति ॥ ६१

सुयोधनमिमं पांप हन्तास्मि गदया युधि ।
शिरः पादेन चास्याहम् अधितिष्ठामि भूतले ॥ ६२

वक्षश्शूरस्य निर्भिद्य परुषस्य दुरात्मनः ।
दुश्शासनस्य रुधिरं पातास्मि मृगराडिव ॥ ६३

अर्जुनः—

भीमसेन न ते सन्ति येषां वैरं त्वया सह ।
मन्दा गृहेषु सुखिनो न बुद्ध्यन्ते महद्भयम् ॥ ६४

न च वाचा व्यवसितं भीम विज्ञायते सताम् ।
यदि स्थास्यन्ति सङ्ग्रामे क्षत्रधर्मेण वै सह ॥ ६५

दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुश्शासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ६६

[1]असूनृतानां शत्रूणां प्रहृष्टानां दुरात्मनाम् ।
भीमसेन नियोगात् ते हन्ताऽहं कर्णमाहवे ॥ ६७

कर्णं कर्णानुगांश्चैव रणे हन्तास्मि पत्रिभिः ॥ ६७॥

ये चान्ये प्रतियोत्स्यन्ति बुद्धिमोहेन मां नृपाः ।

---

1. अ—अद्यानृतारं वक्तारं प्रहृष्टानां दुरात्मनाम् ।
क—संसूचितारं वैराणां
ख-घ—असूयितारं वीराणां प्रहृष्टानां

तान् स्म सर्वांश्छितैर्बाणैर् नेतास्मि यमसादनम् ॥ ६८॥
चलेद्धि हिमवान् स्थानान्निष्प्रभस्स्याद्दिवाकरः ।
शैत्यं सोमात् प्रणश्येत मत्सत्यं विचलेद्यदि ॥ ६९॥

वैशम्पायनः—

इत्युक्तवति पार्थे तु श्रीमान् माद्रवतीसुतः ॥
प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान् ॥ ७०॥
सौबलस्य वधप्रेप्सुर् इदं वचनमब्रवीत् ।
क्रोधसंरक्तनयनो निश्वसन्निव पन्नगः ॥ ७१॥

सहदेवः—

अक्षान् यान् मन्यसे मूढ गान्धाराणां यशोहर ।
नैतेऽक्षा निशिता बाणा ये त्वया समरे धृताः ॥ ७२॥
यथा चैवोक्तवानार्यस् त्वामुद्दिश्य सबान्धवम् ।
कर्ताऽहं कर्मणस्तस्य कुरु कार्याणि सर्वशः ॥ ७३॥
[1]यदि स्थास्यसि सङ्ग्रामे क्षत्रधर्मेण सौबल ॥ ७४

वैशम्पायनः—

सहदेववचश्श्रुत्वा नकुलोऽपि विशाम्पते ।
दर्शनीयतमो नृणाम् इदं वचनमब्रवीत् ॥ ७५

नकुलः—

सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन् धृतराष्ट्रजैः ।

---

1. क-ख-ग-घ-ङ—हन्तास्मि तरसा युद्धे त्वामुद्दिश्य सबान्धवम् ।
[अधिकः पाठः]

यैर्वाचश्श्राविता रूक्षास् स्थितैर्दुर्योधनप्रियैः ॥ ७६

धार्तराष्ट्रान् सुदुर्वृत्तान् मुमूर्षून् कालचोदितान् ।
दर्शयिष्यामि भूयिष्ठम् अहं वैवस्वतक्षयम् ॥ ७७

उलूकं च दुरात्मानं सौबलस्य प्रियं सुतम् ।
हन्ताऽहमस्मि समरे मम शत्रुं नराधमम् ॥ ७८

निदेशाद्धर्मराजस्य द्रौपद्याः पदवीं चरन् ।
निर्धार्तराष्ट्रां पृथिवीं कर्तास्मि न चिरादिव ॥ ७९

द्रौपदी—

यस्माच्चोरुं दर्शयसे यस्माच्चोरुं निरीक्षसि ।
तस्मात् तवाप्यधर्मिष्ठ ऊरौ मृत्युर्भविष्यति ॥ ८०

यस्माच्चैवं क्लेशयति भ्राता ते मां दुरात्मवान् ।
तस्माद्रुधिरमेवास्य पास्यते वै वृकोदरः ॥ ८१

इमं च पापिष्ठमार्तिं कर्णं ससुतबान्धवम् ।
सामात्यं सपरीवारं हनिष्यति धनञ्जयः ॥ ८२

[1]क्षुद्रधर्मं नैकृतिकं शकुनिं पापचेतसम् ।
सहदेवो रणे क्रुद्धो हनिष्यति सबान्धवम् ॥ ८३

वैशम्पायनः—

इत्येवमाह वचनं द्रौपदी धर्मदर्शिनी ।
ततोऽन्तरिक्षात् सुमहत् पुष्पवर्षमवापतत् ॥ ८४

---

1. क-ख-ग-घ-ङ—अक्षुद्रः क्षुद्रकर्माणं

मूर्ध्न्यदृश्यत पाञ्चाल्यास् साधुशब्दश्च सर्वशः[1] ॥ ८४॥
[2]तेषां तु वचनं श्रुत्वा नोचुस्तत्र सभासदः ।
अर्जुनस्य भयाद्राजन्नभून्निश्शब्दमत्र वै* ॥ ८५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
॥ २७ ॥ द्यूतपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये ८५॥ श्लोकाः]

---

## ॥ चतुष्षष्टितमोऽध्यायः ॥

धृतराष्ट्रेण द्रौपद्याः प्रार्थनया पाण्डवानामदासत्ववरदानम् ॥ १ ॥

---

वैशम्पायनः—

द्रौपद्या वचनं श्रुत्वा चुकोपाथ धनञ्जयः ।
स तदा क्रोधताम्राक्ष इदं वचनमब्रवीत् ॥ १

अर्जुनः—

कर्णं हन्तास्मि समरे सपुत्रं सहबान्धवम् ॥ १॥
यस्याश्रयात् स्वयं पापो धार्तराष्ट्रः प्रगर्जति ।
तं समूलं हनिष्यामि सूतं तं बलशालिनम् ॥ २॥

---

1. क-ख-ग-घ-ङ—ततोऽर्जुनो वचश्श्रुत्वा प्रतिज्ञां कुरुते दृढाम् ।
[अधिकः पाठः]

2 क-ख-ग-घ-ङ—कोशेषु उत्तराध्याये वर्तमानाः १॥ - ६ - श्लोका अस्मिन्नेवाध्याये दृश्यन्ते ।

* क-ख-ग-घ-ङ—कोशेषु नात्राध्यायसमाप्तिर्दृश्यते

ये चापरे च योत्स्यन्ति धार्तराष्ट्रास्सबान्धवाः ।
तान् सर्वान् निहनिष्यामि सत्येनायुधमालभे ॥ ३॥

अद्यैवाहं हनिष्यामि सर्वानेतान् सभासदः ।
अतीव कोपो भवति दृष्ट्वेमां द्रुपदात्मजाम् ॥ ४॥
किन्त्वहं वै करिष्यामि यद्राजा सततं घृणी ॥ ५
अथवाऽहं मुहूर्तेन कृत्स्नं नृपतिमण्डलम् ।
शस्त्रैर्नयिष्ये सदनं यमस्यामित्रकर्शिनः ॥ ६
अयं तु मां वारयते धर्मराजो युधिष्ठिरः ॥ ६॥

वैशम्पायनः—

इत्युक्त्वा क्रोधताम्राक्षो धनुरादाय वीर्यवान् ।
सव्यसाची समुत्पत्य ताञ्छत्रून् समुदैक्षत ॥ ७॥

उद्यन्तं फल्गुनं तत्र ददृशुस्सर्वपार्थिवाः ।
युगान्ते सर्वलोकांस्तु दहन्तमिव पावकम् ॥ ८॥
वीक्षमाणं धनुष्पाणिं निश्श्वसन्तं मुहुर्मुहुः ।
हन्तुकामं पशून् क्रुद्धं रुद्रं दक्षक्रतौ यथा ॥ ९॥
तथाभूतं नृपा दृष्ट्वा विषेदुस्त्रस्तमानसाः ।
धनञ्जयस्य वीर्यज्ञा निराशा जीविते तदा ॥ १०॥
मृतभूता भवन् सर्वे नेत्रैरनिमिषैरिव ॥ ११

अर्जुनं धर्मपुत्रं च समुदैक्षन्त पार्थिवाः ।
क्रुद्धं तदाऽर्जुनं दृष्ट्वा पृथिवी च चचाल ह ॥ १२
खेचराणि च भूतानि वित्रेसुर्वै भयार्दिताः ।
नादित्यो विरराजाथ नापि वाति च मारुतः ॥ १३
न चन्द्रो न च नक्षत्रं द्यौर्दिशो न [1]व्यभाव्यत ।
सर्वमाविद्धमभवज् जगत् स्थावरजङ्गमम् ॥ १४
उत्पतन् स बभौ पार्थो दिवाकर इवाम्बरे ॥ १४॥
पार्थं दृष्ट्वा[2]न्तरे क्रुद्धं कालान्तकयमोपमम् ।
भीमसेनो मुदा युक्तो युद्धायैव मनो दधे ॥ १५॥
पाञ्चाली च ददर्शाथ सुसङ्क्रुद्धं धनञ्जयम् ।
हन्तुकामं रिपून् सर्वान् सुपर्णमिव पन्नगान् ॥ १६॥
दुष्प्रेक्षस्सोऽभवत् क्रुद्धो युगान्ताग्निरिव ज्वलन् ।
तं दृष्ट्वा तेजसाऽऽविष्टं विव्यधुः पुरवासिनः ॥ १७॥
उत्पतन्तं तु वेगेन ततो दृष्ट्वा धनञ्जयम् ।
जग्राह स ततो राजा पुरुहूतो यथा हरिम् ॥ १८॥
उवाच स घृणी ज्येष्ठो धर्मराजो युधिष्ठिरः ॥ १९

युधिष्ठिरः—
मा पार्थ साहसं कार्षीर् मा विनाशं गमेर्यशः ।

---

1. अ-क—विभान्ति च। ख-घ—व्यभाव्यतः।
2. अ-क—तथा। ख-घ—यथा।

[1]अहमेतं पापमतिं [2]सूतं दग्धुं समुत्सहे ॥ २०
किन्त्वस्य चरणौ दृष्ट्वा क्रोधो नाशमुपैति मे ।

त्वमिमं जगतोऽर्थे वै कोपं संयच्छ पाण्डव ॥ २१

वैशम्पायनः—

एवमुक्तस्तदा राज्ञा पाण्डवोऽथ धनञ्जयः ।
क्रोधं संशमयन् पार्थो धार्तराष्ट्रं प्रति स्थितः ॥ २२

तस्मिन् वीरे प्रशान्ते तु पाण्डवे फल्गुने ततः ।
सर्वं प्रहृष्टमभवज् जगत् स्थावरजङ्गमम् ॥ २३

वारितं च ततो दृष्ट्वा भ्रात्रा पार्थं वृकोदरः ।
बभूव विमना राजन्नभून्निःशब्दमत्र वै ॥ २४

ततो राज्ञो धृतराष्ट्रस्य गेहे
गोमायुरुच्चैर्व्याजहाराग्निहोत्रे ।
तं रासभाः प्रत्यवाश्यन्त राजन्
समन्ततः पक्षिणश्चैव रौद्राः ॥ २५

तं वै शब्दं विदुरस्तत्त्ववेदी
शुश्राव घोरं सुबलात्मजा च ।

1. अ—पापं त्विमं पापमतिम् अहं वै हन्तुमुत्सहे ।
क—पापं त्विमं पापमतिं स भवान् हन्तुमुत्सहेद् ।
2. ख-च—सूतजं दग्धुमुत्सहे ।

भीष्मो द्रोणो गौतमश्चैव विद्वान्
स्वस्ति स्वस्तीत्यब्रुवन् सर्व एव ॥ २६

ततो गान्धारी विदुरश्चैव विद्वांस्
तमुत्पातं घोरमालक्ष्य राज्ञे ।
निवेदयामासतुरार्तवत् तदा
ततो राजा वाक्यमिदं बभाषे ॥ २७

धृतराष्ट्रः—

हतोऽसि दुर्योधन मन्दबुद्धे
यस्त्वं सभायां कुरुपुङ्गवानाम् ।
स्त्रियं समाकर्षसि दुर्विनीत
विशेषतो द्रौपदीं धर्मपत्नीम् ॥ २८

वैशम्पायनः—

[1]एतावदुक्त्वा धृतराष्ट्रो मनीषी
हितान्वेषी बान्धवाना[2]मपायात् ।
कृष्णां पाञ्चालीमब्रवीत् सान्त्वपूर्वं
विमृश्यैतत् प्रज्ञया मन्दबुद्धिः ॥ २९

धृतराष्ट्रः—

वरं वृणीष्व पाञ्चालि मत्तो यदभिकाङ्क्षितम् ।

1. ख-ब—एवमुक्तो ।
2. ख-ब—मुपेयात् ।

वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती ॥ ३०

द्रौपदी—

ददासि चेद्वरं मह्यं वृणोमि भरतर्षभ ।
सर्वधर्मानुगश्श्रीमान् अदासोऽस्तु युधिष्ठिरः ॥ ३१

मनस्विनमजानन्तो मैवं ब्रूयुः कुमारकाः ।
एष वै दासपुत्रेति प्रतिविन्ध्यं ममात्मजम् ॥ ३२

राजपुत्रः पुरा भूत्वा यथा नान्यः पुमान् क्वचित् ।
लालितो दासपुत्रत्वं पश्यन्नश्येद्धि भारत ॥ ३३

धृतराष्ट्रः—

एवं भवतु कल्याणि यथा त्वमभिभाषसे ।
द्वितीयं ते वरं भद्रे ददामि वरयस्व माम् ॥ ३४

मनो हि मे वितरति नैकं त्वं वरमर्हसि ॥ ३४॥

द्रौपदी—

सरथौ सधनुष्कौ च भीमसेनधनञ्जयौ ।
नकुलस्सहदेवश्च द्वितीयं वरये वरम् ॥ ३५॥

धृतराष्ट्रः—

तृतीयं वरयास्मत्तो नासि द्वाभ्यां सुसत्कृता ।
त्वं हि सर्वस्नुषाणां मे श्रेयसी धर्मचारिणी ॥ ३६॥

द्रौपदी—

लोभो धर्मविनाशाय भगवन् नाहमुत्सहे ।

अनर्हो वरमादातुं तृतीयं राजसत्तम ॥ ३७॥
एकमाहुर्वैश्यवरं द्वौ वरौ क्षत्रियास्त्रियाः ।
त्रयस्तु राज्ञां राजेन्द्र ब्राह्मणस्य शतं वराः ॥ ३८॥
पापीयांस इमे भूत्वा सन्तीर्णाः पतयो मम ।
[1]वेत्स्यन्ति चैव भद्राणि राजन् पुण्येन कर्मणा ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
॥ २७ ॥ द्यूतपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[अस्मिन्नध्याये ३९॥ श्लोकाः]

## ॥ पञ्चषष्टितमोऽध्यायः ॥

कर्णप्रलपितम् ॥ १ ॥ क्रुद्धं भीमं निवार्य युधिष्ठिरस्य धृतराष्ट्रसमीपगमनम् ॥ २ ॥ पाण्डवानामिन्द्रप्रस्थगमनम् ॥ ३ ॥

कर्णः—

या नश्श्रुता मनुष्येषु स्त्रियो रूपेण सम्मताः ।
यासामेतादृशं कर्म न कस्या[2]श्चिन्निशाम्यते ॥ १
क्रोधाविष्टेषु पार्थेषु धृतराष्ट्र[3]सुतेन च ।
द्रौपदी पाण्डुपुत्राणां कृष्णा शान्तिरिवाभवत् ॥ २

1. ग-ङ—लप्स्यन्ति । 2. ख-घ—श्च निशम्यते ।
3. अ-क-घ—सुतेषु च ।

अप्लवेऽम्भसि मग्नानाम् अप्रतिष्ठे निमज्जताम् ।
पाञ्चाली पाण्डुपुत्राणां [1]पारगा नौरिवाभवत् ॥ ३

वैशम्पायनः—

तद्वै श्रुत्वा भीमसेनः कुरुमध्येऽत्यमर्षणः ॥
स्त्री गतिः पाण्डुपुत्राणाम् इत्युवाच सुदुर्मनाः । ४

भीमः—

त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत् ।
[2]युद्धेऽपराङ्मुखत्वं च आहूतस्यानिवर्तनम् ॥ ५
दाराणां रक्षणं चैव इति तज्ज्योतिषां त्रयम् ॥ ५॥
अपत्यं कर्म विद्या च यतस्सृष्टाः प्रजास्ततः ॥ ६
अमेध्ये वै गतप्राणे शून्ये ज्ञातिभिरुज्झिते।
देहे त्रितयमेवैतत् पुरुषस्योपजायते ॥ ७
तन्नो ज्योतिरुपहतं दाराणामभिमर्शनात् ।
[3]धनञ्जय कथं स्वित् स्याद् अपत्यमभिमृष्टजम् ॥ ८

धनञ्जयः—

न चैवोक्ता न चानुक्ता हीनतः परुषा गिरः ।

---

1. अ-ख-घ—नौरेषा पारगाऽभवत् ।
2. अ—कोशे अर्धद्वयं नास्ति ।
3. अ—कथं ज्यायः कथं स्वस्यात्तदपत्यमभीष्टजम् ।
तन्नो ज्योतिर्विरहितैर्दारस्याद्याभिमर्शनात् ।
धनञ्जय कथं किं स्यादनपत्याभिमृष्टजम् । [अधिकः पाठः]

भारत प्रतिजल्पन्ति सदा तूत्तमपूरुषाः ॥ ९
स्मरन्ति सुकृतान्येव न वैराणि कृतानि च ।
सन्तः प्रतिविजानन्ति लब्ध्वा प्रत्ययमात्मनः ॥ १०

भीमः—

इहैवैतानहं सर्वान् हन्मि शत्रून् समागतान् ।
अथ निष्क्रम्य राजेन्द्र आमूलाद्धन्मि भारत ॥ ११
किं नो विवदितेनेह किं नः क्लेशेन चैव ह ।
अद्य चैनान् निहत्येह प्रशाधि वसुधामिमाम् ॥ १२

वैशम्पायनः—

इत्युक्त्वा भीमसेनस्तु कनिष्ठैर्भ्रातृभिर्वृतः ।
मृगमध्ये यथा सिंहो मुहुः परिघमैक्षत ॥ १३
सान्त्व्यमानो वार्यमाणः पार्थेनाक्लिष्टकर्मणा ।
स्विद्यते च महाबाहुर् अन्तर्दाहेन वीर्यवान् ॥ १४
क्रुद्धस्य तस्य स्रोतोभ्यः कर्णादिभ्यो नराधिप ।
सधूमस्सस्फुलिङ्गार्चिः पावकस्समजायत ॥ १५
भ्रुकुटीपुटदुष्प्रेक्ष्यम् अभवत् तस्य तन्मुखम् ।
युगान्तकाले सम्प्राप्ते कृतान्तस्येव रूपिणः ॥ १६
युधिष्ठिरस्तमावार्य बाहुना बाहुशालिनम् ।
मैवमित्यब्रवीच्चैनं जोषमास्स्वेति भारत ॥ १७

निवार्य तं महाबाहुं कोपसंरक्तलोचनम् ।
पितरं समुपातिष्ठद् धृतराष्ट्रं कृताञ्जलिः* ॥ १८

युधिष्ठिरः—
राजन् किं करवामस्ते प्रशाध्यस्मांस्त्वमीश्वरः ।
नित्यं हि स्थातुमिच्छामस् तव भारत शासने ॥ १९

धृतराष्ट्रः—
अजातशत्रो भद्रं ते अरिष्टं स्वस्ति गच्छत ।
अनुज्ञातास्सहधनास् स्वराज्यमनुशासत ॥ २०

इदं त्वेवावबोद्धव्यं वृद्धस्य मम शासनम् ।
मया निगदितं कृत्स्नं पश्य निश्श्रेयसं परम् ॥ २१

वेत्थ त्वं तात धर्माणां गतिं सूक्ष्मां युधिष्ठिर ।
विनीतोऽसि महाप्राज्ञ वृद्धानां पर्युपासिता ॥ २२

यतो बुद्धिस्ततश्शान्तिः प्रशमं गच्छ भारत ।
नादारौ क्रमते शस्त्रं दारौ शस्त्रं निपात्यते ॥ २३

न वैराण्यभिजानन्ति गुणान् पश्यन्ति नागुणान् ।
विरोधं नाधिगच्छन्ति नित्यमुत्तमपूरुषाः ॥ २४

संवादे परुषाण्याहुर् युधिष्ठिर नराधमाः ।
प्रत्याहुर्मध्यमास्त्वेतेऽनुक्ताः परुषमुत्तरम् ॥ २५

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

नैवोक्ता नैव चानुक्ता हीनतः परुषा गिरः ।
अतिजल्पन्ति वै धीरास् सदा तूत्तमपूरुषाः ॥ २६
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।
सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः ॥ २७
तथा चरितमार्येण त्वयाऽस्मिन् सत्समागमे ।
दुर्योधनस्य पारुष्यं तत् तात हृदि मा कृथाः ॥ २८
मातरं चैव गान्धारीं मां च त्वद्गुणकाङ्क्षिणम् ।
उपस्थितं वृद्धमन्धं पितरं पश्य भारत ॥ २९
प्रेक्षापूर्वं मया द्यूतम् इदमासीदुपेक्षितम् ।
मित्राणि द्रष्टुकामेन पुत्राणां च बलाबलम् ॥ ३०
अशोच्याः कुरवो राजन् येषां त्वमनुशासिता ॥ ३०॥
मन्त्री च विदुरो धीमान् सर्वशास्त्रविशारदः ॥ ३१
त्वयि धर्मोऽर्जुने वीर्यं भीमसेने पराक्रमः ।
[1]श्रद्धा च गुरुशुश्रूषा यमयोः पुरुषाग्र्ययोः ॥ ३२
अजातशत्रो भद्रं ते खाण्डवप्रस्थमाविश ।
भ्रातृभिस्तेऽस्तु सौभ्रात्रं धर्मे ते धीयतां मनः ॥ ३३

वैशम्पायनः—

इत्युक्तो भरतश्रेष्ठो धर्मराजो युधिष्ठिरः ।

---

1. ख-घ—शुद्धा च ।

कृत्वाऽऽर्यसमयं सर्वं प्रतस्थे भ्रातृभिस्सह ॥ ३४

ते रथान् सूर्यसङ्काशान् आस्थाय सह कृष्णया ।

प्रययुर्हृष्टमनस इन्द्रप्रस्थ[1] पुरं प्रति ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

॥ २७ ॥ द्यूतपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

[अस्मिन्नध्याये ३५ श्लोकाः]

[समाप्तं द्यूतपर्व]

---

## ॥ षट्षष्टितमोऽध्यायः ॥

(अथ अनुद्यूतपर्व)

दुर्योधनेन धृतराष्ट्रसमीपे कार्तवीर्यार्जुनोपाख्यानकथनम् ॥ १ ॥

---

जनमेजयः—

अनुज्ञातांस्तान् विदित्वा सरत्नधनसञ्चयान् ।

पाण्डवान् धार्तराष्ट्राणां कथमासीन्मनस्तदा ॥ १

वैशम्पायनः—

अनुज्ञातांस्तान् विदित्वा धृतराष्ट्रेण धीमता ।

राजन् दुश्शासनः क्षिप्रं जगाम भ्रातरं प्रति ॥ २

---

1. अ-क—पुरोत्तमम् ।

दुर्योधनं समासीनं सामात्यं [1]भरतर्षभ ।
दुःखार्तो भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ ३

दुश्शासनः—

दुःखेनैतान् समानीतान् स्थविरो नाशयत्यसौ ।
[2]शत्रुसाद्गमयन् द्रव्यं तद्बुध्यध्वं महारथाः ॥ ४

वैशम्पायनः—

अथ दुर्योधनः कर्णश् शकुनिश्चापि सौबलः ।
मिथस्सङ्गम्य सहिताः पाण्डवान् प्रति मानिनः ॥ ५
वैचित्रवीर्यं राजानं धृतराष्ट्रं मनीषिणम् ।
अभिगम्य त्वरायुक्ताश् श्लक्ष्णं वचनमब्रुवन् ॥ ६

दुर्योधनः—

न त्वयेदं श्रुतं राजन् यज्जगाद बृहस्पतिः ।
शक्रस्य नीतिं प्रवदन् विद्वान् देवपुरोहितः ॥ ७
सर्वोपायैर्निहन्तव्याश् शत्रवश्शत्रुकर्शन ।
पुरा युद्धाद्बलाद्वाऽपि प्रकुर्वन्ति तवाहितम् ॥ ८
ते वयं पाण्डवधनैस् सर्वान् सम्पूज्य पार्थिवान् ।
यदि तान् योधयिष्यामः किं वा नः परिहास्यति ॥ ९
अहीनाशीविषान् क्रुद्धान् नाशाय समुपस्थितान् ।

---

1. अ—भरतर्षभम् ।        2. ख-ग-घ-ङ—पुत्रान् संशयमभ्येत्य ।

बध्वा कण्ठे च पृष्ठे च कस्समुत्स्रष्टुमर्हति ॥ १०

[1]आत्तशस्त्रा रथगताः कुपितास्तात पाण्डवाः ।
निश्शेषान् नः करिष्यन्ति क्रुद्धा ह्याशीविषा इव ॥ ११

सन्नद्धो ह्यर्जुनो याति विवर्त्य परमेपुधी ।
गाण्डीवं गृह्य सङ्क्रुद्धः पार्थश्शस्त्रभृतां वरः ॥ १२

अचिरेणैव कालेन निश्शेषान् नः करिष्यति ॥ १२॥

न पश्यामि रणे क्रुद्धं बीभत्सुं प्रति वारणम् ॥ १३
भीष्मो द्रोणश्च कर्णश्च द्रौणिश्च रथिनां वरः ।

कृपश्च वृषसेनश्च विकर्णश्च जयद्रथः ॥ १४
बाह्लीकस्सोमदत्तश्च भूरिर्भूरिश्रवाश्शलः ।

शकुनिस्ससुतश्चैव नृपाश्चान्ये च कौरवाः ॥ १५
एते सर्वे रणे यत्ताः पार्थं सोढुं न शक्नुवन् ॥ १५॥

अर्जुनेन समो वीर्ये नास्ति लोके धनुर्धरः ।
योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ॥ १६॥

धृतराष्ट्रः—

कस्त्वयोक्तः पुमान् वीरो बीभत्सुसमविक्रमः ।
तं मे ब्रूहि महावीर्यं श्रोतुमिच्छामि पुत्रक ॥ १७॥

---

1. ग-ङ—कोशयोः अर्धद्वयं नास्ति ।

दुर्योधनः—

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् ।
हेहयाधिपतिर्वीरः पाञ्चदश्यः पितामहात् ॥ १८॥

धृतराष्ट्रः—

गान्धारीपुत्र सर्वांस्तान् कार्तवीर्यपितामहान् ।
आनुपूर्व्याच्च मे शंस ततस्तं पार्थिवं तथा ॥ १९॥

दुर्योधनः—

कार्तवीर्यस्य चरितं शृणु राजन् महात्मनः ॥ २०

अव्यक्तप्रभवो ब्रह्मा सर्वलोकपितामहः ।
ब्रह्मणोऽत्रिस्सुतो विद्वान अत्रेः पुत्रो निशाकरः ॥ २१

सोमस्य तु बुधः पुत्रो बुधस्य तु पुरूरवाः ।
तस्याप्यथ सुतोऽप्यायुर् आयोस्तु नहुषस्सुतः ॥ २२

नहुषस्य ययातिस्तु ययातेस्तनुजो यदुः ।
यदोः पुत्रो महाराज सहस्रौजेति विश्रुतः ॥ २३

सहस्रौजसुतो राजंस् चक्रदासेति विश्रुतः ।
चक्रदासस्य दायादो हेहयो नाम पार्थिवः ॥ २४

हेहयस्याभवत् पुत्रो धर्मनेत्र इति श्रुतः ।
धर्मनेत्रस्य कार्तस्तु कृतवीर्यस्तु कार्तजः ॥ २५

कृतवीर्यस्य तनयो ह्यर्जुनो बलिनां वरः ।

स चार्जुनो महाराज तपो घोरं चकार ह ॥ २६
साग्रं वर्षायुतं तप्त्वा तपः परमदुश्चरम् ।
दत्तमाराधयामास सोऽर्जुनोऽत्रिसुतं मुनिम् ॥ २७
तस्य दत्तो वरान् प्रादाच् चतुरः पार्थिवस्य वै ।
पूर्वं बाहुसहस्रं तु प्रार्थितः परमो वरः ॥ २८
अधर्मे प्रीयमाणस्य साद्भिस्तत्र निवारणम् ।
धर्मेण पृथिवीं जित्वा धर्मेणैवानुरञ्जयन् ॥ २९
सङ्ग्रामान् सुबहून् जित्वा हत्वा चारीन् सहस्रशः ।
सङ्ग्रामे यतमानस्य वधश्चैवाधिकाद्रणे ॥ ३०
तस्य बाहुसहस्रं तु युध्यतः किल भारत ।
रथो ध्वजश्च संजज्ञ इत्येवं मे श्रुतं पुरा ॥ ३१
तथैवं पृथिवी राजन् सप्तद्वीपा सपत्तना ।
ससमुद्राकरा तात [1]बलिनोग्रेण वै जिता ॥ ३२
स चार्जुनोऽथ तेजस्वी सप्तद्वीपेश्वरोऽभवत् ।
स च राजा महायज्ञान आजहार महाबलः ॥ ३३
[2]महीं च सकलां जित्वा असकृत् स समा बहूः* ॥ ३३॥
ततोऽर्जुनः कदाचिद्वै राजन् माहिष्मतीपतिः ।

---

1. अ-क-ख—विधिनोग्रेण।
2. अ—प्रशशास महाबाहुर्मही स च ।
* क-ग-ङ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।

नर्मदां भरतश्रेष्ठ स्नातुं दारैर्ययौ सह ॥ ३४॥
ततस्तु स नदीं गत्वा प्रविश्यान्तर्जलं मुदा ।
कर्तुं राजञ्जलक्रीडां ततो राजोपचक्रमे ॥ ३५॥
तस्मिन्नेव तु काले तु रावणो राक्षसैस्सह ।
लङ्काया ईश्वरस्तात तं देशं प्रययौ बली ॥ ३६॥
ततस्तमर्जुनं दृष्ट्वा नर्मदायां दशाननः ।
नित्यं क्रोधपरो धीरो वरदानेन मोहितः ॥ ३७॥
अभ्यधावत् सुसङ्क्रुद्धो महेन्द्रं शम्बरो यथा ॥ ३८
अर्जुनोऽप्यथ तं दृष्ट्वा रावणं प्रत्यवारयत् ॥
ततस्तौ चक्रतुर्युद्धं रावणश्चार्जुनश्च वै ॥ ३९
ततस्तु दुर्जयं वीरं वरदानेन दर्पितम् ।
राक्षसेन्द्रं मनुष्येन्द्रो युध्वा जित्वा रणे बलात् ॥ ४०
बध्वा धनुर्ज्यया राजन् विवेशाथ पुरीं स्वकाम् ॥ ४०॥
स तु तं बन्धितं श्रुत्वा पुलस्त्यो रावणं तदा ।
मोक्षयामास दृष्ट्वाऽथ पुरेऽदृष्ट्वाऽर्जुनं तदा ॥ ४१॥
ततः कदाचित् तेजस्वी कार्तवीर्यार्जुनो बली ।
समुद्रतीरं गत्वाऽथ विचरन् दर्पमोहितः ॥ ४२॥
अवाकिरच्छितशरैस् समुद्रं स तु भारत ॥ ४३
तं समुद्रो नमस्कृत्य कृताञ्जलिरभाषत ॥ ४३॥

समुद्रः—

आशुगान् वीर मा मुञ्च ब्रूहि किं करवाणि ते । ४४॥

मदाश्रयाणि भूतानि त्वन्निसृष्टैर्महेषुभिः ।

बध्यन्ते राजशार्दूल तेभ्यो देह्यभयं विभो ॥ ४५

अर्जुनः—

देहि सिन्धुपते युद्धम् अद्यैव त्वरया मम ।

अथवा पीडयामि त्वां तस्मात् त्वं कुरु मा चिरम् ॥ ४६

समुद्रः—

लोके राजन् महावीर्या बहवो निवसन्ति ये ।

तेषामेकेन राजेन्द्र कुरु युद्धं महाबल ॥ ४७

अर्जुनः—

मत्समो यदि सङ्ग्रामे वरायुधधरः क्वचित् ।

विद्यते तं ममाचक्ष्व [1]यस्सहेत महामृधे ॥ ४८

समुद्रः—

महर्षिर्जमदग्निस्तु यदि राजन् परिश्रुतः ।

तस्य पुत्रो रणं दातुं यथावद्वै तवार्हति ॥ ४९

दुर्योधनः—

समुद्रस्य वचश्श्रुत्वा राजा माहिष्मतीपतिः ।

[2]ननाद साधिवैः पूर्वं क्रोधेन महता वृतः ॥ ५०

---

1 क—यस्समास्ते स मा मृधे । 2. क—नारदस्य च वै पूर्वं ।

ततः प्रतिययौ शीघ्रं क्रोधेन सह भारत ।
स तमाश्रममागत्य राममेवान्वपद्यत ॥ ५१

स रामप्रतिकूलानि चकार सह बन्धुभिः ।
आयासं जनयामास रामस्य स महात्मनः ॥ ५२

ततस्तेजः प्रजज्वाल रामस्यामिततेजसः ।
प्रदहन्निव सैन्यानि रश्मिमानिव तेजसा ॥ ५३
अथ तौ चक्रतुर्युद्धं वृत्रवासवयोरिव ॥ ५३॥

ततः परशुमादाय नृपं बाहुसहस्रिणम् ।
चिच्छेद सहसा रामो बहुशाखमिव द्रुमम् ॥ ५४॥

तं हतं पतितं दृष्ट्वा समेता[1]स्सर्वबान्धवाः ।
असीनादाय शक्तीश्च रामं ते प्रत्यवारयन् ॥ ५५॥

रामोऽपि रथमास्थाय धनुरायम्य सत्वरः ।
विसृजन् परमास्त्राणि व्यधमत् पार्थिवं बलम् ॥ ५६॥

ततस्तु क्षत्रिया राजन् जामदग्न्यभयार्दिताः ।
विविशुर्गिरिदुर्गाणि मृगाः सिंहभयादिव ॥ ५७॥

तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठताम् ।
प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ॥ ५८॥

तथा ते द्रविडाः काशाः पुण्ड्राश्च शबरैस्सह ।

1. अ—स्तस्य ।

वृषलत्वं परिगता ह्युच्छिन्नाः क्षत्रकर्मणः ॥ ५९॥

ततस्तु हतवीरासु क्षत्रियासु पुनः पुनः ।
द्विजैरभ्युदितं क्षत्रं तानि रामो निहत्य च ॥ ६०॥

ततस्त्रिस्सप्तमं वारं रामं वागशरीरिणी ।
दिव्या प्रोवाच मधुरा सर्वलोकपरिश्रुता ॥ ६१॥

राम राम निवर्तस्व स्वगुणं चाथ पश्यासि ।
क्षत्रबन्धूनिमान् प्राणैर् विप्रयुज्य पुनः पुनः ॥ ६२॥

तथैव तं महात्मानम् ऋचीकप्रमुखास्तथा ।
राम राम महावीर निवर्तस्वेत्यथाब्रुवन् ॥ ६३॥

पितुर्वधममृष्यंस्तु रामः प्रोवाच तानृषीन् ॥ ६४

परशुरामः—

नार्हा हन्त भवन्तो मां निवारयितुमित्युत ॥ ६४॥

पितरः—

नार्हसि क्षत्रबन्धूंस्त्वं निहन्तुं जयतां वर ।
न हि युक्तस्तदाघातो ब्राह्मणेन सता त्वया ॥ ६५॥

दुर्योधनः—

पितॄणां वचनं श्रुत्वा क्रोधं त्यक्त्वा स भार्गवः ।
अश्वमेधसहस्राणि नरमेधशतानि च ॥ ६६॥

इष्ट्वा सागरपर्यन्तां काश्यपाय महीं ददौ ॥ ६७

तेन रामेण सङ्ग्रामे तुल्यस्तात धनञ्जयः ॥ ६७॥

कार्तवीर्येण च रणे तुल्यः पार्थो न संशयः ।
रणे विक्रम्य राजेन्द्र पार्थं जेतुं न शक्यते ॥ ६८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
॥ २८ ॥ अनुद्यूतपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ६८॥ श्लोकाः]

---

## ॥ सप्तषष्टितमोऽध्यायः ॥

---

दुर्योधनेन धृतराष्ट्रसमीपे अर्जुनप्रभाववर्णनम् ॥ १ ॥ दुर्योधन-दुर्बोधनेन धृतराष्ट्रस्य पुनर्द्यूताय पाण्डवानयनाभ्यनुज्ञा ॥ २ ॥

---

दुर्योधनः—

शृणु राजन् पुराऽचिन्त्यान् अर्जुनस्य च साहसान् ।
अर्जुनो धन्विनां श्रेष्ठो दुष्कृतं कृतवान् पुरा ॥ १

द्रुपदस्य पुरे राजन् द्रौपद्याश्च स्वयंवरे ।
आबालवृद्धसङ्घोषे सर्वक्षत्रसमागमे ॥ २
क्षिप्रकारी जले मत्स्यं दुर्निरीक्ष्यं ससर्ज ह ॥ २॥
सर्वैर्नृपैरसाध्यं तत् कार्मुकप्रवरं च वै ।
क्षणेन सज्यमकरोत् सर्वक्षत्रस्य पश्यतः ॥ ३॥
ततो यन्त्रमयं विद्ध्वा विवाहं फल्गुनो बली ।

कृष्णया हेममाल्येन स्कन्धे स परिवेष्टितः ॥ ४॥
ततस्तया वृतं पार्थं दृष्ट्वा सर्वे नृपास्तदा ।
रोषात् सर्वायुधान् गृह्य क्रुद्धा वीरा महाबलाः ॥ ५॥
वैकर्तनं पुरस्कृत्य सर्वे पार्थमुपाद्रवन् ॥ ६
स दृष्ट्वा पार्थिवान् सर्वान् क्रुद्धान् पार्थो महाबलः ।
वारयित्वा शरैस्तीक्ष्णैर् अजयत् तत्र स स्वयम् ॥ ७
[1]जित्वा तु तान् महीपालान् सर्वान् कर्णपुरोगमान् ।
लेभे कृष्णां शुभां पार्थो युद्ध्वा वीर्यबलात् तदा ॥ ८
सर्वक्षत्रसमूहेषु अम्बां भीष्मो यथा पुरा ॥ ८॥
ततः कदाचिद्बीभत्सुस् तीर्थयात्रां ययौ स्वयम् ॥ ९
अथोलूपीं शुभां जातां नागराजसुतां तदा ।
नागेष्ववाप चाग्र्येषु प्रार्थितोऽथ यथातथम् ॥ १०
ततो गोदावरीं वेण्णां कावेरीं चावगाहत ।
तत्र पाण्ड्यं समासाद्य तस्य कन्यामवाप सः ॥ ११
लब्ध्वा जिष्णुर्मुदं तत्र ततो याम्यां ययौ दिशम् ॥ ११॥
स दक्षिणं समुद्रान्तं गत्वा चाप्सरसां च वै ।
कुमारीतीर्थमासाद्य मोक्षयामास चार्जुनः ॥ १२॥
ग्राहरूपान्विताः पञ्च अतिशौर्येण वै बलात् ॥ १३
कन्यातीर्थं समभ्येत्य ततो द्वारवतीं ययौ ॥ १३॥

---

1. अ—कोशे अर्धचतुष्टयं नास्ति ।

तत्र कृष्णनिदेशात् स सुभद्रां प्राप्य फल्गुनः । ०
तामारोप्य रथोपस्थे प्रययौ स्वपुरीं प्रति ॥ १४॥

अथादाय गते पार्थे ते श्रुत्वा सर्वयादवाः ।
तमभ्यधावन् सङ्क्रुद्धास् सिंहं व्याघ्रगणा इव ॥ १५॥

प्रद्युम्नः कृतवर्मा च गदस्सारणसात्यकी ।
आहुकश्चैव साम्बश्च चारुदेष्णो विडूरथः ॥ १६॥

अन्ये च यादवास्सर्वे बलदेवपुरोगमाः ।
एकमेव ऋते कृष्णं गजवाजिरथैर्युताः ॥ १७॥

अथासाद्य वने यान्तं परिवार्य धनञ्जयम् ।
चक्रुर्युद्धं सुसङ्क्रुद्धा बहुकोट्यश्च यादवाः ॥ १८॥

एक एव तु पार्थस्तैर् युद्धं चक्रे सुदारुणम् ।
तेन तेषां समं युद्धं मुहूर्तं प्रबभूव ह ॥ १९॥

ततः पार्थो रणे सर्वान् वारयित्वा शितैश्शरैः ।
बलाद्विजित्य राजेन्द्र वीरस्तान् सर्वयादवान् ॥ २०॥
तां [1]सुभद्रामथादाय शक्रप्रस्थं विवेश ह* ॥ २१

भूयश्शृणु महाराज फल्गुनस्य तु साहसम् ।
ददौ च वह्नेर्बीभत्सुः प्रार्थितं खाण्डवं वनम् ॥ २२

1. ग—सुभद्रां समादाय ।
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

लब्धमात्रे तु तेनाथ भगवान् हव्यवाहनः ।
भक्षितुं खाण्डवं [1]राजंस् ततस्समुपचक्रमे ॥ २३

ततस्तं भक्षयन्तं वै सव्यसाची विभावसुम् ।
रथी धन्वी शरान गृह्य स कलापयुतः प्रभुः ॥ २४

पालयामास राजेन्द्र स्ववीर्येण महाबलः ॥ २४॥

ततश्श्रुत्वा महेन्द्रस्तं मेघांस्तान् सन्दिदेश ह ।
तेनोक्ता मेघसङ्घास्ते ववर्षुरतिवृष्टिभिः ॥ २५॥

ततो मेघगणान् पार्थश् शरव्रातैस्समन्ततः ।
खगमैर्वारयामास तदाश्चर्यमिवाभवत् ॥ २६॥

वारितान् मेघसङ्घांश्च श्रुत्वा क्रुद्धः पुरन्दरः ।
पाण्डरं गजमास्थाय सर्वदेवगणैर्वृतः ॥ २७॥

ययौ पार्थेन संयोद्धुं रक्षार्थं खाण्डवस्य च ॥ २८

रुद्राश्च मरुतश्चैव वसवश्चाश्विनौ तदा ।
आदित्याश्चैव साध्याश्च विश्वे देवाश्च भारत ॥ २९

गन्धर्वाश्चैव सहिता अन्ये सुरगणाश्च ये ॥ २९॥

ते सर्वे शस्त्रसम्पन्ना दीप्यमानास्स्वतेजसा ।
धनञ्जयं जिघांसन्तः प्रपेतुर्विबुधाधिपाः ॥ ३०॥

---

1. अ—भक्षितुं खाण्डवं तेन ततस्थ उपचक्रमे।
ख-ग—राजंस्ततस्थानुपचक्रमे। क—राजंस्तत सर्वं प्रचक्रमे।

युगान्ते यानि दृश्यन्ते निमित्तानि महान्त्यपि ।
सर्वाणि तत्र दृश्यन्ते सुघोराणि महीपते ॥ ३१॥

ततो देवगणास्सर्वे पार्थं समभिदुद्रुवुः ॥ ३२

[1]असम्भ्रान्तस्तु तान् दृष्ट्वा स तां देवमयीं चमूम् ।
त्वरितः फल्गुनो गृह्य तीक्ष्णस्तानाशुगांस्तदा ॥ ३३

शक्रं देवांश्च सम्प्रेक्ष्य तस्थौ काल इवात्यये ॥ ३३॥

ततो देवगणास्सर्वे बीभत्सुं सपुरन्दराः ।
अवाकिरञ्छरव्रातैर् मानुषं तं महीपते ॥ ३४॥

ततः पार्थो महातेजा गाण्डीवं गृह्य सत्वरः ।
वारयामास देवानां शरव्रातैश्शरांस्तदा ॥ ३५॥

पुनः क्रुद्धास्सुरास्सर्वे मर्त्यं सङ्ख्ये महाबलाः ।
नानाशस्त्रैर्ववर्षुस्तं सव्यसाचिं महीपते ॥ ३६॥

तान् पार्थश्शस्त्रवर्षान् वै विसृष्टान् विबुधैस्तदा ।
द्विधा त्रिधा च चिच्छेद ख एव निशितैश्शरैः ॥ ३७॥

पुनश्च पार्थस्सङ्क्रुद्धो मण्डलीकृतकार्मुकः ।
देवसङ्घाञ्छरैस्तीक्ष्णैर् अर्पयद्वै समन्ततः ॥ ३८॥

ततो देवगणास्सर्वे युद्ध्वा पार्थेन वै मुहुः ।
रणे जेतुमशक्यं तं ज्ञात्वा ते भरतर्षभ ॥ ३९॥

---

1. अ—कोशे इदमर्धं नास्ति ।

शान्तास्ते विबुधास्सर्वे पार्थबाणाभिपीडिताः ।
सद्विपं वासवं त्यक्त्वा दुद्रुवुस्सर्वतोदिशम् ॥ ४०॥

प्राचीं रुद्रास्सगन्धर्वा दक्षिणां मरुतो युधि ।
दिशं प्रतीचीं भीतास्ते वसवश्च तथाऽश्विनौ ॥ ४१॥

आदित्याश्चैव विश्वे च दुद्रुवुर्वा उदङ्मुखाः ।
साध्याश्चोर्ध्वमुखा भीताश् चिन्तयन् पार्थसायकान् ॥ ४२॥

एवं सुरगणास्सर्वे प्राद्रवन सर्वतोदिशम् ।
मुहुर्मुहुः प्रेक्षमाणाः पार्थमेव सकार्मुकम् ॥ ४३॥

विद्रुतान् देवसङ्घांस्तान रणे दृष्ट्वा पुरन्दरः ।
ततः क्रुद्धो महातेजाः पार्थं बाणैरवाकिरत् ॥ ४४॥

पार्थोऽपि शक्रं विव्याध मानुषो विबुधाधिपम् ॥ ४५

ततस्सोऽश्ममयं वर्षं व्यसृजद्विबुधाधिपः ।
तच्छरैरर्जुनो वर्षं प्रतिजघ्नेऽत्यमर्षणः ॥ ४६

अथ संवर्धयामास [1]तद्वर्षं देवराडपि ।
भूय एव तदा वीर्यं जिज्ञासुस्सव्यसाचिनः ॥ ४७

सोऽश्मवर्षं महावेगम् इषुभिः पाण्डवोऽपि च ।
विलयं गमयामास हर्षयन् पाकशासनम् ॥ ४८

1. अ—साश्मवर्षं । क—तद्वर्षं देवताधिपः । ब—हर्षयन् पाकशासनः ।
ग—स वर्षं देवराडपि ।

उपादाय तु पाणिभ्याम् अङ्गदं नाम पर्वतम् ।
सद्रुमं व्यसृजच्छक्रो जिघांसुश्श्वेतवाहनम् ॥ ४९

ततोऽर्जुनो वेगवद्भिर् ज्वलमानैरजिह्मगैः ।
बाणैर्विध्वंसयामास गिरिराजं सहस्रशः ॥ ५०

शक्रं च [1]वारयामास शरैः पार्थो बलाद्युधि ॥ ५०॥

ततश्शक्रो महाराज रणे वीरं धनञ्जयम् ।
ज्ञात्वा जेतुमशक्यं तं तेजोबलसमन्वितम् ॥ ५१॥
परां प्रीतिं ययौ तत्र पुत्रशौर्येण वासवः ॥ ५२

तदा तत्र न तस्यासीद् दिवि कश्चिन्महायशाः ।
समर्थो निर्जये राजन्नपि साक्षात् प्रजापतिः ॥ ५३

ततः पार्थश्शरैर्हत्वा यक्षराक्षसपन्नगान् ।
दीप्ते चाग्नौ महातेजाः पातयामास सन्ततम् ॥ ५४

प्रतिप्रेक्षयितुं पार्थं न शेकुस्तत्र केचन ।
दृष्ट्वा निवारितं शक्रं दिवि देवगणैस्सह ॥ ५५

यथा सुपर्णस्सोमार्थं विबुधानजयत् पुरा ।
तथा जित्वा सुरान् पार्थस् तर्पयामास पावकम् ॥ ५६

ततोऽर्जुनस्स्ववीर्येण तर्पयित्वा विभावसुम् ।
रथं ध्वजं हयांश्चैव दिव्यास्त्राणि सभां च वै ॥ ५७

1. ग—पातयामास ।

गाण्डीवं च धनुश्श्रेष्ठं तूणी चाक्षयसायकौ ।
एतान्यवाप बीभत्सुर् लेभे कीर्तिं च भारत* ॥ ५८

भूयोऽपि शृणु राजेन्द्र पार्थो गत्वोत्तरां दिशम् ।
विजित्य नववर्षांश्च सपुरांश्च सपर्वतान् ॥ ५९

जम्बूद्वीपं वशे कृत्वा सर्वं तद्भरतर्षभ ।
बलाज्जित्वा नृपान् सर्वान् करे च विनिवेश्य च ॥ ६०

[1]रत्नान्यादाय सर्वाणि गत्वा चैव पुनः पुरीम् ।
ततो ज्येष्ठं महात्मानं धर्मराजं युधिष्ठिरम् ॥ ६१
राजसूयं क्रतुश्रेष्ठं कारयामास भारत ॥ ६१॥

स तान्यन्यानि कर्माणि कृतवानर्जुनः पुरा ।
अर्जुनेन समो वीर्ये नास्ति लोके पुमान् कचित् ॥ ६२॥

देवदानवयक्षाश्च पिशाचोरगराक्षसाः ।
भीष्मद्रोणादयस्सर्वे कुरवश्च महारथाः ॥ ६३॥

लोके सर्वनृपाश्चैव वीराश्चान्ये धनुर्धराः ।
एते चान्ये च बहवः परिवार्य महीपते ॥ ६४॥
एकं पार्थं रणे यत्ताः प्रतियोद्धुं न शक्नुयुः ॥ ६५
अहं हि नित्यं कौरव्य फल्गुनं प्रति सत्तमम् ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ।
1 अ—कोशे "रत्नान्यादाय सर्वाणि" इत्यारभ्य "भीतः पश्यामि भारत।" इत्यन्तानि पञ्चदशार्धानि न सन्ति

अनिशं चिन्तयित्वा तं समुद्विग्नोऽस्मि तद्भयात् ॥ ६६

गृहे गृहे च पश्यामि तात पार्थमहं सदा ।
शरगाण्डीवसंयुक्तं पाशहस्तमिवान्तकम् ॥ ६७

अपि पार्थसहस्राणि भीतः पश्यामि भारत ।
पार्थभूतमिदं सर्वं नगरं प्रतिभाति मे ॥ ६८

पार्थमेव हि पश्यामि रहिते तात भारत ।
दृष्ट्वा स्वप्नगतं पार्थम् उद्भ्रमामि ह्यचेतनः ॥ ६९

अकारादीनि नामानि अर्जुनत्रस्तचेतसः ।
अश्वाश्चार्था ह्यजाश्चैव त्रासं सञ्जनयन्ति मे ॥ ७०

नास्ति पार्थादृते तात परवीराद्भयं मम ।
प्रह्लादं वा बलिं वाऽपि हन्याद्धि विजयो रणे ॥ ७१

तस्मात् तेन महाराज [1]युद्धमस्मज्जनक्षयम् ।
अहं तस्य प्रभावज्ञो नित्यं दुःखं वहामि च ॥ ७२

पुरा हि दण्डकारण्ये मारीचस्य यथा भयम् ।
भवेद्रामे महावीर्ये तथा पार्थे भयं मम ॥ ७३

धृतराष्ट्रः—

जानाम्येव महद्वीर्यं जिष्णोरेतद्दुरासदम् ।

---

1. अ-ख—युद्धाद्वस्तात न क्षमम् ।
क-ग-घ—युद्धं नस्तात न क्षमम् ।

[1]तात वीरस्य पार्थस्य मा कार्षीस्त्वं तु विप्रियम् ॥ ७४

द्यूतं वा शस्त्रयुद्धं वा दुर्वाक्यं वा कदाचन ।
एतेष्वेवं कृते तस्य विग्रहश्चैव वो भवेत् ॥ ७५

तस्मात् त्वं पुत्र पार्थेन नित्यं स्नेहेन वर्तय ॥ ७५॥

यश्च पार्थेन सम्बन्धाद् वर्तते च नरो भुवि ।
तस्य नास्ति भयं किञ्चित् त्रिपु लोकेषु भारत ॥ ७६॥
तस्मात् त्वं जिष्णुना वत्स नित्यं स्नेहेन वर्तय ॥ ७७

दुर्योधनः—
द्यूते पार्थस्य कौरव्य मायया निकृतिः कृता ।
तस्माद्धि तं जहि सदा त्वन्योपायेन नो भवेत् ॥ ७८

धृतराष्ट्रः—
उपायश्च न कर्तव्यः पाण्डवान् प्रति भारत ।
पार्थान् प्रति पुरा वत्स बहूपायाः कृतास्त्वया ॥ ७९

तानुपायान् हि कौन्तेया बहुशो व्यतिचक्रमुः ॥ ७९॥

तस्माद्धितं जीविताय नः कुलस्य जनस्य च ।
त्वं चिकीर्षसि चेद्वत्स समित्रस्सहबान्धवः ॥ ८०॥

सभ्रातृकस्त्वं पार्थेन नित्यं स्नेहेन वर्तय ॥ ८१

वैशम्पायनः—

धृतराष्ट्रवचश्श्रुत्वा राजा दुर्योधनस्तदा ।

---

1 ख-घ—तथावीर्यस्य । क—महावीरस्य ।

चिन्तयित्वा मुहूर्तं तु विधिना चोदितोऽब्रवीत् ॥ ८२

दुर्योधनः—

न त्वयेदं श्रुतं राजन् यज्जगाद बृहस्पतिः ।
शक्रस्य नीतिं प्रवदन् विद्वान् देवपुरोहितः ॥ ८३

सर्वोपायैर्निहन्तव्याश् शत्रवश्शत्रुकर्शन ।
पुरा युद्धाद् बलाद्वाऽपि प्रकुर्वन्ति तवाहितम् ॥ ८४

ते वयं पाण्डवधनैस् सर्वान् सम्पूज्य पार्थिवान् ।
यदि तान् योधयिष्यामः किं वा नः परिहास्यति ॥ ८५

अहीनाशीविषान् क्रुद्धान् दंशाय समुपस्थितान् ।
बद्ध्वा कण्ठे च पृष्ठे च कस्समुत्स्रष्टुमर्हति ॥ ८६

आत्तशस्त्रा रथगताः कुपितास्तात पाण्डवाः ।
निश्शेषान् नः करिष्यन्ति क्रुद्धा ह्याशीविषा यथा ॥ ८७

सन्नद्धो ह्यर्जुनो यातो विवृत्य परमेषुधीः ।
गाण्डीवं मुहुरादत्ते निश्श्वास नराधिप ॥ ८८

निरीक्षते गदां गुर्वीं समुद्यम्य वृकोदरः ॥ ८८॥

सरथं योजयित्वा तु निर्यात इति नश्श्रुतम् ।
नकुलः खड्गमादाय चर्म चाप्यष्टचन्द्रकम् ॥ ८९॥

सहदेवश्च राजा च चक्रुराकारमिङ्गितैः ॥ ९०

ते त्वास्थाय रथान् सर्वे बहुशस्त्रपरिग्रहाः ।

अभिघ्नन्तो रथान् राजन् सेनायोगाय निर्ययुः ॥ ९१

न क्षमन्ते तथाऽस्माभिर् जातु विप्रकृतास्तु ते ।
द्रौपद्यास्तु परिक्लेशं कस्तेषां क्षन्तुमर्हति ॥ ९२

पुनर्दीव्याम भद्रं ते वनवासाय पाण्डवैः ।
एवमेतान् वशे कर्तुं शक्ष्यामो भरतर्षभ ॥ ९३

ते वा द्वादश वर्षाणि वयं वा द्यूतनिर्जिताः ।
प्रविशेम महारण्यं रौरवाजिनवाससः ॥ ९४

त्रयोदशं च स्वजनैर् अज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ ९५

निवसेम वयं ते वा तथा द्यूतं प्रवर्तताम् ॥ ९५॥

अक्षानुप्त्वा पुनर्द्यूतम् इदं दीव्यन्तु पाण्डवाः ।
एतत् कृत्यतमं राजन्नस्माकं भरतर्षभ ॥ ९६॥

अयं हि शकुनिर्वेद [1]निकृत्यामक्षसम्भवाम् ॥ ९७

दृढमूला वयं राज्ये मित्राणि परिगृह्य च ।
सारवद्विपुलं सैन्यं सत्कृत्य च दुरासदम् ॥ ९८

ते च त्रयोदशे वर्षे पारयिष्यन्ति चेद्व्रतम् ।
जेष्यामस्तान् वयं राजन् रोचतां ते परन्तप ॥ ९९

1. अ-क-ख-घ—सविद्यामक्षसम्पदम् । ग—निकृत्या अक्षसम्भवम् ।

धृतराष्ट्रः—

तूर्णं प्रत्यानयस्वैतान् काममध्वगतानपि ।
आगच्छन्तु पुनर्द्यूतम् इदं कुर्वन्तु पाण्डवाः ॥ १००

वैशम्पायनः—

ततो द्रोणस्सोमदत्तो बाह्लीकश्चैव गौतमः ।
विदुरो द्रोणपुत्रश्च वैश्यापुत्रश्च वीर्यवान् ॥ १०१

भूरिश्रवाश्शान्तनवो विकर्णश्च महारथः ।
मा द्यूतमित्यभाषन्त शमोऽस्त्विति च सर्वशः ॥ १०२

अकामानां च सर्वेषां सुहृदामर्थदर्शिनाम् ।
अकरोत् पाण्डवाह्वानं धृतराष्ट्रस्सुतप्रियः ॥ १०३

[1]अथाब्रवीन्महाराज धृतराष्ट्रं जनेश्वरम् ।
पुत्रहार्दाद्धर्मशीला गान्धारी शोककर्शिता ॥ १०४

गान्धारी—

जाते दुर्योधने क्षत्ता महामतिरभाषत ।
नीयतां परलोकाय साध्वयं कुलपांसनः ॥ १०५

व्यनदज्जातमात्रो हि गोमायुरिव भारत ।
अन्तो नूनं कुलस्यास्य कुरवस्तन्निबोधत ॥ १०६

[2]अबालानां विशिष्टानां माऽवमंस्था मतिं प्रभो ।

---

1. अ-क-ख-ग-घ-ङ—यथोपजोषं वसतां पुनर्द्यूतप्रवृत्तये । [अधिकः पाठः]

2. ख-ग-घ—आबालानां

मा कुलस्य क्षये घोरे कारणं च नरेन्द्र भूः ॥ १०७

बद्धं सेतुं को नु भिन्द्याद् धमेच्छान्तं हुताशनम् ।
शमे धृतान् पुनः पार्थान् कोपयेद्भरतर्षभ ॥ १०८

[1]स्मरन्तं त्वामाजमीढं स्मारयिष्याम्यहं पुनः ।
न शास्त्रं शास्ति दुर्बुद्धिं श्रेयसे वेतराय वा ॥ १०९

न वै वृद्धो बालमतिर् भवेद्राजन् कथञ्चन ।
त्वन्नेत्रास्सन्तु ते पुत्रा मा त्वां जीर्णं प्रहासिषुः ॥ ११०

शमेन धर्मेण परस्य बुद्ध्या
जाता बुद्धिस्साऽस्तु ते मा प्रमादीः ।
[2]प्रध्वंसिनी क्रूरसमाहिता श्रीर्
मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥ १११

वैशम्पायनः—

अथाब्रवीन्महाराजो गान्धारीं धर्मदर्शिनीम् ॥ १११॥

धृतराष्ट्रः—

अन्तः कामं कुलस्यास्तु न शक्ष्यामि निवर्तितुम् ।

1. अ—विस्मरन्तं त्वाजमीढं । ख-ग—विस्मृतं त्वाजमीढं ।
क—स्मरन्त्यहं त्वाजमीढं । घ—विस्मृतस्त्वामजामीढो ।
2. ख-ग-घ-ङ—न तद्बलं यन्मृदुना विरुध्यते ।
मित्रं धर्मस्तरसा सेवितव्यः ॥ [अधिकः पाठः]

यथेच्छन्ति तथैवास्तु प्रत्यागच्छन्तु पाण्डवाः ॥ १११

पुनर्द्यूतं तु कुर्वन्तु मामकाः पाण्डवैस्सह ॥ ११२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
॥ २८॥ अनुद्यूतपर्वणि द्वितीयोऽध्यायः ॥२ ॥
[अस्मिन्नध्याये ११२॥ श्लोकाः]

---

## ॥ अष्टषष्टितमोऽध्यायः ॥

---

निजनगरं गच्छतो युधिष्ठिरस्य मध्येमार्गं दूताह्वानेन पुनर्निवृत्त्य द्यूतसभाप्रवेशः ॥ १ ॥ अनुद्यूतेऽपि युधिष्ठिरस्य शकुनिना पराजयः ॥ २ ॥

---

वैशम्पायनः—

ततो [1]व्यध्वगतं पार्थं प्रातिकामी युधिष्ठिरम् ।
उवाच वचनाद्राज्ञो धृतराष्ट्रस्य धीमतः ॥ १

प्रातिकामी—

[2]उपास्तीर्णा सभा राजन्नक्षानुप्त्वा युधिष्ठिर ।
एहि पाण्डव दीव्येति पिता त्वाह नराधिपः ॥ २

युधिष्ठिरः—

धातुर्नियोगाद्भूतानि प्राप्नुवन्ति शुभाशुभे ।

---

1. ग—ऽध्वानगतं ।
2. क-ग—उपस्तीर्णा सभा । ख-घ—उपास्त्य सभां ।

न निवृत्तिस्तयोरस्ति देवितव्यं पुनर्यदि ॥ ३

अक्षद्यूते समाह्वानं नियोगात् स्थविरस्य च ।
जानन्नपि क्षयकरं नातिक्रमितुमुत्सहे ॥ ४

वैशम्पायनः—
इति ब्रुवन्निवद्यूते भ्रातृभिस्सह पाण्डवः ।
जानंश्च शकुनेर्मायां पार्थो द्यूतमियात् पुनः ॥ ५

विविशुस्ते सभां तां तु पुनरेव महारथाः ।
व्यथयन्ति स्म चेतांसि सुहृदां भरतर्षभ ॥ ६

यथोपजोषमासीनाः पुनर्द्यूतप्रवृत्तये ।
सर्वलोकविनाशाय दैवेनोपनिपीडिताः ॥ ७

शकुनिः—
अमुञ्चत् स्थविरो यद्वो धनं विजितमेव तत् ।
[1]ग्लहाम्यहं पणं चैकं शृणु मे भरतर्षभ ॥ ८

वयं द्वादश वर्षाणि युष्माभिर्द्यूतनिर्जिताः ।
प्रविशेम महारण्यं रौरवाजिनवाससः ॥ ९

त्रयोदशं च स्वजनैर् अज्ञाताः परिवत्सरम् ।
ज्ञाताश्चेत् पुनरन्यानि वने वर्षाणि द्वादश ॥ १०

अस्माभिर्वा जिता यूयं वने वर्षाणि द्वादश ।
वसध्वं कृष्णया सार्धम् अजिनैः परिवारिताः ॥ ११

---

1. अ-क—महाग्लहे धनं चैकं । ख-घ—ग्लहं त्विह ।

त्रयोदशे च निर्वृत्ते पुनरेव यथोचितम् ।
स्वराज्यं प्रतिपत्तव्यम् इतरैरथवेतरैः ॥ १२

अनेन व्यवसायेन सहास्माभिर्युधिष्ठिर ।
अक्षानुप्त्वा पुनर्द्यूतम् एहि दीव्यस्व भारत ॥ १३

सभासदः—
अहो धिक् [1]पाण्डवा नैते बोधयन्ति महद्भयम् ।
बुद्ध्या बोध्यं न बुध्यन्ते स्वयं च भरतर्षभाः ॥ १४

वैशम्पायनः—
जनप्रवादान् सुबहून् इति शृण्वन् नराधिपः ।
ह्रिया च धर्मसङ्गाच्च पार्थो द्यूतमियात् पुनः ॥ १५

जानन्नपि महाबुद्धिः पुन[2]र्द्यूतमवर्तयन् ।
[3]अप्ययं न विनाशस्स्यात् कुरूणामिति चिन्तयन् ॥ १६

युधिष्ठिरः—
कथं वै मद्विधो राजा स्वधर्ममनुपालयन् ।
आहूतो विनिवर्तेत दीव्यामि शकुने त्वया ॥ १७

शकुनिः—
गवाश्वं बहुधेनूकम् अपर्यन्तमजाविकम् ।

---

1. अ—पाण्डवानेतान् मोहयन्ति क—बान्धवानेतान्
ख-च—पाण्डवानेतान्
2. अ—द्यूतं प्रवर्तयत् । क—द्यूतं विनाशकम् । ग—द्यूतं व्यवर्तयत् ।
3. अ—सदिव्यं सविनाशस्स्यात् कुरूणामित्यचिन्तयत् ।
ग—स चासक्तो ।

तथा कोशो हिरण्यं च दासीदासं च सर्वशः ॥ १८

एष वै ग्लह एवैको वनवासाय पाण्डवाः ॥ १८॥
यूयं वयं वा विजिता वसेम वनमाश्रिताः ॥ १९

अनेन व्यवसायेन दीव्याम पुरुषर्षभ ।
समुत्क्षेपेण चैकेन वनवासाय भारत ॥ २०

वैशम्पायनः—
एवं दैवबलाविष्टो धर्मराजो युधिष्ठिरः ।
भीष्मद्रोणैर्वार्यमाणो विदुरेण च धीमता ॥ २१

युयुत्सुना कृपेणाथ सञ्जयेन च भारत ।
गान्धार्या पृथया चैव भीमार्जुनयमैस्तथा ॥ २२

विकर्णेन च वीरेण द्रौपद्या द्रौणिना तथा ।
सोमदत्तेन च तथा वाह्लीकेन च धीमता ॥ २३

[1]वार्यमाणोऽपि सततं न च राजा नियच्छति ॥ २३॥

एवं स वार्यमाणोऽपि कौन्तेयो हितकाम्यया ।
देवकार्यार्थसिद्ध्यर्थं मुहूर्तं कलिमाविशत् ॥ २४॥

आविष्टः कलिना राजन् छकुनिं प्रत्यभाषत ।
एवं भवत्विति तदा वनवासाय दीव्यते ॥ २५॥

1. अ—वार्यते चैव। ग—वारितोऽतीव।

प्रतिजग्राह तं पार्थो ग्लहं जग्राह सौबलः ।
जितमित्येव शकुनिर् युधिष्ठिरमभाषत ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
**सभापर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥**

॥ २८ ॥ **अनुद्यूतपर्वणि तृतीयोऽध्यायः** ॥ ३ ॥

[ अस्मिन्नध्याये २६॥ श्लोका ]

## ॥ एकोनसप्ततितमोऽध्यायः ॥

**वनाय प्रस्थितान् पाण्डवान् प्रति दुश्शासनकृतापहासः ॥ १ ॥ पाण्डवानां बहुप्रतिज्ञाकरणपूर्वकं धृतराष्ट्रसमीपगमनम् ॥ २ ॥ युधिष्ठिरेण वनगमनाय भीष्माद्यामन्त्रणम् ॥ ३ ॥ पाण्डवान् प्रति विदुरवचनम् ॥४॥**

**वैशम्पायनः—**

वनवासाय चक्रुस्ते मतिं पार्थाः पराजिताः ।
अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम् ॥ १

अजिनैस्संवृतान् दृष्ट्वा हृतराज्यानरिन्दमान् ।
प्रस्थितान् वनवासाय ततो दुश्शासनोऽब्रवीत् ॥ २

**दुश्शासनः—**

प्रवृत्तं धार्तराष्ट्रस्य चक्रं राज्ञो महात्मनः ।
परिभूताः पाण्डुसुता विपत्तिं परमां गताः ॥ ३

अद्य देवास्सुप्रसन्नास् सह सर्वैर्महर्षिभिः ।
गुणज्येष्ठास्तथा ज्येष्ठाश् श्रेयांसो यद्वयं परैः ॥ ४

नरकं पतिताः पार्था दीर्घकालमरिन्दमाः ।
सुखाच्च हीना राज्याच्च विनष्टाश्शाश्वतीस्समाः ॥ ५

धनेन मत्ता ये ते स्म धार्तराष्ट्रान् प्रहासिषुः ।
ते निर्जिता हृतधना वनमेष्यन्ति पाण्डवाः ॥ ६

चित्रान् सन्नाहानवमुञ्चन्तु [1]पार्था
वासांसि दिव्यानि च भानुमन्ति ।
विवास्यन्तां रुरुचर्माणि तानि
यथा ग्लहस्सौबलस्याभ्युपेतः ॥ ७

न सन्ति लोकेषु पुमांस ईदृशा
इत्येव वै भावितबुद्धयस्सदा ।
ज्ञास्यन्ति [2]आत्मानमिमेऽद्य पाण्डवा
विपर्यस्ताष्षण्डतिला इवाफलाः ॥ ८

अयं हि भावोदय ईदृशानां
मनस्विनां कौरव मा भवेद्वः ।
आदीक्षितानामजिनानि यद्वद्
बलीयसां पश्यत पाण्डवानाम् ॥ ९

महाप्राज्ञस्सोमको याज्ञसेनः
कन्यां पाञ्चालीं पाण्डवेभ्यः प्रदाय ।

---

1. ग—सर्वे । क-ख-घ-ङ—चैषां ।
2. क-ख-घ—ते त्मान

अकार्ष्मीद्वै [1]दुष्कृतं ते हसन्ति
क्लीबाः पार्थाः पतयो याज्ञसेन्याः ॥ १०

सूक्ष्मप्रावारानजिनानि चोदितान्
हित्वाऽरण्ये निर्धनानप्रतिष्ठान् ।
कां त्वं प्रीतिं लप्स्यसे याज्ञसेनि
पतिं वृणीष्व यमिहान्यमिच्छसि ॥ ११

एते हि सर्वे कुरवस्समेताः
क्षान्ता दान्तास्सुद्रविणोपपन्नाः ।
एषां वृणीष्वान्यतमं पतित्वे
मा त्वां तपेत् कालविपर्ययोऽयम् ॥ १२

यथाऽफलाष्षण्डतिला यथा चर्ममया मृगाः ।
तथैव पाण्डवास्सर्वे यथा काकयवा अपि ॥ १३

किं पाण्डवांस्त्वं पतितानुपास्य
मोघश्श्रमष्षण्डतिलानुपास्य ॥ १३॥

वैशम्पायनः—
एवं नृशंसः परुषाणि पार्थान्
न्याश्रावयद्धृतराष्ट्रस्य पुत्रः ॥ १४
तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी
निर्भर्त्स्योच्चैस्सन्निगृह्यैव रोषात् ।

1. क-ख-घ-ङ—सुकृतं नेह सन्ति ।

उवाचैवं सहसैवोपगम्य
सिंहो यथा हैमवतस्सृगालम् ॥ १५

भीमसेनः—

क्रूर पापजनैर्जुष्टस्त्वम् अकृतार्थं प्रभाषसे ।
गान्धारविद्यया हि त्वं राजमध्ये विकत्थसे ॥ १६

यथा तुदसि मर्माणि वाक्छरैरिह नो भृशम् ।
तथा स्मारयिता तेऽहं कृन्तन् मर्माणि संयुगे ॥ १७

ये च त्वामनुवर्तन्ते कामक्रोधवशानुगम् ।
गोप्तारस्सानुबन्धांस्तान् नेष्यामि यमसादनम् ॥ १८

वैशम्पायनः—

एवं ब्रुवाणमजिनैर्निवासितं
दुःखाभिभूतं परिनृत्यति स्म ।
मध्ये कुरूणामनिषिद्धमार्गं
गौर्गौरिति स्माह्वयन् मुक्तलज्जः ॥ १९

भीमसेनः—

नृशंस परुषं वक्तुं शक्यं दुश्शासन त्वया ।
निकृत्या तु धनं लब्ध्वा को विकत्थितुमर्हति ॥ २०

[1]नाहत्वा सुकृतां लोकान् गच्छेत् पार्थो वृकोदरः ।
यदि वक्षसि भित्त्वा ते न पिबेच्छोणितं रुषा ॥ २१

1. अ—नाहं स्म । ख-घ—नाहत्वा । ग—माह स्म ।

धार्तराष्ट्रान् रणे हत्वा मिषतां सर्वधन्विनाम् ।
शमं गन्तास्मि नचिरात् सत्यमेवं ब्रवीमि वः ॥ २२

**वैशम्पायनः—**

ततस्स राजा सिंहगतेस्स[1]रोषो
दुर्योधनो भीमसेनस्य [2]रोषात् ।
गतिं स्वगत्याऽनुचकार मन्दो
निर्गच्छतां कौरवाणां सभायाः ॥ २३

नैतावता कृतमित्यब्रवीत् तं
वृकोदरस्सन्निवृत्तार्धकायः ।
शीघ्रं हि त्वां निहतं सानुबन्धं
संस्मार्यहं सम्प्रवक्ष्यामि मूढ ॥ २४

एतत् समीक्ष्यात्मनि वाच्यमानं
नियम्य मन्युं बलवान् स मानी ।
राजानुजस्संसदि कौरवाणां
विनिष्क्रमन् वाक्यमुवाच भीमः ॥ २५

**भीमसेनः—**

अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः ।
शकुनिं चाक्षकितवं सहदेवो वधिष्यति ॥ २६
इदं च भूयो वक्ष्यामि सभामध्ये [3]त्वहं वचः ।

---

1. क-ख-ग-घ—खेलं 2. क-ख-ग-घ—हर्षात्
3. अ-क-ग—बृहद्वचः ।

सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति ॥ २७

सुयोधनमिमं पापं हन्तास्मि गदया युधि ।
शिरः पादेन चास्याहम् अधिष्ठास्यामि भूतले ॥ २८

वाक्यशूरस्य चैवास्य [1]परुषस्य दुरात्मनः ।
दुश्शासनस्य रुधिरं पातास्मि मृगराडिव ॥ २९

अर्जुनः—

भीमसेन न ते सन्ति येषां वैरं त्वया सह ।
मत्ता गृहेषु सुखिनो न बुद्ध्यन्ते महद्भयम् ॥ ३०

[2]न तु वाच्यं व्यवसितं भीम विज्ञायतां सताम् ।
इतश्चतुर्दशे वर्षे द्रष्टारो यद्भविष्यति ॥ ३१

भीमसेनः—

दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुश्शासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ३२

अर्जुनः—

[3]असूनृतानां वक्तारं प्रहृष्टानां दुरात्मनाम् ।
भीमसेन नियोगात् ते हन्ताऽहं कर्णमाहवे ॥ ३३

---

1. अ-ग—पुरुषस्य ।
2. ख-घ—आवयोर्वा व्यवसितं भीम विज्ञायतां सभा ।
   क-ग-ङ – ययोर्वाचा ।
3. ख-घ—असूयितारं वीराणां प्रहृष्टानां ।
   ग—असूनृतानां शत्रूणां प्रहृष्टानां ।
   क –असूनृतानां शब्दानां प्रहृष्टानां दुरात्मकम् ।

अर्जुनः प्रतिजानीते भीमस्य प्रीतिकाम्यया ।
कर्णं कर्णानुगांश्चैव रणे हन्तास्मि पत्रिभिः ॥ ३४

ये चान्ये प्रतियोत्स्यन्ति बुद्धिमोहेन मां नृपाः ।
तान् सर्वान् निशितैर्बाणैर् नेतास्मि यमसादनम् ॥ ३५

चलेद्धि हिमवान् स्थानान्निष्प्रभस्स्याद्दिवाकरः ।
शैत्यं सोमात् प्रणश्येत मत्सत्यं विचलेद्यदि ॥ ३६

न प्रदास्यति चेद्राज्यम् इतो वर्षे चतुर्दशे ।
दुर्योधनोऽपि सत्कृत्य सत्यमेतद्भविष्यति ॥ ३७

वैशम्पायनः—

इत्युक्तवति पार्थे तु श्रीमान् माद्रवतीसुतः ।
प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान् ॥ ३८

सौबलस्य वधं प्रेप्सुर् इदं वचनमब्रवीत् ।
क्रोधसंरक्तनयनो निश्श्वसन्निव पन्नगः ॥ ३९

सहदेवः—

[1]अक्षाणि मूढ दुर्बुद्धे गान्धाराणां यशोहर ।
नैतेऽक्षा निशिता बाणास् त्वयैते समरे धृताः ॥ ४०

यथैवेहोक्तवान् भीमस् त्वामुद्दिश्य सबान्धवम् ।
कर्ताऽहं कर्मणस्तस्य कुरु कार्याणि सर्वशः ॥ ४१

हन्तास्मि तरसा युद्धे त्वां विक्रम्य सबान्धवम् ।

1. क-ख-ग-घ—अक्षश

यदि स्थास्यसि सङ्ग्रामे क्षत्रधर्मेण सौबल ॥ ४२

वैशम्पायनः—

सहदेववचश्श्रुत्वा नकुलोऽपि विशाम्पते ।
दर्शनीयतमो नृणाम् इदं वचनमब्रवीत् ॥ ४३

नकुलः—

सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन् धृतराष्ट्रजैः ।
यैर्वाचश्श्राविता रूक्षास् स्थितैर्दुर्योधनप्रिये ॥ ४४

तान् धार्तराष्ट्रान् दुर्वृत्तान् मुमूर्षून् कालचोदितान् ।
दर्शयिष्यामि भूयिष्ठम् अहं वैवस्वतक्षयम् ॥ ४५

उलूकं च दुरात्मानं सौबलस्य सुतं प्रियम् ।
क्रूरं हन्तास्मि समरे [1]ह्यग्रजानामनुज्ञया ॥ ४६

निदेशाद्धर्मराजस्य द्रौपद्याः पदवीं चरन् ।
निर्धार्तराष्ट्रां पृथिवीं कर्तास्मि न चिरादिव ॥ ४७

वैशम्पायनः—

एवं ते पुरुषव्याघ्राः परिघायतबाहवः ।
प्रतिज्ञां विपुलां कृत्वा धृतराष्ट्रमुपागमन्* ॥ ४८

युधिष्ठिरः—

आमन्त्रयामि भवतस् तथा वृद्धं पितामहम् ।

---

1. अ-ख-ग-घ-ङ—तं वै क्रूरं नराधमम् ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

राजानं सोमदत्तं च महाराजं च बाह्लिकम् ॥ ४९

द्रोणं कृपं नृपांश्चान्यान् अश्वत्थामानमेव च ।
विदुरं धृतराष्ट्रं च धार्तराष्ट्रांश्च सर्वशः ॥ ५०

सौमदत्तिं महावीर्यं विकर्णं च महामतिम् ।
युयुत्सुं सञ्जयं चैव तथैवान्यान् सभासदः ॥ ५१

गान्धारीं च महाभागां मातरं च तथा पृथाम् ।
सर्वानामन्त्र्य गच्छामि द्रक्ष्यामि पुनरेत्य च ॥ ५२

वैशम्पायनः—

न च किञ्चित् तथोचुस्ते यियासुं तं युधिष्ठिरम् ।
मनोभिरेव कल्याणं दध्युस्ते तस्य धीमतः ॥ ५३

विदुरः—

आर्या पृथा राजपुत्री नारण्यं वस्तुमर्हति ।
सुकुमारी च वृद्धा च नित्यं चैव सुखोचिता ॥ ५४

इह वत्स्यति कल्याणी सत्कृता मम वेश्मनि ।
इति पार्था विजानीध्वं गमनं वोऽस्तु सर्वशः ॥ ५५

युधिष्ठिर विजानीहि ममेदं भरतर्षभ ।
न धर्मोपचितः कश्चिद् व्यथते वै पराजयात् ॥ ५६

[1]त्वं वै धर्मान् विजानीषे युद्धं वेत्ता धनञ्जयः ।
हन्ताऽरीणां भीमसेनो नकुलस्त्वर्थसङ्ग्रही ॥ ५७

1. ख-घ-ङ—यदि

संयन्ता सहदेवस्तु धौम्यो ब्राह्मणसत्तमः ।
धर्मार्थकुशला चैव द्रौपदी धर्मचारिणी ॥ ५८

अन्योन्यस्य प्रियास्सर्वे तथैव प्रियवादिनः ।
परैरलङ्घ्यास्सन्तुष्टाः को वो न स्पृहयेदिह ॥ ५९

एष वै सर्वकल्याणस् समाधिस्तव भारत ।
नैव शत्रुर्विषहते शक्रेणापि समोऽप्युत ॥ ६०

हिमवत्यनुशिष्टोऽसि मेरुसावर्णिना पुरा ।
द्वैपायनेन कृष्णेन नगरे वारणावते ॥ ६१

भृगुतुन्दे च रामेण दृषद्वत्यां च शम्भुना ।
अश्रौषीरसितस्यापि महर्षेरथ धीमतः ॥ ६२

द्रष्टा सदा नारदस्य धौम्यस्तेऽयं पुरोहितः ।
महर्षिस्साम्पराये त्वां बुद्धिं तामृषिपूजिताम् ॥ ६३
पुरूरवसमैलं च बुद्ध्या जयसि पाण्डव ॥ ६३॥

शक्त्या जयसि राज्ञोऽन्यान् ऋषीन् धर्मोपसेवया ।
ऐन्द्रे जये धृतात्मा त्वं याम्यकोपविधारणे ॥ ६४॥

विसर्गे चैव धनदो वरुणश्चैव संयुगे ।
आत्मप्रदाने सोमस्त्वं मेध्यं चैवात्मजीवनम् ॥ ६५॥

भूमौ क्षमा च तेजश्च सामग्र्यं सूर्यमण्डले ।
वायोश्चैव बलं विद्धि भूतेभ्यश्चात्मसम्भवम् ॥ ६६॥

अगदं वोऽस्तु सर्वं वो द्रक्ष्यामि पुनरागतान् ।
आपद्धर्मेश्च कृच्छ्रेषु सर्वकार्येषु वा पुनः ॥ ६७॥
यथावत् प्रतिपद्येथाः काले काले युधिष्ठिर ।
आपृष्टस्त्विह कौन्तेय स्वस्ति प्राप्नुहि भारत ॥ ६८॥
कृतार्थं स्वस्तिमन्तं त्वां [1]द्रक्ष्यामि पुनरागतम् ॥ ६९

वैशम्पायन.—

एवमुक्तस्तथेत्युक्त्वा पाण्डवस्सत्यविक्रमः ।
भीष्मद्रोणौ नमस्कृत्य प्रातिष्ठत युधिष्ठिरः ॥ ७०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
॥ २८ ॥ अनुद्यूतपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[अस्मिन्नध्याये ७० श्लोकाः]

---

## ॥ सप्ततितमोऽध्यायः ॥

पाण्डवानां वनप्रस्थानेन खिद्यतां पौराणां वचनानि ॥ १ ॥

---

वैशम्पायनः—

ततस्सम्प्रस्थिते तत्र धर्मराजे तदा नृपे ।
जनास्समस्तास्तं द्रष्टुं समारुरुहु[2]रातुराः ॥ १

---

1. अ-क—द्रक्ष्यामः ।
2. क-ख-च—स्त्वराः ।

ततः प्रासादवर्याणि विमानशिखराणि च ।
गोपुराणि च सर्वाणि वृक्षानन्यांश्च सर्वशः ॥ २
अधिरुह्य जनश्श्रीमान् उदासीनो व्यलोकयत् ॥ २॥
न हि रथ्यास्ततश्शक्या गन्तुं बहुजनाकुलाः ॥ ३
आरुह्य ते स्म तान्यत्र दीनाः पश्यन्ति पाण्डवम् ।
पदाति वर्जितरथं चेलभूषणवर्जितम् ॥ ४
वल्कलाजिनसंवीतं पार्थं दृष्ट्वा जनास्तदा ।
ऊचुर्बहुविधा वाचो भृशोपहतचेतसः ॥ ५

जनाः—

यं यान्तमनुयाति स्म चतुरङ्गबलं महत् ।
तमे[1]कं कृष्णया सार्धम् अनुयान्ति स्म पाण्डवाः ॥ ६
चत्वारो भ्रातरश्चैव पुरोधाश्च विशाम्पते ॥ ६॥
भीमार्जुनौ वारयित्वा निकृत्या बद्धकार्मुकौ ।
धर्म एवास्थितो येन त्यक्त्वा राज्यं महात्मना ॥ ७॥
या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ।
तामद्य कृष्णां पश्यन्ति राजमार्गगता जनाः ॥ ८॥
अङ्गरागोचितां कृष्णां रक्तचन्दनसेविनीम् ।
वर्षमुष्णं च शीतं च नेष्यत्याशु विवर्णताम् ॥ ९॥

---

1. घ—नं। ख-ग-ङ—वं।

अद्य नूनं पृथा देवी सत्यमाविश्य भाषते ।
पुत्रान् स्नुषां च देवी तु द्रष्टुमद्याथ नार्हति ॥ १०॥
निर्गुणस्यापि पुत्रस्य कथं स्याद्दुःखदर्शनम् ।
किं पुनर्यस्य लोकोऽयं जितो वृत्तेन केवलम् ॥ ११॥
आनृशंस्यमनुक्रोशो धृतिश्शीलं दमश्शमः ।
पाण्डवं शोभयन्त्येते षड्गुणाः पुरुषोत्तमम् ॥ १२॥
तस्मात् तस्योपघातेन प्रजाः परमपीडिताः ।
औदकानीव सत्वानि ग्रीष्मे सलिलसंक्षयात् ॥ १३॥
पीडया पीडितं सर्वं जगत् तस्य जगत्पतेः ।
मूलस्यैवोपघातेन वृक्षः पुष्पफलोपगः ॥ १४॥
मूलं ह्येष मनुष्याणां धर्म[1]सारो महाद्युतिः ।
पुष्पं फलं च पत्रं च शाखास्तस्येतरे जनाः ॥ १५॥
ते भ्रातर इव क्षिप्रं सपुत्रास्सहबान्धवाः ।
गच्छन्तमनुगच्छामो येन गच्छति पाण्डवः ॥ १६॥
उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च ।
एकदुःखसुखाः पार्थम् अनुयाम सुधार्मिकम् ॥ १७॥
[2]समुद्धृतनिधानानि परिध्वस्ताजिराणि च ।

1. अ-क-ग—राजो ।
2. क-ख-घ—समुद्धृतानि धानानि ।

उपात्तधनधान्यानि हृतसाराणि सर्वशः ॥ १८॥

रजसाऽप्यवकीर्णानि परित्यक्तानि दैवतैः ।
मूषकैः परिधावद्भिर् [1]उद्बिलैरावृतानि च ॥ १९॥

अपेतोदकधूमानि हीनसम्मार्जनानि च ।
प्रनष्टबलिकर्मेज्यामन्त्रहोमजपानि च ॥ २०॥

दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च ।
असमत्त्यक्तानि वेश्मानि सौबलः प्रतिपद्यताम ॥ २१॥

वनं नगरमद्यास्तु यत्र गच्छन्ति पाण्डवाः ।
अस्माभिश्च परित्यक्तं पुरं सम्पद्यतां वनम् ॥ २२॥

बिलानि दंष्ट्रिणस्सर्वे वनानि मृगपक्षिणः ।
त्यजन्त्वस्मद्भयाद्भीता गजास्सिंहा वनान्यपि ॥ २३॥

अनाक्रान्तं प्रपद्यन्तु सेव्यमानं त्यजन्तु च ।
तृणमांसफलादानां देशांस्त्यक्त्वा मृगद्विजाः ॥ २४॥

[2]वयं पार्थैर्वने सम्यक् सह वत्स्याम निर्वृताः ॥ २५

**वैशम्पायनः—**

इत्येवं विविधा वाचो नानाजनसमीरिताः ।

---

1. अ—रूपलै । क-ख-घ—उद्बिलै ।
2. अ-क-ख-ग-घ-ङ—सौबलः प्रतिपद्येत सदुर्योधनबान्धवः ।
[अधिकः पाठः अन्वयरहितश्च]

शुश्राव पार्थश्श्रुत्वा च न विचक्रेऽस्य मानसम् ॥ २६

ततः प्रासादसंस्थास्तु समन्ताद्वै गृहे गृहे ।
ब्राह्मणक्षत्रियविशां शूद्राणां चैव योषितः ॥ २७

ततः प्रासादजालानि उत्पाट्यावरणानि च ।
ददृशुः पाण्डवान् [1]दीनान् रौरवाजिनवाससः ॥ २८

कृष्णां त्वदृष्टपूर्वां तां व्रजन्तीं पद्भिरेव च ।
एकवस्त्रां रुदन्तीं तां मुक्तकेशीं रजस्वलाम् ॥ २९

दृष्ट्वा तदा स्त्रियस्सर्वा विवर्णवदना भृशम् ।
विलप्य बहुधा मोहाद् दुःखशोकेन पीडिताः ॥ ३०

हा हा धिग्धिग्धिगित्युक्त्वा नेत्रैरश्रूण्यवर्तयन् ॥ ३०॥

जनस्याथ वचश्श्रुत्वा स राजा भ्रातृभिस्सह ।
उद्दिश्य वनवासाय प्रतस्थे कृतनिश्चयः ॥ ३१॥

तस्मिन् सम्प्रस्थिते कृष्णा पृथां प्राप्य यशस्विनीम् ।
अपृच्छद्भृशदुःखार्ता याश्चान्यास्तत्र योषितः ॥ ३२॥

यथार्हं वन्दनाश्लेषान् कृत्वा गन्तुमियेष सा ।
ततो निनादस्सुमहान् [2]पाण्डवान्तःपुरेऽभवत् ॥ ३३॥

कुन्ती च भृशसन्तप्ता द्रौपदीं प्रेक्ष्य गच्छतीम् ।

---

1. अ-क—दान्तान् वल्कला। ग—दीनान्वल्कला। ङ—दीसान्।
2. ख-च—पाण्डवानां विवासनात्। पाण्डवानां पुरेऽभवत्।

शोकविह्वलया वाचा कृच्छ्राद्वचनमब्रवीत् ॥ ३४॥

कुन्ती—

वत्से शोको न ते कार्यः प्राप्येदं व्यसनं महत् ।
स्त्रीधर्माणामभिज्ञाऽसि शीलाचारवती तथा ॥ ३५॥

न त्वां सन्देष्टुमर्हामि भर्तॄन् प्रति शुचिस्मिते ।
साध्वी गुणसमाधानैर् भूषितं ते कुलद्वयम् ॥ ३६॥

सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयाऽनघे ।
अरिष्टं गच्छ पन्थानं मदनुध्यानबृंहिता ॥ ३७॥

भाविन्यर्थे हि सत्स्त्रीणां वैक्लब्यं नोपजायते ।
[1]गुरुधर्माभिगुप्ता च श्रेयः क्षिप्रमवाप्स्यसि ॥ ३८॥

सहदेवश्च मे पुत्रस् सदाऽवेक्ष्यो वने वसन् ।
यथेदं व्यसनं प्राप्य नावसीदेन्महामनाः ॥ ३९॥

वैशम्पायनः—

तथेत्युक्त्वा तु सा देवी स्रवन्नेत्रजलाविला ।
शोणिताक्तैकवसना मुक्तकेश्यभिनिर्ययौ ॥ ४०॥

तां क्रोशन्तीं पृथा दुःखाद् अनुवव्राज गच्छतीम् ।
अथापश्यत् सुतान् सर्वान् हृताभरणवाससः ॥ ४१॥

रुरुचर्मावृततनून् ह्रिया किञ्चिदवाङ्मुखान् ।

1. ख-ग-घ—श्रुतधर्मा च शुद्धा च। ङ—श्रितधर्मा च शुद्धा च।

परैः परीतान् संहृष्टैस् सुहृद्भिश्चानुशोचितान् ॥ ४२॥

तदवस्थांस्तु तान् सर्वान् पश्यन्ती वत्सला शुभा ।
[1]संस्वजानाऽपतच्छोकात् तत्तद्विलपती बहु ॥ ४३॥

कुन्ती—

कथं सद्धर्मचारित्रवृत्तस्थितिविभूषितान ।
[2]अक्षुद्रांश्चैव भक्तांश्च दैवतेज्यापरान सतः ॥ ४४॥

सदा व्यसनमभ्यागाद् विधेः कोऽयं विपर्ययः ॥ ४५

[3]कस्यापनयनं चेदं नाहं पश्यामि वो धिया ।
स्यात्तु मद्भाग्यदोषोऽयं याऽहं युष्मानजीजनम् ॥ ४६

दुःखायासभुजोऽत्यर्थं युक्तानप्युत्तमैर्गुणैः ।
कथं वत्स्यथ दुर्गेषु वनेष्वृद्धिविनाकृताः ॥ ४७
वीर्यशक्तिबलोत्साहतेजोभिरकृशाः कृशाः ॥ ४७॥

यद्येतदहमज्ञास्यं वनवासं हि वो ध्रुवम् ।
शतशृङ्गान्मृते पाण्डौ नागमिष्यं नगाह्वयम् ॥ ४८॥

धन्यं वः पितरं मन्ये तपस्तप्त्वा मृतं तदा ।
यः पुत्राधिमसम्प्राप्य स्वर्गेच्छामकरोत् प्रियाम् ॥ ४९॥

---

1. ख—सा स्वजा नृपतीन्
ङ—सा स्वजाना पत (ग) सस्वजे नापतच्छो ।
2. अ-ख—अक्षुद्रान् गुरुभक्तांश्च । घ—अक्षुद्रानुरुभक्तांश्च ।
3. अ—तस्यापनयनं चेदं नाहं पश्यामि वो धिया ।
क—कस्यामप्यापदि त्वेवं ख-घ—कस्यापनयजं ।

धन्यां चातीन्द्रियज्ञानां प्राप्तां वै परमां गतिम् ।
मन्येऽद्य माद्रीं धर्मज्ञां कल्याणीं सर्वथैव तु ॥ ५०॥

[1]गत्या नत्या च मत्या च माद्र्याऽहमतिसंहिता ।
जीवितप्रियतामेतां धिगिमां क्लेशभागिनीम् ॥ ५१॥

पुत्रकान् न विहास्येऽहं कृच्छ्रलब्धान् प्रियान् सतः ।
सह यास्यामि हि वनं हा कृष्णे किं जहासि माम् ॥ ५२॥

ममान्तो नैव विहितस् तेनायुर्न जहाति माम् ॥ ५३

हा पाण्डो हा महाराज कासि किं समुपेक्षसे ।
पुत्रान् विवास्यतस्साधून् अरिभिर्द्यूतवञ्चितान् ॥ ५४

सहदेव निवर्तस्व ननु त्वमसि मे प्रियः ।
शरीरादपि माद्रेय मां मा त्याक्षीः कृपाऽस्तु ते ॥ ५५

व्रजन्त्विमे भ्रातरस्ते यदि सत्याभिसंश्रिताः ।
मत्परित्राणजं धर्मम् इहैव त्वमवाप्नुहि ॥ ५६

वैशम्पायनः—

एवं विलपतीं कुन्तीम् [2]अभिसान्त्व्य प्रणम्य च ।
पाण्डवा विगतानन्दा वनायैव प्रवव्रजुः ॥ ५७

विदुरश्चैव तामार्तां कुन्तीमाश्वास्य हेतुभिः ।

1. अ-क—रत्या मत्या च गत्या च माद्र्याऽहमतिसन्धिता ।
ख—न गत्या न च मत्या च । 2. ख-ग-क—अभिवाद्य

प्रावेशयद्गृहं क्षत्ता स्वयमार्ततरश्शनैः ॥ ५८

[1]राजा तु धृतराष्ट्रस्स शोकोपहतचेतनः ।
क्षत्तुस्सम्प्रेषयामास शीघ्रमागम्यतामिति ॥ ५९

ततो जगाम विदुरो धृतराष्ट्रनिवेशनम् ।
तं पर्यपृच्छत् संविग्नो धृतराष्ट्रो नराधिपः ॥ ६०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां सभापर्वणि सप्ततितमोऽध्यायः* ॥ ७० ॥

॥ २८ ॥ अनुद्यूतपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

[ अस्मिन्नध्याये ६० श्लोकाः ]

---

* अ—कोशे-नाताध्यायसमाप्तिर्दृश्यते

1. अ-ख-ग-घ-ङ—कोशेषु अधिकः पाठः

ततश्शब्दो महानासीत् सर्वेषामेव भारत ।
अन्तःपुराणां रुदतां दृष्ट्वा कुन्तीं तथागताम् ॥ १

तस्यास्स्नेहं तु पुत्रेषु कृपणान् पाण्डवांश्च वै ।
दृष्ट्वा कुरुस्त्रियस्सर्वा रुरुदुश्शोकविह्वलाः ॥ २

ततः कुन्तीं समुत्सृज्य तदा राजा युधिष्ठिरः ।
वने वस्तुं मतिं कृत्वा प्रतस्थे भ्रातृभिस्सह ॥ ३

ततस्सम्प्रस्थिते पार्थे निष्परिच्छदभूषणे ।
भृशं दुःखं बभूवाथ पुरे सर्वजनस्य वै ॥ ४

ततो हलहलाशब्दो जज्ञे पार्थस्य पृष्ठतः ।
नराणां प्रेक्षतां यान्तं पाण्डवं भृशदुःखितम् ॥ ५

ततस्स्त्रियः कौरववंशभृत्या
याश्चाप्यन्या हस्तिनसाह्वयेऽपि ।

तासां नादः प्रादुरभूत् तदानीं
वनं प्रयाते धर्मराजे महात्मनि ॥ ६

तथा नादो रुदतीनां तदाऽऽसीद्
राजन् दुःखात् कुररीणामिवोच्चैः ।
ततो निपेतुर्ब्राह्मणक्षत्रियाणां
विट्छूद्राणां चैव भार्यास्समन्तात् ॥ ७

तन्निर्याणे दुःखितः पौरवर्गो
गजाह्वयेऽतीव बभूव राजन् ॥ ७॥

यथा पुरा गच्छति राघवे वनं
शोकोऽयोध्यायां हीनराज्ये बभूव ।
तथा शोको हस्तिनसाह्वयेऽभूत्
पार्थे वनं गच्छति हीनराज्ये ॥ ८॥

ततश्च सर्वे च जनास्समन्तात्
स्त्रियश्च वृद्धाश्च कुमारकाश्च ।
तथा वनं गच्छति धर्मराजे
शोकेनार्ता राजमार्गं प्रपेदुः ॥ ९॥

ततः प्रासादहर्म्येषु वसुधायां च भूमिषु ।
स्त्रीणां च पुरुषाणां च सुमहान् निस्स्वनोऽभवत् ॥ १०॥

ततश्शोकसमाविष्टः पाण्डवस्सपुरोहितः ।
स राजा राजमार्गेण नृनारीसङ्कुलेन च ॥ ११॥

कथञ्चिन्निर्ययौ धीमान् कृष्णया च सहानुजैः ॥ १२

स वर्धमानद्वारेण निस्सृत्य गजसाह्वयात् ।
निवर्तयामास च तं जनौघं दुःखितं बहु ॥ १३

विसृज्यमानः पार्थेन जनौघश्शोकसङ्कुलः ।
पुरस्य न निवर्तेत पार्थस्नेहात् तथा नृप ॥ १४

ततोऽब्रवीद्धर्मराजो जनौघं स्नेहसंयुतम् ।
जनस्य हि कृतस्नेहो बाष्पगद्गदया गिरा ॥ १५

युधिष्ठिरः—

यूयं हि सुहृदोऽस्माकम् अस्मान् कृत्वा प्रदक्षिणम् ।
वृद्धैर्बालैस्सह स्त्रीभिर् निवर्तध्वं गृहान् प्रति ॥ १६

विसृज्य खेदं देशं च भ्रातृभिस्सह कृष्णया ।
वने द्वादश वर्षाणि वत्स्याम्येकं च वै तथा ॥ १७

द्रष्टा वः पुनरेत्यास्मि सर्वे सम्मन्तुमर्हथ ॥ १७॥

वैशम्पायनः—

श्रुत्वा च धर्मराजस्य वाक्यानि करुणानि च ।
रुरुदुस्सर्वतो राजन् सर्वे पौरास्स्त्रियश्च वै ॥ १८॥

उत्तरीयैः करैश्चैव सञ्छाद्य वदनानि च ।
तज्जनाश्शोकसन्तप्ता मुहूर्तं पितृमातृवत् ॥ १९॥

हृदयैश्शून्यभूतैस्ते धर्मपुत्रप्रवासनम् ।
दुःखं सन्धारयन्ति स्म नष्टसंज्ञा इवाभवन् ॥ २०॥

ते विनीय तमायासं धर्मराजवियोगजम् ।
शनैर्ब्रुवंस्तदाऽन्योन्यं विनष्टास्स्म वयं त्विति ॥ २१॥

ततो विसृज्य तान् राजन् प्रयाताः पाण्डवास्तदा ॥ २२

ततस्सर्वे द्विजा राजन् पौराश्च स्त्रीगणैस्सह ।
विक्रुश्य विलपित्वा च स्नेहात् पार्थं ययुः पुनः ॥ २३

प्राक्रोशन् बहुधा तत्र विलपन्तः पुनः पुनः ॥ २३॥

पापं प्रजानां धर्माद्धि दृश्यते बलवत्तरम् ।
श्रिया हीना बभूवुर्यत् पार्थाश्चापि सुधार्मिकाः ॥ २४॥

एवमत्यर्थकारुण्यं वच आसीज्जनस्य हि ॥ २५

ततः केचिन्महात्मानं विलपन्ति युधिष्ठिरम् ।
अपरे भीमसेनं तु विलपन्ति पुनः पुनः ॥ २६

केचिद्वै विलपन्ति स्म पार्थं शस्त्रभृतां वरम् ।
कारुण्यान्नकुलं केचित् सहदेवं तथाऽपरे ॥ २७

कृष्णां च राजपुत्रीं तां सततं सुखसंयुताम् ।
अनर्हां वनवासस्य विलपन्त्यथ चापरे ॥ २८
तेषां गुणांस्तथोद्दिश्य विलप्याथ पुनः पुनः ।
एवमूचुर्महाराज पुनर्जनपदास्तथा ॥ २९
तेषां विलपितं श्रुत्वा कुरवस्ससुहृद्गणाः ।
स्त्रीणां च पुरुषाणां च दुःखिताः प्रययुर्ह्रिया ॥ ३०
ततः पार्थान् समालोक्य राजन् यातान् वनं प्रति ।
भीष्मद्रोणकृपाश्चैव द्रौणिश्चैव तु सञ्जयः ॥ ३१
विदुरश्च विकर्णश्च तथाऽन्ये कुरुपुङ्गवाः ।
विप्राः पौराश्च राजेन्द्र तान् ययुश्शोककर्शिताः ॥ ३२
न कश्चिदब्रवीत् तत्र धार्तराष्ट्रभयात् तदा ॥ ३२॥
ततः केचिद् ब्रुवन्ति स्म ब्राह्मणा निर्भयास्तदा ।
शोचमानान् पाण्डुसुतान् अवेक्ष्य भरतर्षभ ॥ ३३॥

ब्राह्मणाः—

विषमं पश्यते राजा सर्वथा तमसा वृतः ।
धृतराष्ट्रस्सुदुर्बुद्धिर् न च धर्मं प्रपश्यति ॥ ३४॥
न हि पापमपापात्मा रोचयिष्यति पाण्डवः ।
भीमो वा बलिनां श्रेष्ठो जिष्णुर्वा रथिनां वरः ॥ ३५॥
कुत एव महाप्राज्ञौ माद्रीपुत्रौ स्मरिष्यतः ॥ ३६
तद्राज्यं पितृतः प्राप्तं धृतराष्ट्रो न मृष्यते ॥ ३६॥
भीष्मद्रोणकृपादीनां अधर्ममखिलं भवेत् ।
ये तु वारयितुं शक्ता न शेकुस्तत्र ते तदा ॥ ३७॥
विवास्यमानानारण्ये छलद्यूतेन पाण्डवान् ॥ ३८
पितेव हि नृपोऽस्माकम् अभूच्छान्तनवः पुरा ।
विचित्रवीर्यो राजर्षिः पाण्डुश्चैव सुधार्मिकः ॥ ३९
अस्मिन् वै पुरुषव्याघ्रे विप्रवासं गते सति ।
धर्मशीलानिमान् प्राज्ञान् सहितान् पश्य पाण्डवान् ॥ ४०
धृतराष्ट्रस्सपुत्रो वै नित्यं दुष्टो न मृष्यते ॥ ४०॥
वयमेतदमृष्यन्तस् सर्व एव पुरोत्तमात् ।

कुरून् विहाय गच्छामो यत्र याति युधिष्ठिरः ॥ ४१॥

वैशम्पायनः—

तांस्तथा वदतो विप्रान् दुःखितान् दुःखकर्शितः ।
उवाच परमप्रीतो धर्मराजो युधिष्ठिरः ॥ ४२॥

युधिष्ठिरः—

परो वृद्धो गुरुश्रेष्ठो धृतराष्ट्रः पिता मम ।
अवश्यकार्या तत्प्रीतिर् अस्माभिरिति नो व्रतम् ॥ ४३॥
भवन्तस्सुहृदोऽस्माकम् अस्मान् कृत्वा प्रदक्षिणम् ।
पुत्रैर्दारैश्च दासैश्च निवर्तध्वं गृहान् प्रति ॥ ४४॥
द्रष्टा वः पुनरेवास्मि त्रयोदशसमागमे ॥ ४५

वैशम्पायनः—

इत्युक्त्वा धर्मराजोऽथ तूष्णीम्भूत्वा जगाम ह ॥ ४५॥

जनमेजयः—

कथं प्रयाताः पार्थास्ते पुरादारण्यकं प्रति ।
निकृत्या धार्तराष्ट्रैश्च तन्मे ब्रूहि द्विजोत्तम ॥ ४६॥

वैशम्पायनः—

तथा वृत्तं महाराज पार्थानां गमनं शृणु ॥ ४७
यथा रामः पुरं त्यक्त्वा पुराऽयोध्यां वनं ययौ
लक्ष्मणेन सह भ्रात्रा सीतया चैव भार्यया ॥ ४८
कैकेय्या कुब्जया चैव राज्ञा दशरथेन च ।
राज्याद्विभ्रंशितस्तैस्तु श्रियं त्यक्त्वा वनं ययौ ॥ ४९
तथैव पाण्डुपुत्रोऽथ धर्मराजो नृपोत्तमः ।
दुर्योधनेन नीचेन बलिना सौबलेन च ॥ ५०
राज्ञा च धृतराष्ट्रेण छलद्यूते त्रिभिस्स्थितैः ।
राज्याद्विभ्रंशितो राजा सतां धर्ममनुस्मरन् ॥ ५१
पुरं नागाह्वयं त्यक्त्वा श्रियं चैव सुदुर्लभाम् ।
भ्रातृभिस्सह राजेन्द्र कृष्णया सह भार्यया ॥ ५२
रामो यथा महाराज धर्मपुत्रो ययौ तथा ॥ ५२॥

## ॥ एकसप्ततितमोऽध्यायः ॥

धृतराष्ट्रेण विदुरं प्रति पाण्डवानां वनप्रस्थानसमये चेष्टाविशेषप्रश्ने विदुरेण तत्तच्चेष्टाविशेषकथनपूर्वकं तत्तदभिप्रायाविष्करणम् ॥ १ ॥ नारदेन धृतराष्ट्रसभायां चतुर्दशे वत्सरे कौरवाणां विनाशकथनम् ॥ २ ॥ दुर्योधनादीनां द्रोणशरणागतिः ॥ ३ ॥ द्रोणेन दुर्योधनाय हितोपदेशः ॥ ४ ॥

धृतराष्ट्रः—

कथं गच्छति कौन्तेयो धर्मराजो युधिष्ठिरः ।
भीमसेनस्सव्यसाची माद्रीपुत्रौ च तावुभौ ॥ १
धौम्यश्चैव कथं क्षत्तर् द्रौपदी च यशस्विनी ॥ १॥
श्रोतुमिच्छाम्यहं सर्वं तेषामिङ्गितचेष्टितम् ॥ २

विदुरः—

वस्त्रेण संवृत्य मुखं कुन्तीपुत्रो युधिष्ठिरः ।
बाहू विशालौ कृत्वा च भीमो गच्छति पाण्डवः ॥ ३
सिकता वपन् सव्यसाची राजानमनुगच्छति ।
माद्रीपुत्रस्सहदेवो मुखमालिप्य गच्छति ॥ ४
पांसूपलिप्तसर्वाङ्गो नकुलश्चित्तविह्वलः ।
दर्शनीयतमो वीरो राजानमनुगच्छति ॥ ५
कृष्णा केशैः प्रतिच्छाद्य मुखमायतलोचना ।
दर्शनीया प्ररुदती राजानमनुगच्छति ॥ ६

धौम्यो याम्यानि सामानि रौद्राणि च विशाम्पते ।
गायन् गच्छति मार्गेषु कुशानादाय पाणिना ॥ ७

धृतराष्ट्रः—
विविधानीह रूपाणि कृत्वा गच्छन्ति पाण्डवाः ।
तन्ममाचक्ष्व विदुर कस्मादेवं व्रजन्ति ते ॥ ८

विदुरः—
[1]निकृत्यापि च ते पुत्रैर् हृते राज्ये धनेषु च ।
न धर्माच्च्यवते बुद्धिर् धर्मराजस्य धीमतः ॥ ९

योऽसौ राजा घृणी नित्यं धार्तराष्ट्रेषु भारत ।
निकृत्या क्रोधसन्तप्तो नोन्मीलयति लोचने ॥ १०

नाहं जनं निर्दहेयं दृष्ट्वा घोरेण चक्षुषा ।
पिधाय तु मुखं राजा तस्माद्गच्छति पाण्डवः ॥ ११

यथा च भीमो व्रजति तन्मे निगदतश्शृणु ॥ ११॥
बाह्वोर्बले नास्ति समो ममेति भरतर्षभ ।
बाहू विशालौ कृत्वाऽथ भीमसेनोऽनुगच्छति ॥ १२॥

बाहू दर्शयमानोऽपि बाहुद्रविणदर्पितः ।
चिकीर्षन् कर्म शत्रुभ्यो बाहुद्रव्यानुरूपतः ॥ १३॥

प्रदिशञ्छरसम्पातान् कुन्तीपुत्रोऽर्जुनस्तदा ।

---

1. अ—निकृतैराहृते पुत्रैस् तव राज्ये धनेऽपि च ।
क—विकृतस्यापि । ग—निकृतस्यापि ।

सिकता वपन् सव्यसाची राजानमनुगच्छति ॥ १४॥

असक्तास्सिकतास्तस्य यथा सम्प्रति भारत ।
असक्तं शरवर्षाणि तथा मोक्ष्यति शत्रुषु ॥ १५॥

न मे कश्चिद्विजानीयान्मुखमद्येति भारत ।
मुखमालिप्य तेनासौ सहदेवोऽपि गच्छति ॥ १६॥

नासां मनांस्याददेयं मार्गे स्त्रीणामिति प्रभुः ।
[1]पांसूपलिप्तसर्वाङ्गो नकुल[2]स्तेन गच्छति ॥ १७॥

एकवस्त्रा तु रुदती मुक्तकेशी रजस्वला ।
शोणि[3]ताक्तार्द्रवसना द्रौपदी वाक्यमब्रवीत् ॥ १८॥

यत्कृतेऽहमिदं प्राप्ता तेषां वर्षे चतुर्दशे ।
हतपत्यो हतसुता हतबन्धुजनप्रियाः ॥ १९॥

बह्वयस्रशोणितदिग्धाङ्ग्यो मुक्तकेश्यो रजस्वलाः ।
एवं कृतोदका भार्याः प्रवेक्ष्यन्ति गजाह्वयम् ॥ २०॥

कृत्वा तु नैर्ऋतान् दर्भान् धीरो धौम्यः पुनः पुनः ।
सामानि गायन् याम्यानि पुरतो याति भारत ॥ २१॥

हतेषु भरतेष्वाजौ कुरूणां कुरवस्तदा ।
एवं सामानि [4]गायन्त्वित्युक्त्वा धौम्योऽपि गच्छति ॥ २२॥

---

1 अ-घ—पांसूपचित । 2. ख-घ-ङ—स्तेनु ।
3. ख-ग-घ-ङ- तार्द्राक्त । 4 क-ख-ग-घ—गायन्ती

प्रस्थाप्य पाण्डवान् [1]शेषान् निश्शेषस्ते भविष्यति ।
इति धौम्यो व्यवसितो [2]रौद्रसामानि गायति ॥ २३॥

एवमाकारलिङ्गैस्तैर् व्यवसायं मनोगतम् ।
कथयन्तश्च कौन्तेया वनं जग्मुर्मनस्विनः ॥ २४॥

एवं तेषु नराग्र्येषु निर्यत्सु गजसाह्वयात् ।
अनभ्रे विद्युतश्चासन् भूमिश्च समकम्पत ॥ २५॥

राहुरग्रसदादित्यम् अपर्वणि विशाम्पते ।
उल्का चाप्यपसव्यं तु पुरस्कृत्वा व्यशीर्यत ॥ २६॥

प्रव्याहरन्ति क्रव्यादा गृध्रगोमायुवायसाः ।
देवायतनचैत्येषु प्राकाराट्टालकेषु च ॥ २७॥

एवमेते महाराज वनं गच्छन्ति पाण्डवाः ।
भरतानां विनाशाय राजन् दुर्मन्त्रिते तव ॥ २८॥

वैशम्पायनः—

एवमुक्त्वा तु विदुरस् तूष्णीमासीद्विशाम्पते ॥ २९

नारदश्च सभामध्ये कुरूणामग्रतस्स्थितः ।
महर्षिभिः परिवृतो रौद्रं वाक्यमुवाच ह ॥ ३०

नारदः—

इतश्चतुर्दशे वर्षे विनशिष्यन्ति कौरवाः ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ ३१

1 ख-च-ङ—श्रेष्ठान् । 2. अ—रौद्रयाम्यानि।

वैशम्पायनः—

इत्युक्त्वा दिवमाक्रम्य क्षिप्रमन्तरधीयत ।
ब्राह्मीं श्रियं च विपुलां बिभ्रद्देवर्षिसत्तमः ॥ ३२

धृतराष्ट्रः—

किमब्रुवन् नागरिकाः किं वै जानपदा जनाः ।
मह्यं तत्त्वेन चाचक्ष्व क्षत्तस्सर्वमशेषतः ॥ ३३

विदुरः—

ब्राह्मणाः क्षत्रिया वैश्याश् शूद्रा येऽन्ये वदन्त्यथ ।
तच्छृणुष्व महाराज वक्ष्यते च मया तव ॥ ३४

हा हा गच्छन्ति नो नाथास् समवेक्षध्वमीदृशम् ।
इति पौरास्सुदुःखार्ताश् शोचन्ति स्म समन्ततः ॥ ३५

ततः पौराश्च दीनास्ते गते पार्थे वनं तथा ।
गावो हीना यथा वत्सैः पुरं प्रविविशुः पुनः ॥ ३६

तदहृष्टमिवाकूजं गतोत्सवमिवाभवत् ।
नगरं हस्तिनपुरं सस्त्रीवृद्धकुमारकम् ॥ ३७

सर्वे चासन् निरुत्साहा व्याधिना बाधिता यथा ॥ ३७॥

पार्थान् प्रति नरा नित्यं चिन्ताशोकपरायणाः ।
तत्र तत्र कथां चक्रुस् समासाद्य परस्परम् ॥ ३८॥

कुन्ती च भृशदुःखार्ता पुत्रैस्सर्वैर्विवर्जिता ।
हीनवत्सा यथा धेनुर् विललाप सुदुःखिता ॥ ३९॥

वनं गते धर्मराजे दुःखशोकपरायणाः ।

बभूवुः कौरवा वृद्धा भृशं शोकेन पीडिताः ॥ ४०॥
ततः पौरजनस्सर्वश् शोचन्नास्ते जनाधिपम् ।
कुर्वाणाश्च कथास्तत्र ब्राह्मणाः पार्थिवं प्रति ॥ ४१॥

ब्राह्मणाः—

कथं नु राजा धर्मात्मा वने वसति निर्जने ।
तस्यानुजाश्च ते नित्यं कृष्णा च द्रुपदात्मजा ॥ ४२॥
सुखार्हाऽपि च दुःखार्ता कथं वसति सा वने ॥ ४३

विदुरः—

एवं पौराश्च विप्राश्च सदारास्सहपुत्रकाः ।
स्मरन्तः पाण्डवान् सर्वे बभूवुर्भृशदुःखिताः ॥ ४४
आविद्धा इव शस्त्रेण नाभ्यनन्दन् कथञ्चन ।
सम्भाष्यमाणा अपि ते न कञ्चित् प्रत्यपूजयन् ॥ ४५
न भुक्त्वा न शयित्वा ते दिवा वा यदि वा निशि ।
शोकोपहतविज्ञाना नष्टसंज्ञा इवाभवन ॥ ४६
यदवस्था बभूवार्ता ह्ययोध्या नगरी पुरा ।
रामे वनं गते दुःखाद्धृतराज्ये सलक्ष्मणे ॥ ४७
तदवस्थं बभूवार्तम् अद्येदं गजसाह्वयम् ।
गते पार्थे वनं दुःखाद्धृतराज्ये सहानुजैः ॥ ४८

वैशम्पायनः—

विदुरस्य वचश्श्रुत्वा नागरस्य गिरं च वै ।
भूयो मुमोह शोकाच्च धृतराष्ट्रस्सबान्धवः ॥ ४९

ततो दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
द्रोणं द्वीपममन्यन्त राज्यं चास्मै न्यवेदयन् ॥ ५०
अथाब्रवीत् तदा द्रोणो दुर्योधनममर्षणम् ।
दुश्शासनं च कर्णं च सर्वानेव च भारतान् ॥ ५१

द्रोणः—

अवध्यान् पाण्डवानाहुर् देवपुत्रान् द्विजातयः ॥ ५१॥
अहं तु शरणं प्राप्तान् वर्तमानान् यथाबलम् ।
आगतान् पालयिष्यामि धार्तराष्ट्रान् सराजकान् ॥ ५२॥
नोत्सहे समभित्यक्तुं दैवं मूलमतः परम् ॥ ५३
धर्मतः पाण्डुपुत्रा वै वनं गच्छन्ति निर्जिताः ।
ते च द्वादश वर्षाणि वने वत्स्यन्ति कौरवाः ॥ ५४
चरितब्रह्मचर्याश्च क्रोधामर्षवशानुगाः ।
वैरं प्रत्यानयिष्यन्ति [1]मम दुःखाय पाण्डवाः ॥ ५५
मया तु भ्रंशितो राज्या[2]द्द्रुपदस्सखिविग्रहे ।
पुत्रार्थमयजत् कोपाद् वधाय मम भारत ॥ ५६
याजोपयाजतपसा पुत्रं लेभे स पावकात् ।
धृष्टद्युम्नं द्रौपदीं च वेदीमध्यात् सुमध्यमाम् ॥ ५७
ज्वालावर्णो देवदत्तो धनुष्मान् कवची शरी ।

---

1. ख-च—धर्मयुक्ताश्च ।
2. अ—द्रुपदः सपरिग्रहः । ख-ग-च—द्रुपदः पार्षतः पुरा ।

मर्त्यधर्मतयाऽस्माकं तस्मान्मां भयमाविशत् ॥ ५८

गतो हि पक्षतां तेषां पार्षतः पुरुषर्षभः ।

मद्वधाय श्रितो धीमान् लोके चाप्यतिविश्रुतः ॥ ५९

[1]सृष्टप्राणो भृशं तात तस्माद्योत्स्ये तवारिभिः ॥ ५९॥

नूनं सोऽयमनुप्राप्तस् त्वत्कृते कालपर्ययः ।

त्वरितं कुरुत श्रेयो नैतदेतावता कृतम् ॥ ६०॥

मुहूर्तं सुखमेवैतत् कूलच्छायेव हैमनी ।

यजध्वं च महायज्ञैर् भोगानश्नीत पार्थिवाः ॥ ६१॥

इतश्चतुर्दशे वर्षे महत् प्राप्स्यथ वैशसम् ॥ ६२

दुर्योधन निशम्यैतत् प्रतिपद्य यथेच्छसि ।

शमं वा पाण्डवेयेषु प्रयुङ्क्ष्व यदि मन्यसे ॥ ६३

वैशम्पायनः—

द्रोणस्य वचनं श्रुत्वा धृतराष्ट्रोऽब्रवीदिदम् ॥ ६३॥

धृतराष्ट्रः—

सम्यगाह गुरुः क्षत्तर् उपावर्तय पाण्डवान् ॥ ६४

यदि वा न निवर्तन्ते सत्कृता यान्तु पाण्डवाः ।

सशस्त्ररथपादाता भोगवन्तश्च पुत्रकाः ॥ ६५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
॥ २८ ॥ अनुद्यूतपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[अस्मिन्नध्याये ६५ श्लोकाः]

---

1. अ—सृष्टः प्राणैर्भृशतरं । ग—दृष्टप्राणो भृशतरं ।

## ॥ द्विसप्ततितमोऽध्यायः ॥

धृतराष्ट्रसञ्जययोः संवादः ॥ १ ॥

वैशम्पायनः—

वनं गतेषु पार्थेषु निर्जितेषु दुरोदरे ।
धृतराष्ट्रं महाराज तदा चिन्ता समाविशत् ॥ १

तं चिन्तयानमासीनं धृतराष्ट्रं जनेश्वरम् ।
निश्श्वसन्तमनेकाग्रम् इति होवाच सञ्जयः ॥ २

सञ्जयः—

अवाप्य वसुसम्पूर्णां वसुधां वसुधाधिप ।
प्रव्राज्य पाण्डवान् राज्याद् राजन् किमनुशोचसि ॥ ३

धृतराष्ट्रः—

अशोच्यत्वं कुतस्तेषां येषां वैरं भविष्यति ।
पाण्डवैर्युद्धशौण्डैस्तु मित्रवद्भिर्महारथैः ॥ ४

सञ्जयः—

[1]तवेदं सुकृतं राजन् महद्वैरं भविष्यति ।
विनाशस्सर्वलोकस्य सानुबन्धो भविष्यति ॥ ५

वार्यमाणोऽपि भीष्मेण द्रोणेन विदुरेण च ।
पाण्डवानां प्रियां भार्यां द्रौपदीं धर्मचारिणीम् ॥ ६

1. अ—तदैव । ब—तदेवं । ग—तद्वेद ।

प्राहिणोदानयेहेति पुत्रो दुर्योधनस्तव ।
सूतपुत्रं सुमन्दात्मा निर्लज्जः प्रातिकामिनम् ॥ ७

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽपनीतानि पश्यति ॥ ८

बुद्धौ कलुषभूतायां विनाशे पर्युपस्थिते ।
अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ९

अनर्थाश्चार्थरूपेण अर्थाश्चानर्थरूपिणः ।
उत्तिष्ठन्ति विनाशाय नूनं तच्चास्य रोचते ॥ १०

न कालो दण्डमुद्यम्य शिरः कृन्तति कस्य चित् ।
कालस्य बलमेतावद् विपरीतार्थदर्शनम् ॥ ११

उपस्थितमिदं घोरं तुमुलं रोमहर्षणम् ।
पाञ्चालीमपकर्षद्भिस् सभामध्ये तपस्विनीम् ॥ १२

अयोनिजां रूपवतीं कुले जातां विभावरीम् ।
को नु तां सर्वधर्मज्ञां परिभूय यशस्विनीम् ॥ १३

पर्यानयेत् सभामध्यम् ऋते दुर्द्यूतदेविनम् ॥ १३॥

स्त्रीधर्मिणीं वरारोहां शोणितेन समुक्षिताम् ।
एकवस्त्रां च पाञ्चालीं पाण्डवानप्यवैक्षतीम् ॥ १४॥

हृतस्वान् भ्रष्टचित्तांस्तान् हृतदारान् हृतश्रियान् ।

विहीनान् सर्वकामेभ्यो दासभावमुपागतान् ॥ १५॥
धर्मपाशपरिक्षिप्तान् अशक्तानिव विक्रमे ॥ १६

क्रुद्धाममर्षितां कृष्णां दुःखितां कुरुसंसदि ।
दुर्योधनश्च कर्णश्च कटुकान्यभ्यभाषताम् ॥ १७

धृतराष्ट्रः—

तस्याः कृपणचक्षुभ्यां प्रदह्येतापि मेदिनी ।
अविशेषं भवेदेषां पुत्राणामपि सञ्जय ॥ १८

भारतानां स्त्रियस्सर्वा गान्धार्या सह संयुताः ।
प्राक्रोशन् भैरवं तत्र दृष्ट्वा कृष्णां सभागताम् ॥ १९

अग्निहोत्राणि सायाह्ने न चाहूयन्त सर्वशः ।
ब्राह्मणाः कुपिताश्चासन् द्रौपद्यास्सम्प्रधर्षणे ॥ २०

आसी[1]न्निष्ठानको घोरो निर्घातश्च महानभूत् ॥ २०॥

दिव उल्काश्चापतन्त राहुश्चार्कमुपाग्रसत् ।
अपर्वणि महाघोरं प्रजानां जनयन् भयम् ॥ २१॥

तथैव रथशालासु प्रादुरासीद्धुताशनः ।
ध्वजाश्चाप्यवशीर्यन्त भारतानामभूतये ॥ २२॥

दुर्योधनस्याग्निहोत्रे सृगालोऽत्यभषद्भृशम् ।
तं तथा प्रतिवाश्यन्त रासभास्सर्वतोदिशम् ॥ २३॥

---

1. ङ—निष्ठातको ।

प्रातिष्ठत ततो भीष्मो द्रोणेन सह सञ्जय ।
कृपश्च सोमदत्तश्च बाह्लीकश्च महारथः ॥ २४॥
ततोऽहमब्रवं तत्र विदुरेणापि चोदितः ।
वरं ददामि कृष्णायै काङ्क्षितं यद्यदिच्छसि ॥ २५॥
अवृणोत् तत्र पाञ्चाली पाण्डवानमितौजसः ।
सरथान् सधनुष्कांश्चाप्यनुज्ञासिषमप्यहम् ॥ २६॥
अथाब्रवीन्महाप्राज्ञो विदुरस्सर्वधर्मवित् ॥ २७

विदुरः—

एतदन्तास्स्थ भरता यद्वः कृष्णा सभागता ॥ २७॥
एषा पाञ्चालराजस्य सुता सा श्रीरनुत्तमा ।
पाञ्चाली पाण्डवानेतान् देवैस्सृष्टोपसर्पति ॥ २८॥
तस्याः पार्थाः परिक्लेशं न क्षमन्ते त्वमर्षिणः ।
वृष्णयो वा महेष्वासाः पाञ्चाला वा महौजसः ॥ २९॥
तेन सत्याभिसन्धेन वासुदेवेन रक्षितः ।
आगमिष्यति बीभत्सुः पाञ्चालैश्चाभिरक्षितः ॥ ३०॥
तेषां मध्ये महेष्वासो भीमसेनो महाबलः ।
आगमिष्यति धुन्वन् वै गदां दण्डमिवान्तकः ॥ ३१॥
ततो गाण्डीवनिर्घोषं श्रुत्वा पार्थस्य धीमतः ।
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ॥ ३२॥
ततस्स रोचते नित्यं पार्थैस्साम न विग्रहः ॥ ३३

कुरुभ्यो हि सदा मन्ये पाण्डवान् शक्तिमत्तरान् ॥ ३३॥

तथा हि बलवान् राजा जरासन्धो महाद्युतिः ।
बाहुप्रहरणेनैव भीमेन निहतो युधि ॥ ३४॥

तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ ।
उभयोः पक्षयोर्युक्तं क्रियतामविशङ्कया ॥ ३५॥

धृतराष्ट्रः—
एवं गावल्गणे क्षत्ता धर्मार्थसहितं वचः ।
उक्तवान् न गृहीतं वै मया पुत्रहितैषिणा ॥ ३६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
सभापर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
॥ २८ ॥ अनुद्यूतपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये ३६॥ श्लोकाः]
॥ समाप्तमनुद्यूतपर्व सभापर्व च ॥

---

अस्मिन् सभापर्वणि ४५११ श्लोकाः*

---

॥ इतः परं आरण्यपर्व भविष्यति तस्यायमाद्यः श्लोकः ॥

जनमेजयः—
एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैस्सहामात्यैर् निकृत्या द्विजसत्तम ॥

इति

---

* अस्मिन् कोशे अध्यायक्रमेण श्लोकसङ्ख्याने श्लोकाः—४५०७ भवन्ति–तथाऽपि सप्तविंशपुटे पाठान्तरप्रदर्शनस्थले प्रथमपठितसार्ध-श्लोकद्वयस्य मूल एव दर्शनात्–पश्चात्तनश्लोकचतुष्टयस्य लक्षालङ्कारकारै-रादृतत्वाच्च एतैश्चतुर्भिश्श्लोकैस्सह ॥ (४५११) ॥ श्लोका भवन्तीति ज्ञेयम्

|| श्रीः ||

श्रीमद्भिः वादिराजस्वामिभिर्विरचितायां

लक्षालङ्काराख्यायां महाभारतटीकायां

सभापर्वटीका

# || लक्षालङ्कारः ||

## || प्रथमोऽध्यायः ||

अहं हि विश्वकर्मा वा इत्यत्र—वै इति पदच्छेदः. विश्वानि समस्तानि कर्माणि दारुभिः क्रियमाणकर्माणि यस्य स इति योगेन मयोऽपि विश्वकर्मा. ८. यथाऽऽवेद्येत्यत्र—आवेद्येति पदच्छेदः. २५||. दशकिष्कुसहस्राणि मापयामास सर्वतः इत्यत्र—किष्कुर्हस्ते वितस्तौ चेत्युक्तत्वात् हस्त-परिमितो देशः किष्कुरित्युच्यते. दशसहस्रकिष्कुपर्यन्तं सभा-करणाय भूमिं मापयामास. माङ् मान इति धातोः मानदण्डेन मानं कारयामासेत्यर्थः. ३२.

## || द्वितीयोऽध्यायः ||

अभी(हिं)शून् प्रतिजग्राहेत्यत्र—अभीशून् रथरज्जूः. १६||. सह भ्रातृभिरच्युत इत्यत्र—अच्युतः भक्त्यादिगुणैः च्युतिरहितः. ३०.

## ॥ तृतीयोऽध्यायः ॥

उत्तरेण तु कैलासमित्यत्र—कैलासमुत्तरेण मैनाकपर्वतं प्रति कैलासपर्वतमारभ्य मैनाकपर्वतपर्यन्तम्. आयतां ? बिन्दुसरोवराख्यतीर्थस्याभिमुख्ये विद्यमानायां सभायां यत् भाण्डमासीत् तत् गृह्येति सम्बन्धः. ४॥–६. यौवनाश्वेन—मुचुकुन्देन. ८. यत्रेष्टं वासुदेवेनेत्यत्र—वासुदेवेन नारायणेन. प्रतिपत्तये—विश्वासाय. १८॥.

## ॥ चतुर्थोऽध्यायः ॥

तां तु कृत्वेत्यत्र—एषा सभा रचिता, ध्वजाग्र्यश्च मया कृतो भविष्यति. १. तत्र मल्ला इत्यत्र—हल्लाः नानावाद्यकुशलाः. १२॥.

## ॥ पञ्चमोऽध्यायः ॥

निर्विविक्षुरुदारधीरित्यत्र—नितरां विवेष्टुमिच्छुः निर्विविक्षुः. ९. कच्चिदर्थेन वा धर्ममित्यत्र—अर्थेन अर्थार्जनप्रयत्नेन धर्मं स्वविहितधर्मं न बाधसे कच्चित्, धर्मेण सदा स्नानादिव्यसनेन अर्थं राजपदवीयोग्यार्थं न बाधसे कच्चित्, अयं सन्न्यासिनां धर्मो न तु राज्ञः इति भावः. प्रीतिरेव सारः श्रेष्ठो यस्मिन, तेन कामेन उभौ धर्मार्थौ विबाधसे कच्चित्, वनितादिविषयासक्तो भूत्वा धर्मार्थौ न जहासि किमिति भावः.

२०॥. कच्चिद्राजगुणैरित्यत्र—सन्धिविग्रहयानासनद्वैधीभावाश्रयाख्यैः षड्भिः राजगुणैः सह, सामदानभेददण्डप्रभावोत्साहमन्त्राख्यान् सर्वोपायान्. सम्यक्—व्रलं—सम्यगबलम्—कार्यं बले अबले च सति कर्तव्यं कर्म इति दश सदा निषेवसे किम्. २२॥. तथा सन्धायिकर्माणीत्यत्र—सन्धायीति सन्धिं सम्पादयन्तीति सन्धायीनि, तानि च तानि कर्माणि च, भरतस्त्वं वर्तसे किन्नु इति योजना. २३॥. आप्ताश्चैवाव्यवसिन इत्यत्र—व्यवसिनः—विरुद्धः अवसायः अध्यवसायः, तद्वन्तो न भवन्तीत्यव्यवसिनः. २४॥. कच्चिन्न तर्कैरत्यूहैरित्यत्र—तर्कैः एवं चेदेवं भविष्यतीत्यूहैः, दूतैः—परेषां दूतैः, अपरशङ्किताः—परवैरिण इति शङ्किता न भवन्तीति अपरशङ्किताः, जात्यादिकमाच्छाद्य तव समीपे सेवककलास्थिताः (?) वैरिण इत्यर्थः, तैस्त्वया वा तव अमात्यैर्वा, तव मन्त्रितं—आलोचनं न भिद्यते कच्चित्, अन्यैः न ज्ञायते कच्चिदित्यर्थः. २५॥. उदासीनेषु—त्वय्युदासीनेषु मध्यमेषु च त्वयि तव शत्रुषु च मैत्रीं दर्शयत्सु, वृत्तिः—तत्तदनुसारेण तव वर्तनम्. उपपद्यते कच्चित्, युक्ता जायते कच्चित्. तत्तत्स्वभावज्ञानात् तेष्वतिमैत्रीं न करोषि कच्चिदित्यर्थः. २७.कच्चिन्मन्त्रयन्नित्यत्र—एकः—स्वबन्धूनपि विहाय त्वमेक एव न मन्त्रयसे कच्चित्. वहुभिः—ज्ञाताज्ञातैर्बहुभिः. २९. कच्चिन्न सर्वे कर्मान्ता—

इत्यत्र, कर्मान्ताः कर्मकराः, "कर्मान्तः स्यात् कर्मकरो भुजिष्यः किङ्करो मतः" इति हलायुधः. प्रत्यक्षाः कच्चित्—स्वयमेव तान् दृष्ट्वा कर्मसु नियोजयासि कच्चित्. अथवा, परोक्षा वा—अत्र प्रत्यक्षपरोक्षयोः मध्यम्, केषुचित् प्रत्यक्षं, केषुचिदप्रत्यक्षं चेति द्वेधाऽपि स्थितिः प्रशस्यते; सर्वस्यापि स्वमुखेनैव करणं मन्त्र्यादिष्वविश्वासद्योतकत्वात् राज्ञो न धर्मः, सर्वेषां परमुखेनैव करणे स्वस्याप्रौढिसूचकत्वात् राज्ञो न धर्मः, तस्मात् दानसम्भावनादिकं स्वमुखेनैव कर्तव्यम्, बन्धशिक्षणादिकं तु परमुखेनैव कर्तव्यमिति भावः. ३३. नानवाप्तानीत्यत्र—अनवाप्तानि अनुपगृहीतानि कर्तुमनारब्धानीत्यर्थः, तानि कर्माणि न विदुः कच्चित्; कृतं वा कृतप्रायं वा कर्म सर्वैर्ज्ञातुं शक्यते, करिष्यमाणं तु केनापि न ज्ञेयमिति भावः. ३४॥. कच्चित् कारणिका इत्यत्र—परीक्षकः कारणिक इति वचनात्, कारणिकाः—अस्त्रशास्त्राभ्यासेषु परीक्षकाः आचार्या इत्यर्थः. ३५॥. कच्चित् सूत्राणीत्यत्र—सूचयन्ति तं तमर्थमिति सूत्राणि, अश्वगजादिलक्षणशास्त्राणि. See F.N. to pp 27. & श्लो. 123½. ब्राह्मणदोषप्रायश्चित्ताय क्रियमाणद्रव्यदण्डो ब्रह्मदण्डः—कच्चित्ते यास्यत इत्यत्र—अनुष्ठिताः त्वामनुसृत्य स्थिताः, गुणैः—विनयादिगुणैः, समाः, त्रयः—त्रयश्चाराः, परकटके स्थातुं, तत्रत्यवार्तामानेतुं, तदुक्तवार्तां स्वनिकटे यथावकाशं वक्तुं

चेति त्रयस्त्रयश्चाराः, यात्रायाम्—दण्डयात्रायां सत्याम्, पूर्वम्—यात्रापूर्वमेव. त्वत्तः? साम—प्रियवचनं, दानं द्रव्यदानं च, गच्छन्ति प्राप्नुवन्ति कच्चित्. तच्च विक्रमसे इत्यत्र—तत् पर-दलम्, कच्चिदात्मानमित्यत्र—आत्मानं स्वचित्तं, विजित्वा वशीकृत्य. See Footnote to pp. 27 "कच्चिदष्टादशान्येषां स्वपक्षे दश सप्त च । त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः"॥ इत्यत्र—स्वामी अमात्यः जनपदः दुर्गं दण्डः कोशः मित्रं चेति राष्ट्रालङ्कारभूताः सप्त प्रकृतयः, विद्वांसः कवयः सूताः गायकाः परिहासकाः पुराणपाठकाः धर्मशास्त्रनिर्णेतार-श्चेति सप्त सभालङ्काराः, प्रकृतयः कर्मकराः भिपजः गणकाः सेना चेति सर्वोपकारभूताश्चतस्रः प्रकृतयः, एवमष्टादश-तीर्थवत् तत्तच्चिकीर्षितविचाराय सदा सेव्यत्वात्तीर्थानीत्यु-च्यन्ते. इदं परपक्षे. स्वपक्षे तु, स्वस्य स्वचारैरविचार्यत्वात् स्वामिनं राजानं विना सप्तदश प्रकृतयः, सप्तदश तीर्थानि, अविज्ञातैः पाषण्डवेषादिना तैरप्यज्ञातैः त्रिभिस्त्रिभिश्चारकैर्वेत्सि कच्चित्. ३९॥. कच्चिद्विनयसम्पन्न—इत्यादिश्लोकत्रयं पुरो-हितगुणप्रतिपादकम्. ४१॥. अमात्यानुपधातीतानित्यत्र—उपध उपाधिः तेनातीतान्. ४५॥. उग्रप्रतिग्रहीतारमित्यत्र—कामयमानं पुरुषमुद्दिश्य स्त्रिय इव, अतिकामुकपुरुषं स्त्रिय इवेत्यर्थः. उग्रप्रतिग्रहीतारं—उग्रद्रव्यादिकरप्रतिग्रहीतारं त्वां

यज्ञादिसत्कर्मबहिष्कृतत्वात् पतितमिव याजकाः नावजानन्ति कच्चित्. ४७॥. हृष्टाः प्रदाना इत्यत्र—हृष्टाः दिने दिने हृष्टाः, प्रदानाः—दो–अवखण्डन इति धातोः प्रकृष्टं दानं परदलखण्डनं येभ्यस्ते. ४९॥. कच्चिद्भक्तं चेत्यत्र–भक्तं अन्नं, वेतनं जीवनार्थं दीयमानं द्रव्यम्. अन्नोपजीविनामन्नं द्रव्योपजीविनां द्रव्यमिति यावत्. ५०॥. भृताः—भटाः. ५१॥. कुलपुत्राः प्रधावत इत्यत्र–प्रधावतः युद्धे परान् प्रति धावतः. कदाचिद्दैव-वशात् परावृत्य प्रधावतः तव अर्थे इत्यर्थः. ५२॥. कच्चिन्नैको बहूनर्थानित्यत्र—कामात्मा कामलग्नचित्तः त्वं एक एव. यथाकामं—स्वेच्छानुसारेण. साम्परायिकान्—मोक्षोपयोगिभूतान. बहूनर्थान्—शास्त्रार्थान् निरन्तरश्रवण-मननादीन्. शासनानि—स्मृत्युक्तनित्यनैमित्तिकादिकर्मशास-नानि च. नानुशासि कच्चित्—न शिक्षसे कच्चित्. किमने-नेति न धिक्करोषि कच्चिदिति भावः. ५३॥. "कच्चित्पुरुषकारेण पुरुषः कर्म शोभयन्. । लभते मानमत्यन्तं भृतो वा वेतनं त्वयि" इत्यत्र—त्वयि वेतनं भृतो वा अयो वा(?)पुरुषकारेण स्वपौरुषेण. कर्म—युद्धकर्म. शोभयन् पुरुषः त्वत्तः अत्यन्तं मानं सत्कारं लभते कच्चित्. ५४॥. व्यसने चाभ्युपेता-नामित्यत्र—अभ्युपेतानां स्वशरणं गतानां. व्यसने सति बिभर्षि कच्चिदित्यन्वयः. ५६॥. विजितम्—युद्धे जये सति

हस्तगृहीतम्. ५७॥. त्रिविधं बलमित्यत्र—स्वभुजबलं, स्वसेनाबलं, स्वदैवबलं चेति त्रिविधम्. ५९॥. पार्ष्णिमूले चेत्यत्र—पार्ष्णिः पार्ष्णिग्राहकः. मूलं मूलभूतधनादिकं. ते उभे च विज्ञायेत्यर्थः. ६०. कच्चिदष्टाङ्गसंयुक्तेत्यत्र—अष्टभिरङ्गैः चतुर्विधसेनाङ्गैः. यत्र सारथिसूतचर्मवर्मचापायुधाख्यैः संयुक्ता. चतुर्विधबला—हस्त्यश्वरथपादाताख्यचतुर्विधबलवती चमूः. बलमुख्या—बलेन सत्वेन मुख्या. ६५॥. कच्चिल्लवं च मुष्टिं चेत्यत्र–"व्रीहिशाल्यादिकं धान्यं लूयते सल्लवं तु तत्. । कार्पासमुद्गमाषाद्यं मुष्टि मुष्टिग्रहं यतः"॥ इति वचनात् लवम्—लूञ्—छेदन इति धातोः लकुटेन? छेद्यं व्रीहिशाल्याद्यं लवमित्युच्यते. कार्पासमापमुद्गाद्यै (?) मुष्टिनैवोन्मूल्यत्वान्मुष्टिरित्यभिधीयते. रिपून् अभिधाय—अभितः प्राप्य. परराष्ट्रे द्विविधमिदं धान्यं निहंसि कच्चित्. ६६॥. कच्चित्कोशमित्यत्र—कोशं गोष्ठं वाहनं परमायुधं चोद्दिश्य योऽयमायः द्रव्यलाभः, सोऽनुष्ठितः कच्चित्. ६९॥. कच्चिदाभ्यन्तरेभ्य इत्यत्र—आभ्यन्तरः सूतसेनापतिसादिनिषादिपुरव्यावहारिकराष्ट्रान्तपालादयो बाह्याः, तेभ्यः अग्रे प्रथमम्. आत्मानमेव रक्षसि कच्चित्. तेषामत्युन्नतावप्यात्मक्षयः, अत्यवमानेऽप्यात्मक्षयः, अतस्तान् मध्यमपरिपाट्या पोषयसि कच्चिदित्यर्थः. तानुभयान् तेभ्यः आन्तरेभ्यः बाह्येभ्यश्च रक्षसि कच्चित्.

आन्तरबाह्ययोरन्योन्यं कलहो यथा न भवति तथा रक्षसि किम्. तान् आन्तरान् तान् बाह्यांश्च मिथः रक्षसि कच्चित्. ७०॥. कच्चिन्नपाने द्यूते वेत्यत्र—अह्नः पूर्वं विद्यमाना रात्रिः पूर्वाह्णपदेनोच्यते. तत्र क्रियमाणे पाने मधुपाने. व्यसनजं चित्तभ्रमाख्यव्यसनाज्जातं. व्ययं राज्यमपि न वै तिष्ठत्विति, स्त्रीपु कृतं व्ययं. द्यूते अक्षक्रीडादिद्यूते. क्रीडासु जलक्रीडादिक्रीडासु प्रमदासु अतिप्रियस्त्रीषु वा. व्यसनजं स्त्रीव्यसनाज्जातं तव व्ययं हारकङ्कणादिव्ययं न प्रतिजानन्ति कच्चित्. ७१॥. सुदुर्गतान्—सुष्ठु दुरवस्थागतान्. आयव्ययेनेति पाठे—आयव्ययेन ज्ञापितेनेत्यर्थः. ७३॥. अप्राप्तव्यवहारा इत्यत्र—अप्राप्तव्यवहाराः अज्ञातव्यवहाराः. ७७॥. भागशो विनिविष्टानीत्यत्र—भागशः तत्तदुचितभागैः विनिविष्टानि विशेषेण निर्दिष्टानि. तव राज्ये सर्वाऽपि कृषिः देवमातृका, देवकृतवृष्टिरेव, मातेव माता यस्याः सा न हि कच्चित्. किन्तु तटाकादिमातृकाऽप्यस्ति, अतोऽयं विचारः इति भावः. ७९॥. प्रतिगुञ्जाशतं वृद्ध्येत्यत्र—प्रति, एकैकं कृषीवलं प्रति, गुञ्जाशतं—शतगुञ्जापरिमितं द्रव्यं. वृद्ध्या—तदुचितवृद्ध्या ऋणं ददासि कच्चिदित्यर्थः. ८०॥. कच्चित्स्वनुष्ठितेत्यत्र—वार्ता वृद्धिजीवनरूपवैश्यवृत्तिः, स्वनुष्ठिता—सुष्ठु अनुष्ठिता. अल्पीयसीं वृद्धिमादाय अनुष्ठितेत्यर्थः. ८१॥. पञ्च पञ्च स्वनुष्ठिताः

इत्यत्र—स्वनुष्ठिताः, ग्रामे ग्रामे सम्यगर्पिताः. संहृत्य रिपुकटकात् भये सति पुञ्जीभूय. ८३. कच्चिन्नगरगुप्त्यर्थं इत्यत्र—ग्रामाः नगरस्य परितो विद्यमाना ग्रामाः. नगरवत् परिखाप्राकारादिना नगरोपमाः कृताः कच्चित्. ग्रामवत्-सङ्ग्रामादौ यावदायामवान् तद्वत् जनान् सम्पूर्य रक्षा कृता कच्चित्. त्वदर्पणाः—त्वत्त एव अर्पणं तत्र स्थापनं येषां ते. तैस्तैः कृतभटाश्चेत् कदाचित्ते च सर्वे (न सह ?) तवैव विरोधं कुर्युरिति भावः. ८४. कच्चिद्बलेनेत्यत्र—बलेन सदा सञ्चरणसत्त्वेन. अनुमताः सम्मताः साध्यक्षाः—महानगरे स्वनायकसहिताश्चाराः. समानि—लोकसम्मतचरित्राणि. विषमाणि—विषमचरित्राणि च. चरन्ति—आचरन्ति. पुराणि उद्दिश्य चरन्ति सञ्चरन्ति. ८५. कच्चिच्चारान्निशीत्यत्र—चारादिति पञ्चमी. ८७. कच्चिद्द्वौ प्रथमावित्यत्र—यामात्परत एवाथ स्वपेदिति वचनात् पूर्वयामादुपरितनौ चतुर्थयामप्रथमावित्यर्थः. ८८. कच्चिच्छरीरामित्यत्र—आबाधं दुःखं. ९२. कच्चिद्वैद्याश्चिकित्सायामित्यत्र—अष्टाङ्गायां, औषधसङ्ग्रहः, पेषणं, अग्न्यातपाभ्यां तापः, रसयोगः, नाडिपरीक्षा, अनुपानं, औषधदानं, पथ्यं चेति अष्टाङ्गायाम्. ९३. अर्थिप्रत्यर्थिन इत्यत्र—अर्थिनः याचकान्. प्रत्यर्थिनः—वैरिणः. नापास्यसि—न त्यजसि. धनैरेकं तर्पयन् सुशरै-

रेकं तर्पयसि कच्चिदित्यर्थः. ९४. कच्चित्ते सर्ववैद्येषु इत्यत्र—यतते अर्वा अश्वः? "अर्वा गन्धर्वोऽश्वः सप्तिर्वाजी तुरङ्गमस्तुरग" इति हलः. सर्ववैद्येषु—सकलविद्यासम्बन्धिषु नानाविधविद्यावस्तुष्वित्यर्थः. गुणेन वर्तते कच्चित् बलेन तानुलङ्घ्य च न गच्छति कच्चिदित्यर्थः. १००. सुष्ठु शोभनम्.? गुणवन्तीत्यत्र—तव गुणेन विनयादिगुणेन उपेताः प्राप्ताः इति द्विजानां विशेषणम्. १०२. कच्चिदार्यो विशुद्धात्मेत्यत्र—अदृष्टशास्त्रकुशलैरविवेकिभिः. चोरकर्मणीति निमित्तसप्तमी. चौर्याख्यनिमित्तात् हारितः देशान्तरं प्रापितः. विशुद्धात्मा वस्तुगत्या विशुद्धात्मा इति सम्बन्धः. १०७. दृष्ट इत्यत्र—सकारणैः पदशोधनादिकारणसहितैः. तज्ज्ञैः चौर्यशोधननिपुणैः याभिकैः दृष्टश्चोरइति निर्णीतः. दृष्टः—त्वया च दृष्टः. १०८. अर्थान्नपथ्या इत्यत्र—पथ्याः त्वदमात्यत्वात् पथ्येव मार्ग एव गन्तुं योग्याः. ते अमात्याः अर्थेन हृताः सन्तः, तन्नाशयेति केनचिद्दत्तधनहृताः सन्त इत्यर्थः. आढ्यस्य दरिद्रस्य वा अर्थान्न पश्यन्ति कच्चित्. १०९. नास्तिक्यमित्यत्र—दीर्घसूत्रता, "दीर्घसूत्रश्चिरक्रियः" इत्यभिधानात् चिरकालपर्यन्तमालोच्य कर्ता दीर्घसूत्रः. तस्य भावः. ११०. एकचिन्तनमित्यत्र—अच्र्यनामकचिन्तनमेकाग्रचिन्तनम्. १११. चातुर्मास्यादाधिकृतमित्यत्र—मासचतुष्टयं मासचतुष्टयमतीत्य.

१२१॥. कचित्सूत्राणीत्यत्र—सूत्राणि तत्तज्जातीनां सूचनात् गजादिशास्त्ररहस्यानि. १२३॥.

## ॥ अष्टमोऽध्यायः ॥

नरा दुष्कृतकर्माणइत्यत्र—सोढुमसह्यं दुस्सहमितिवत् कर्तुमशक्यं दुष्कृतं, तादृशं कर्म शुभकर्म येषां ते तथोक्ताः. २९.

## ॥ नवमोऽध्यायः ॥

अवतानैस्तथा गुल्मैरित्यत्र—अव अवस्तादेव तानो विस्तारो येषां ते. ३.

## ॥ दशमोऽध्यायः ॥

अनिशमित्यत्र—गीतवादित्रैः वेण्वाद्यैः. १५.

## ॥ एकादशोऽध्यायः ॥

दिव्यैर्नानाविधैरित्यत्र—भावद्भिः भा प्रभा, तद्वद्भिः. १४. न च सा क्षरेत्यत्र—क्षरा नाशवती न च. १४॥. अति सूर्यश्चेत्यत्र—अतिक्रम्य कथितस्ते. १५॥. सभानित्यत्र—सभा नित्या यस्येति विग्रहः. ?

## ॥ द्वादशोऽध्यायः ॥

पिताऽऽह त्वा च कौन्तेयेत्यत्र—त्वा—त्वां, पिता पाण्डुः आह इति सम्बन्धः. २९.

## ॥ त्रयोदशोऽध्यायः ॥

मुक्तकोपो बलान्वित इत्यत्र—मुक्तकोपो भव, बलान्वितो भव, साधुधर्मा भव, यज्ञादिकं क्रियतां, देयं दीयतां इत्येव पार्थस्य भाषितं श्रूयेत अश्रूयतेत्यर्थः. ८. वार्द्धुषिर्यज्ञसन्तान इत्यत्र—वार्द्धुषिः वृद्धीजीवनं कुर्वन् सर्ववर्णानां विशेषान् राजकर्माणि च घृतक्षीरदानादिना. यज्ञस्य सम्यक् तानः विस्तारः. यस्मात् स वणिक् गोरक्षां कर्षणं च जज्ञे जनयामासेति सम्बन्धः. १३. यस्मिन्—राजसूये. २०. येनाभिषिक्त इत्यत्र—येन राजसूयाभिषेकेण. २२. दर्वीहोमानुपादायेत्यत्र—स्रुचि क्रियमाणः चर्वाद्यसाधारणहोमो दर्वीहोमः. २४॥. धृष्टमिष्टमित्यत्र—धृष्टं धैर्ययुक्तम्. २७॥. सम्प्रशस्त इत्यत्र—क्रियारम्भे कर्षणादिना क्रियमाणभूपरीक्षायाम्. २८॥.

## ॥ चतुर्दशोऽध्यायः ॥

चतुर्भिर्भीमसेनाद्यैरित्यत्र—हितं हितवचनमुक्तः. १. भवन्तो राजसूयस्येत्यत्र—भवन्तः शंसन्तु इति योग्यपदाध्याहारः. ६॥. तं विश्रान्तमित्यत्र—क्षणिनं दत्तावसरम्. २५.

## ॥ पञ्चदशोऽध्यायः ॥

निदेशवाग्भिरित्यत्र—निदेशवाग्भिः ऋषीणामादेशवाग्रूपैः पुराणैः. ३. ऐलस्येक्ष्वाकुवंशस्येत्यत्र—इक्ष्वाकुवंशस्य इक्ष्वा-

कुकन्यावंशत्वात् इक्ष्वाकुवंशमैलस्य. ऐलं पुरूरवसम्. प्रकृतिं सोमवंशस्य मूलकारणमित्यर्थः. ४. तन् साम्राज्यमित्यत्र—तत् साम्राज्यं ययातिना अनुभूतं साम्राज्यम्. योनितः—जन्म आरभ्य. खण्डाधिपतींस्तान् सा स्वशे कृता. (?) ययातिवत् सर्वं राज्यं जरासन्धः स्वयमेव पालयतीति भावः. ८. भजतो न भजन्तीत्यत्र—अस्मात् मत्सम्बन्धाख्यकारणात् अप्रियेषु व्यवस्थितो माहिष्मकादिषु (?) प्रियं न करोतीत्यर्थः. २२॥. अथ हंस इति ख्यात इत्यत्र—अन्यः डिभिताग्रजहंसादन्यः कश्चिन्नरः मनुष्यश्च हंसाभिध आसीत्. अष्टादशावृतः. अष्टादशाक्षौहिणीसेनावृतः. स अन्यो हंसः निहतः. ४२॥. पुनर्निवेश्येत्यत्र—पुरमिति रेफान्तस्त्रीलिङ्गपूःपदस्य द्वितीया. ५३. त्रियोजनायतमित्यत्र—योजनया एकयोजनया युतं सहितं यथा भवति तथा विस्तीर्णम्. सद्म—अन्तःपुरम्. योजनान्ते—एकैकयोजनामध्ये, शतद्वारं—दुर्गान्तर्वर्तिगृहाणां शतसङ्ख्याकद्वारैर्युक्तम्. ५७॥. एवमेत इत्यत्र—रथाः महारथाः. ६०॥. प्रसेनजिच्चेत्यत्र—प्रसेनेन सहितः जित् सत्राजित् प्रसेनजित्. यस्य सत्राजितः अन्धकभोजस्येति पाठे अन्धककुलप्रभोर्भोजकुलजस्य उग्रसेनस्येत्यर्थः. ६४.

## ॥ षोडशोऽध्यायः ॥

पुरुषव्रजमिति—पुरुषाख्यपशूनां व्रजं गोष्ठम्. ९.

## ॥ सप्तदशोऽध्यायः ॥

बहुरत्नसमाचितेत्यत्र—बहुभिः रत्नसमैः पुरुषैराचिता. श्रेयः—श्रेष्ठं पुरुषम्. ४. साम्राज्येनेति शुश्रुम इत्यत्र— साम्राज्येनेति इत्थंभूतलक्षणे चेयं तृतीया. साम्राज्यसहिता इति शुश्रुम इत्यर्थः. ६. जयेत् सम्यगित्यत्र—नयो विनयः. १०. तस्माद्वंश्यानित्यत्र—युगे युगे सतां वंश्यान् वंशे भवान्. अनुमृशन्—विचारयन्. एवं बालकवत् नैव हन्यमानः, नैव किन्तु सर्वान् विचार्य कश्चिदर्थमारभमाणः तत्कार्यं साधयेदेव. १४.सङ्ग्राह्यलक्षणमित्यत्र—धर्मार्थनयलक्षणैः, धर्मार्थनया एव लक्षणानि असाधारणधर्मा येषां ते तैः पुरुषैः सङ्ग्राह्यं यल्लक्षणं धर्मार्थनयाख्यं तत्त्रितयमपि. पाप इति तं जरासन्धं विद्धि. १५. एतद्बलात्—धर्मार्थनयाख्यलक्षणत्रितयबलात्. १६. मूर्धाभिषिक्तमित्यत्र—यः पुमान् पुरुषतः सत्पुरुषात्. भागं एकैकगुणभागम्. नादत्ते—सः पुर्वोक्तं प्रधानपुरुषं द्रष्टा च न. १८. तण्डुलप्रस्थको—इत्यत्र—अक्षतैः शिवपूजार्थं प्रतिदिनं प्रस्थप्रस्थतण्डुलान्. तण्डुलप्रस्थके राजान्तिपाठे—तण्डुलप्रस्थकाख्यशिवस्थाने. २०. क्षत्रिय इत्यत्र— सत्कृतः क्षत्रियः. शस्त्रमरणः—शस्त्रे एव मरणं यस्य. शस्त्रमरणादभीत इति यावत्. २१॥. जरासन्धं प्रति युध्येत— अत्यस्पष्टम्. ?. षडशीतिं समानीता इत्यत्र—षडशीतिः—

षडशीतिकुलोत्पन्नाः. शेषाः—एतच्छेषभूताः. अन्ये राजानश्चेति —कुलान्येकशतं नृपाः इति प्रागुक्तनृपा इत्यर्थः २२॥. तत्र—राजवधे. २३॥.

## ॥ अष्टादशोऽध्यायः ॥

समाहियः परराक्षस्यादित्यत्र?—परोक्षः जरासन्धसेनयैव युद्धे सति अन्तःपुरस्थेन तेन अदृष्टत्वात् परोक्षः. अर्थान्तरे, जरासन्धवधाख्यप्रयोजनान्मध्ये. युक्तं—प्राप्तं. अनर्थं—प्रागुक्तमनर्थं. प्रतिपद्य—ज्ञात्वा. ३-४. सन्यासं रोचय इत्यत्र—अस्य राजसूयाख्यकार्यस्य सन्यासं त्यागम्. आहर्तुं अशक्यो—दुराहरः. ५॥. धनुरस्त्रमित्यत्र—इह लोके, दुष्प्रापं प्राप्तुमशक्यं, धनुरादिकं मया प्राप्तमिति सम्बन्धः. ७॥. वैद्याः साधु सुनिष्ठिताः इत्यत्र—वैद्याः विद्यावन्तः. ८॥. द्रव्यभूता गुणा इत्यत्र—द्रव्यात् धनात्, भूताः जाताः, गुणाः परापराहवादयः. ११॥. जयस्य हेतुरित्यत्र—सिद्धिः, दैवं, संश्रितं, कर्म च पुण्यलक्षणं शौर्यादिकर्म वा. १२॥. अबले विक्रियेत्यत्र—विक्रिया परयाचनादिविकारः. मोहः—अहङ्काराज्जातः कार्यविस्मरणम्. १३॥. अनारम्भे तु निर्युक्त इत्यत्र—अगुणनिश्चयः आरम्भजातद्रव्यप्राप्त्यादिगुणभावे निश्चयो यस्य सः. अनुगुणनिश्चयः, निस्संशयात् गुणात् निस्संशयं गुणमपेक्ष्य. १५॥. कालोऽयं इत्यत्र—अयं कालः. सुलभः युद्धाय सुलभः.

शममिच्छतां मुनीनां पश्चात्काल एव सुलभः, राज्ञामस्माकं श्वः कार्यमद्य कुर्वीतेति वचनात्, अयं वर्तमानः काल एव सुलभः. १६॥.

## ॥ एकोनविंशोऽध्यायः ॥

न चापि—इत्यत्र, अमरं मरणरहितं. २. नयेनाबाधदृष्टेनेत्यत्र—आबाधं स्वबाधपर्यन्तम्, दृष्टेन—लोके दृष्टेन, येन परानुपाक्रम इति यावत्. ३. अनपायस्य तस्य सुनयस्य संयोगे सति, अपराक्रमः पराक्रमाभावः न स्वपीडापर्यन्तं विनयमेव कुर्वन् अपराक्रमी न भवतीति भावः. संशयो जायत इत्यत्र—शक्तानां भूषणं क्षमेति न्यायेन, शक्तैर्विनये कृते सति. साम्ये शत्रोः स्वस्य च समत्वे संशयो जायते. द्वयोः शक्ताशक्तयोः साम्यं तु न भवेत्. ४. कथमन्तमित्यत्र—नदीरयाः नदीवेगाः. वृक्षस्य अन्तमुन्मूलनेनावस्थानमिव. अन्तं जरासन्धसेनायाः अवसानम्. कथं न गच्छेम—गच्छेम एवेति योजना. ५. अनभिव्यक्तसम्बन्धा इत्यत्र—अनभिव्यक्तः सम्बन्धः क्षत्रियत्वाख्यजातिसम्बन्धो यैस्ते तथोक्ताः. तं जरासन्धं, कामं प्राप्नुयामहे. अनवद्यानित्यत्र—असम्बन्धान् विप्रवेषत्वादस्मासु वध्यघातकभावसम्बन्धरहितान् अत एव अनवद्यान् अस्मासु अवद्यमकुर्वतः शत्रून् दृष्ट्वा शनैः शत्रुदेशमपाक्रम्य तं जरासन्धं कामं प्राप्नुयामहे. ७॥. एको ह्येवेत्यत्र—

भूतानामन्तरात्मा परमात्मेव, एकः जरासन्ध एव, श्रियं सेनादिश्रियं, तत्क्षये जरासन्धसंक्षये, बलक्षयः सेनानाशः स्वयमेव स्यादिति भावः. ८॥. शेषेणेत्यत्र—शेषेण तत्सेनाशेषेण. ९॥. शलभो यथेत्यत्र—शलभो यथा अग्निस्पर्शे दग्धो भवति तथा अयं कुतो न दग्ध इति व्यतिरेके दृष्टान्तः. १०॥. अक्षौहिणीनामित्यत्र—तिसृणामक्षौहिणीनां बलादिति शेषः. १२॥. नाप्रजस्येत्यत्र—अप्रजस्य कीर्तिः न, स्वर्गश्च क्षयः गृहं, न भवेत्. ३०. इन्द्रं तर्पय चेन्दुनेत्यत्र—इन्दुना सोमरसेन. ३९. प्रजायेथमुभे इत्यत्र—उभे नार्यौ, प्रजायेथं प्रजनयेताम्. ४७. सजीव इत्यत्र—अबले रोदनस्तनपानादिकं कर्तुं बलरहिते, सजीवे प्राणिशकले उत्पन्ने सति. तत् तदा. ते भगिन्यौ, सुदुःखिते तत्यजाते. ४९.

## ॥ विंशोऽध्यायः ॥

हेतोरुपेक्षित इत्यत्र—बलवता विरोधे सति स्थानान्तरे गन्तव्यमिति नीतिहेतोः. ३५॥.

## ॥ एकविंशोऽध्यायः ॥

पतितावित्यत्र—पतितौ दुर्मार्गवर्तिनौ १. रक्षिता चावयोर्जय इत्यत्र—जयः विजयः पार्थः. ३. त्रिभिरासादित इत्यत्र—आसादितः युद्धाय प्रापितः. ४. व्यायामात्—विशेषेण (आयामात् अत्युन्नतेः) आयामुदुत्तिन्नतेः? ५.

भीमसेनार्जुनावित्यत्र—न्यासभूतौ मद्वशे न्यस्तुं योग्यौ. ७. न हि त्वदग्र इत्यत्र—त्वदग्रतः स्थितिर्न हि. १०. दुर्गत इत्यत्र—दुर्गतः दुःखं गतः. १३॥. सुप्रणतिबल इत्यत्र—सुष्ठु अवसरं ज्ञात्वा, प्रणीतं प्रयुक्तं बलं येन स तथोक्तः, देशकालादिकं ज्ञात्वा बलं प्रयुञ्जान इत्यर्थः. अविचक्षणैः प्रणीतं यत्र क्वापि प्रयुक्तं बलं, अन्धं, जडं, चक्षुरन्धवत् जडवच्च कार्यकारीति (?) भावः. १६॥ यतश्छिद्रमिति—यतः यस्मिन् पुरुषे, ततः बलात्, छिद्रम्—छिदिर् द्वैधीकरण इति धातोः अङ्गविच्छेदः भवति. ततः—तत्र. १७॥. कृष्ण-कार्यार्थसिद्धये इत्यत्र—हे कृष्णेति सम्बुद्धिः. १९॥. नयो जयो बलं चैवेत्यत्र—नयो नीतिः. जयः परवशीकरणाख्यजयः. बलम्—अन्ते सत्त्वप्रदर्शनं चेति त्रयं. विक्रमात्—विशिष्टक्र-मात्. नयः पूर्वं, जयो मध्ये, बलं पश्चादिति क्रमात् प्रयुक्तं चेत्, वृद्धिमेष्यति, अन्तिमं बलमतिवृद्धं भवतीत्यर्थः. २१. वर्षास्विनामित्यत्र—वर्षेषु बहुवर्षेषु आसनवन्तो वर्षास्विनः वृद्धाः, तेषां. स्नातकानां व्रतस्थानां. बलिच्छेदैरलङ्कारैः. आच्छाद्य स्वस्वरूपमाच्छाद्य. २३. भीमपुरोगमावित्यत्र—भीमपुरोगमौ भीमस्य पुरोगमौ. २५॥. धर्मार्थावित्यत्र—काममोक्षाणां कामान्मोक्षः धर्मार्थयोर्मोचनं येषां, तानि कार्याणि स्त्रीसम्भोगादीनि, तेषां निग्रहे सति धर्मार्थाविव तौ

कृष्णार्जुनौ ईशौ हि. २६॥. स पारिहार्य इत्यत्र—स माग-
धो देशः, मणेः? कृतमेध्यानामृष्यादीनां पारिहार्यः, हारो
विहारः, परितो विहरणयोग्यः, मणेश्चिन्तामणित्वेन तन्निकटे
दारिद्र्यादिदोषाभावादिति भावः. ४२॥. यत्र माषादवृष-
भमित्यत्र—वृषभरूपी माषादरूपकोऽसुरो माषादवृषभः.
५१॥. तं माषादं, हत्वा. माषनालात्—शृङ्गद्वयकण्ठनालाख्यां
स्त्रीन नालान्, तेन चर्मणा, आनह्य बद्ध्वा, तिस्रो भेर्यः
यथा भवति तथा चकार .५२॥. भेर्यः त्रिभिरेतैस्ताडितास्तिस्रो
भेर्यः प्राणदन्. ५३. मागधानां सुरुचिरमित्यत्र—
चैत्यकं बन्धमूलं स्यादित्यभिधानात्, चैत्यं बन्धमूलं द्रुमं.
जरासन्धजिघांसवः ते कृष्णाद्याः. शिरसि जरासन्धशिरसि
जिघांसन्त इव घातं कुर्वन्त इव. ५४. द्रुमं गिरिं च. विपुलै-
र्बाहुभिरभिहत्य, अभ्यपातयन्निति सम्बन्धः. माल्यदामैः—
माल्यानां मालायोग्यपुष्पाणां, दामैः—दामभिः. ५५–५५॥.
दृष्ट्वेत्यत्र—दुर्निमित्तं दुःखकारणं दुर्निमित्तात्मकं च, तं शृङ्ग-
द्रुमयोः पातम्. ५७. पर्यग्नि कुर्वन्नित्यत्र—परितः अग्निः
नीराजनरूपोऽग्निः यथा भवति तथा कुर्वन् अकुर्वन्. मङ्गला-
रात्या सत्कृतवन्त इत्यर्थः. ५७॥. जरासन्धेन सह युयुत्सव
इति सम्बन्धः. ५८॥. कर्पूरं शृङ्गमित्यत्र—शृङ्गं गोशृङ्ग-
मध्योद्भूतं गोरोचनं. ६१॥ तस्य ह्येत इत्यत्र—एतत् एतेषां

कृष्णभीमार्जुनानामापन्नादिषु कृतचरित्रम्. ६९॥. वरध्वम-विचार्यमित्यत्र—वरध्वं वरयध्वम्. (?) कर्म चैतदित्यत्र—द्विलिङ्गस्य द्वयोः ब्रह्मक्षत्रयोर्लिङ्गं यस्य तस्य. ८२. अस्मदागम इत्यत्र—अस्मदागमे अस्मान् प्रत्यागमे. ८३. क्षत्रियो बाहुवीर्य इत्यत्र—तस्य क्षत्रियस्य, तस्मात् क्षत्रियाणामप्रगल्भवचनत्वात्, हे बार्हद्रथ तव ईरितमपि अप्रगल्भं इति पूर्वपदावृत्त्या योजना. ८७. वैकृते चासतीत्यत्र—विरुद्धं कुर्वत् विकृत्, विकृतो भावः वैकृतं, वैरमित्यर्थः. सतां समय एष हीत्यत्र—एष हि वक्ष्यमाणो हि. ९२. योऽनागसीत्यत्र—यः क्षत्रियः अन्योऽपि अनागसि प्रसृजति. तस्मात् अर्थधर्मोपघातात्—अर्थधर्मयोरुपघातो यस्मात् तथोक्तः. तस्मात् पुरुषात् मनः समुपतप्यते. एष सतां समय इति पूर्वेणान्वयः. ९३. अतोऽन्यथेत्यत्र—लोकधर्मज्ञः महाव्रतश्च सत्पुरुषः अतः स्वविहितस्वभावात्, अन्यथा वैपरीत्ये आचरन्. ९४. त्रैलोक्ये इत्यत्र—क्षत्रधर्मा निमित्ताच्छ्रेयांसं श्रेष्ठं मामनागसं प्रजानन्तः. प्रमादात् इति उक्तप्रकारेण जल्पथ. ९५. अस्मांस्तदेन इत्यत्र—बृहद्रथस्यापत्यं पुमान् बार्हद्रथिः. तस्य सम्बुद्धिः हे बार्हद्रथे. ९९. समालम्भः—सम्यगालम्भः समालम्भो हिंसा. १००. सवर्णोऽपि इत्यत्र—सवर्णः ब्राह्मणत्वादिवर्णसहितः. विवर्णानां विगतवर्णानां वर्णबाह्याना-

मपीत्यर्थः. हिंसनं न कुर्यादिति किं वाच्यमिति सम्बन्धः. १०१. तेत्त्वेत्यत्र—ते पर्यायं त्वा, त्वाम्. १०२. नास्ति लोक इत्यत्र—स अस्मानतीत्य नृपहिंसोद्योगः. १०३॥. तान विद्धीत्यत्र—ये पूर्वोक्तविधया जयन्ते? तानस्मान् विद्धीति योजना. १०५॥. स्वर्गयोनिस्तप इत्यत्र—युद्धे तपः शत्रु-तपननित्यर्थः. १०६॥. विजयसम्बन्धी वैजयिकः. १०७॥. अस्य स्यात् स्वर्गमित्यत्र—यथा तव भुवि निगृहीतुं शत्रुनिग्रहणं कर्तुं मनः स्यात् तथा यस्य इन्द्रस्य स्वर्गमास्थाय निगृहीतुं त्वदादिशत्रुसंहारं कर्तुं मनः स्यात्. १०८. विषह्यमेतादित्यत्र—विनिषेधे पृथग्भाव इति वचनात् विषह्यमसह्यम्. १११. श्रेयसो ह्यवमत्येत्यत्र—श्रेयसः श्रेष्ठान्. ११२॥. सागरानूपमित्यत्र—सागरस्य अनूपं, अनु कूलं, उप उपकण्ठं. ११८. वित्रेसुः—विशेषेण त्रासं प्रापुः. १२२॥. अहमादद्मि कश्चनेत्यत्र—जयतीति जित्. अजितं अजयशीलं न आदद्मि. दद दान इति धातोः युद्धाय नाङ्गीकरोमि. जितः जयशीलस्य मम अग्रे. १२५॥. कृष्णोपजीवनमित्यत्र—एतत् वक्ष्यमाणं, हे कृष्ण इति सम्बुद्धिः. कामतः स्वेच्छानुसारेण. १२६॥. तौ तु सेनापती इत्यत्र—हंसेति डिभगेति च पूर्वं विद्यमान तौ तु जरासन्धसेनापती. काले अतीतकाले. १३०॥. कथितौ मृताविति कथितौ, प्राक् तौ सेनापती इदानीं कौशिकचित्रसे-

नाविति भावः. १३१॥. तर्हि जरासन्धोऽपि प्रागेव कृष्णेन कस्मान्न हत इत्यत आह—कृत्वा पुरुषशार्दूलमित्यादि—१३२॥. ब्राह्मणाज्ञां—ब्रह्मणश्चतुर्मुखस्य सम्बन्धिनी ब्राह्मणी. सा च सा आज्ञा च. वायुर्भीमो भूत्वा जरासन्धं घातयत्विति चतुर्मुखस्य आज्ञां पुरस्कृत्येत्यर्थः. १३४॥.

## ॥ द्वाविंशोऽध्यायः ॥

तदर्थमित्यत्र—प्रबलजरासन्धप्रियार्थम्. ६. इयं च शक्येत्यत्र—अयशस्यमयशस्करकर्मोद्युक्तं त्वां च रक्षितुं शक्नोमीति सम्बन्धः. १६. याम्येनमाययेत्यत्र—याम्यानां यमभटानां इना समर्था या माया दुर्गा सा तथोक्ता. गर्भस्रवणे सति कुतो जीवो न नीत इति शङ्कापरिहारार्थमिदं विशेषणं. नियमयति सर्वमिति नियमो राजा नारायणः. २०॥. आकृष्य कर्षणादित्यत्र—देवक्युदरात् गर्भमाकृष्य रोहिण्युदरं प्रत्याकर्षणादित्यर्थः. २१॥. जातमात्रमित्यत्र—अपकृष्य गोकुलं प्रति नीत्वा ततः गोकुलात् परिक्रीतां स्वसारं दत्वा तं क्रयरूपेणेव स्वीकृतम्. २५॥. देवदूतस्य तं शब्दम्—अष्टमो गर्भः तव मृत्युरिति शब्दम्. मुमुक्षमाणः मोचयितुं इच्छन्. २६॥. आर्येत्युवाचेत्यत्र—तां प्रति आर्येति शब्दमुवाच. प्राक् शिशुरूपा, इदानीमार्या स्थूलेत्युवाचेत्यर्थः. २७. आशासितार्थ इत्यत्र—आशासितः, अर्थः धनं शिवप्रसादश्च येन

सः. ३७. भीम योत्स्ये इत्यत्र—श्रेयसा श्रेष्ठेन. भावे क्त इति वचनात्. निर्जितं, निर्गतो जयः पराजयः. वरं श्रेष्ठम्. ४७. तद्युद्धमुत्सार्य जनमित्यत्र—उप समीपे, ह्वये द्रष्टृजनानां अन्योन्यमाह्वाने सति तं जनमुत्सार्येत्यर्थः. ५४॥. विकर्षतामाकर्षतामिति लङि लुङि वा द्विवचनम्. ५५॥.

## ॥ त्रयोविंशोऽध्यायः ॥

अयं पाप इत्यत्र—अनुरोधितुं अनुकूलं कर्तुम्. २. कर्तव्यमित्यत्र—कर्तव्यं स्वस्यैव कर्तुं योग्यं कर्म. उपशस्य समीपस्थकृष्णार्जुनौ प्रति स्तुत्वा. (?) ते वै रत्नभुजमित्यत्र—भुज-पालनाभ्यवहारयोरिति धातोः, स्वजीवरत्नपरिपालकं कृष्णं. रत्नार्हं—स्वमौलिरत्नयोग्यपादपीठं पार्थिवं स्वेषां राजानं चक्रुः. २४.तयोः सौन्दर्यवानित्यत्र—तयोः भीमार्जुनयोः, विधेयः इदं कुर्विति विधातुं योग्यः किङ्कर इत्यर्थः. विधेयः किङ्करो मतः इत्यमरः. २६. चेरतुस्तारकामय इत्यत्र—शक्रविष्णू इन्द्रोपेन्द्रौ, शत्रुनेत्रतारकाणामामयो यस्मात्. तस्मिन्—देवासुरसङ्ग्रामे. येन रथेन चेरतुः तेनेति सम्बन्धः. २८. क्षणे तस्मिन्नित्यत्र—चैत्ये बद्धभूमिके, यूपे—देवालयध्वज इत्यर्थः. ३६. गत्वैकत्वमित्यत्र—एकत्वमैकमत्यम्. ६८. पीतमित्यत्र—पृथिव्या भूमण्डलाख्यकुण्डेन ककुभेन ( ? ) दिगन्तविश्रान्तकीर्तिः सम्पादितेति भावः. ८१.

## ॥ चतुर्विंशोऽध्यायः ॥

ऋषेस्तद्वचनमित्यत्र—ऋषेः नारदस्य, तद्वचनं राजसूयः कर्तव्य इति प्रागुक्तवचनम्. १. स्वस्ति वाच्येत्यत्र—मह्यं स्वस्ति देहीति, वाच्य अर्थयित्वा. १८. तस्य पार्थिवतामित्यत्र—तस्य पार्थिवतां तत्सम्बन्धिपार्थिवताम्. ईप्सोः मम तुष्टोऽसि चेत् तस्मै करं प्रदीयताम्. ४६॥. नामः नमनं नम्रता अस्यास्तीति नामी, स न भवतीत्यनामी, तं उद्धतं राजानमित्यर्थः. ६२.

## ॥ पञ्चविंशोऽध्यायः ॥

नव तित्तिरिकल्मापानित्यत्र—तित्तिरिकल्माषान् कृष्णपाण्डरान्. कल्माषः कृष्णपाण्डरः इति हलः. तित्तिरिः कुक्कुटो लावो जीवञ्जीवश्चकोरक इत्यमरः. ६. तं कलापधरमित्यत्र—"कलापो भूषणे बर्हे" इत्यत्राभिधानात् कलापधरं भूषणधरम्. ५८. परवारणवारणमित्यत्र—परवारणात् परमाख्यगजात् निवारयतीति स तथोक्तः. ५९. योगाजिनानीत्यत्र—योगाभ्यासार्हचर्माणि. ७७॥.

## ॥ सप्तविंशोऽध्यायः ॥

कारण्डमेयमित्यत्र—चक्रपुरः, चक्रवर्तिनां पट्टणानि. स्वयमेव शरणं न प्राप्ताश्चेत्तन्नगराण्यपि प्रविश्य वशीचकारेत्यर्थः. चक्रवत् परितः सञ्चरतां चोराणां पुराणि वा, मध्यमपदलोपी

समासः. १६. तत्र वानरराजाभ्यामित्यत्र—सुषेणवसुषेणयोः किष्किन्धां पालयतोः सतोः ताभ्यां वानरराजाभ्यामिति सम्बन्धः. २०॥. तत्र माहिष्मतीवास इत्यत्र—पाणिग्रहणे साक्षिभूतेन तेन हव्यवाहेन. पारदारिकः—परदाराभिमर्शी तद्देशप्रभुः. निगृहीतः निग्रहं प्रापितः ३२॥. उपनीतः—प्रसादितः. तदा ब्राह्मणरूपेणेत्यत्र—यदृच्छया आगतं योग्यायोग्यसर्वस्वं स्वस्य सर्वभक्षकत्वात्. ब्राह्मणरूपेण चरमाणः—चर-गतिभक्षणयोरिति धातोः भक्षमाणः अग्निः आसीत्. ३३॥. अशासत्—शिक्षितवान् ३४॥. स्विष्टकृत्—सुष्टु इष्टकृत्. ३६॥. स्वैरिण्य इत्यत्र—स्वैः स्वभर्तृभिरेव. ईरणं, प्रेरणं यासां ताः स्वैरिण्यः तथाविधाः नार्यः प्रचरन्ति. ३९॥. भृगुकच्छान्तइत्यत्र—"प्रपातस्तु तटं भृगुः" इत्यभिधानात्. भृगोः सह्याचलदाक्षिणात्यशृङ्गस्य समीपस्थं कच्छं, दक्षिणसमुद्रतीरम्. तस्य अन्ततः अवसाने. See Footnote 2 to pp 179. तत्र कालधृतमित्यत्र—काले बहुकालमारभ्य, धृतं करिष्यामीति मनसा अवधृतं, तत्—धर्मराजस्य शासनम्. ८२. महासेनोपममित्यत्र—"कार्तिकेयो महासेनः शरजन्मा षडाननः" इत्यभिधानात् षण्मुखोपमम् १०९॥. तत्र कालकृतमित्यत्र—कालकृतं अङ्गीकृतम्. २०५॥.

## ॥ अष्टाविंशोऽध्यायः ॥

मद्राणां पुटभेदनमित्यत्र—पुटभेदनं पट्टणम्. पट्टणं पुटभेदनमित्यमरः. १६॥. कळभानामित्यत्र—तस्य नकुलस्य, कोशः आर्जितद्रव्यं, कलभानां बालगजानां, दशसहस्राणि. ऊहुः—वह—प्रापण इति धातोः लिटि बहुवचनम्. ऊढा निन्युरित्यर्थः. २०॥.

## ॥ एकोनत्रिंशोऽध्यायः ॥

सञ्जज्ञे राजकर्मणा इत्यत्र—राजकर्मणा राजाज्ञया. ८॥. स दीक्षापय गोविन्देत्यत्र—स त्वं, आत्मानं मां, राजसूये दीक्षापयेति, धर्मराजप्रार्थनम्. २६॥. सर्वे पेयानित्यत्र—हे कुरुसत्तम, सर्वे वयं, पेयादीनाहर्तुं युक्ताः स्मः. इन्द्रसेनादीनां सारथीनां युधिष्ठिरं प्रति प्रत्युत्तरम्. ३७॥. धनञ्जयानामित्यत्र—धनञ्जयानां यज्ञकुशलत्वात् दक्षिणारूपधनं, जयन्ति प्राप्नुवन्तीति; धनञ्जयाः, याजकाः, तेषामृषभः. ४१.

## ॥ त्रिंशोऽध्यायः ॥

ज्येष्ठे मूले इत्यत्र—ज्येष्ठे मासे, मूलनक्षत्रे. रौरवाजिनसंवीत इत्यत्र—"कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररोहिषाः" इत्यभिधानात् रौरवाजिनं कृष्णाजिनम्. ९. रुक्मस्य योषितामित्यत्र—रुक्मस्य अयुतसहस्राणि योषितां कन्यानां, दासीनां

वा सहस्राणि इत्यर्थः. १८. अभिसंज्ञांश्च सम्भारानित्यत्र—अभिसंज्ञान्—नानाविधसंज्ञान्. ४८. कथं तु ममेत्यत्र—स्पर्धमानाः राजानः कौरव्यः मम रत्नदानैः यज्ञं कथं समाप्नुयात्. न कथञ्चिदित्युक्त्वा, ददुः—बहुधनसाध्ये यज्ञे मम अल्पधनं कुत्रोपयुज्यतइति विनयमुक्त्वा ददुरित्यर्थः. ६७. षड्भिनाऽथ यज्ञेनेत्यत्र—गार्हपत्याहवनीयदाक्षिणाग्निसभ्य-आवसथ्यवैवाहिकाद्याः षडग्नयः. वैवाहिको नाम औपासनाग्निः. ७१. मुक्तवज्जनसंवृत इत्यत्र—मुक्तवन्तश्च ते जनाश्च मुक्तवज्जनाः. रत्नोपहारकर्मण्यः रत्नोपहाराख्यकर्मवान्. ७२॥.

## ॥ एकत्रिंशोऽध्यायः ॥

अन्तर्वेदिमित्यत्र—"वेदिः परिष्कृता भूमि"रिति वचनात्, ब्राह्मणानामुपवेशार्थं शालान्तरालङ्कृता भूमिरन्तर्वेदिः. १. कर्मान्तरमित्यत्र—अन्यदन्यत् कर्म कर्मान्तरं. ३. वितण्डानाः परस्परमित्यत्र—वितण्डानाः वितण्डावादं कुर्वन्तः, जजल्पुरिति पूर्वेणान्वयः. ४. आदास्यति दो-अवखण्डन इति धातोः आसमन्तात् संहरिष्यति. १९. यज्ञैरिज्यमित्यत्र—पूजायोग्यम्. २०. विकृष्टत्वादित्यत्र—भूशोधनार्थं लाङ्गलेन देशानां विकृष्टत्वात्, तस्य च देशस्य अल्पत्वादिति भावः. २४. भगवान् सर्वभूतानामित्यारभ्य खाण्डवप्रस्थमाययौ—

इत्यन्तश्लोकानामयं भावः—हे अरिन्दम जनमेजय यः यादव-श्रेष्ठो माधवः, आनकदुन्दुभिं, बलाधिकारं सेनापतिं, द्वारवत्यां निक्षिप्य, धर्मराजाय उच्चावचं धनौघं पुरतः कृत्वा खाण्डवप्रस्थं यज्ञारम्भात् प्राक् आययौ. ऋजुं अनुग्रवत् स्थितम्. चक्रायुधं शौरिं. २७॥. सितस्य—बलरामस्य. ३३॥. "जगतस्तस्थुषश्चैव प्रभवाव्ययमच्युतम् । अनन्तमन्तं शत्रूणाम् अमित्रगणमर्दनम्." सर्वभूतानां प्रभवमच्युतं यथा भवति तथा आपत्सु आश्रयं, भविष्यं उपरि बुद्धादिरूपेणावतरिष्यन्तं. भावनं—इदानीं कृष्णव्यासादिरूपेण वर्तमानं. भूतं मत्स्यादिरूपेण प्रागवतीर्णम्. तेजोराशिमृषिं. अदृश्यं—दर्शनायोग्यं. तमेनं कृष्णं दृश्यं प्राकृतं जनमिव जानतां. वयोतिगानां वृद्धानामत एव मार्गमावृत्य तिष्ठतां सतां. युधिष्ठिरे यजमाने सति. द्वारवत्यां समुदित-ममित्रगणमर्दनं शेषमवशिष्टं. बलं सैन्यम्. समन्ततः परिगृह्य सम्प्रयात्? यज्ञसभां विहाय महासभां प्रत्येव आगतवान्. रथघोषेण तान् यज्ञागतान् सर्वान् चैद्यादीन् नादयन् सन् उपायात्. ३४॥–३७॥ आसनं च जगत्पतेरित्यत्र—ददाविति योग्यपदाध्याहारः. ६९॥. संयुक्तं—तत्काले आगत मतिथिम्. ४१॥.

## ॥ द्वात्रिंशोऽध्यायः ॥

अयं त्वत्रेत्यत्र—अयं सूक्ष्मो धर्मः. ३. भवत्यभ्यधिकमित्यत्र—हे भीष्म ! लोकेषु सतामवमतः कृष्णः. कमभि—कं प्रति, अधि—अधिकः भवति इति योजना. ४. अयं तत्रेत्यत्र—विशेषेण अतिक्रान्तमतिक्रमणं यस्य स तथोक्तः. ३. धर्मं कुर्वता त्वया कृष्णस्य प्रियकाम्यया कथं कृष्णः अर्चित इत्युत्तरेणान्वयः. अर्चितस्त्वदित्यत्र—त्वत् त्वत्तः' २५. प्रयच्छाम इत्यत्र—लोभात्—मातुः स्वस्रीय इति लोभात्. २७. यदि भीताश्च कौन्तेया इत्यत्र—हि तर्हि, हि कथमिति च अव्ययद्वयस्यार्थौ ज्ञेयः. राज्ञां मध्ये कथं पूजां कृतवन्तः. ३३. हविषः प्राप्येत्यत्र–(वि)निष्यन्दं पात्रात् पतितभागम्. ३५॥. यमं चैनानित्यत्र—अतः अवमानात् कारणात्, अन्यथा अवमाने सतीत्यर्थः. यमं यमसदृशं भीष्ममिति पूर्वेणान्वयः. ?

## ॥ चतुस्त्रिंशोऽध्यायः ॥

शिरस्तस्येत्यत्र—दिवं द्युलोकं, तस्य शिर आहुरिति सम्बन्धः. १७॥. परमात्मवान् परमचित्तवान् परमप्रयत्नवान् वा. २०. ब्रह्मभूत इत्यत्र—ब्रह्मणो वेदात् भूतोऽभिव्यक्तः. तदात्मानं वेदात्मानं, वेदप्रवर्तकमित्यर्थः. २०॥. तेन तद्व्यसृजदित्यत्र—तेन ब्रह्मणा गुरुणा, तत् रुद्रादियोगिवृन्दं,

व्यसृजत उपरि वक्ष्यमाणं वेदाख्यं ब्रह्म विविधया असृजत्. २३. आभूतसंप्लवा इत्यत्र—आभूतसंप्लवाः—भूतसंप्लवः—प्रलयः. तत्पर्यन्तं विद्यामानाः लोकानां बहुकोट्यः अपचक्रमुः. ब्रह्मणो देहान्निर्गताः सृष्टा इत्यर्थः. २४. सङ्कल्पाः इत्यत्र—सङ्कल्पाः दैनन्दिनकल्पेन ब्रह्मकल्पेन च सहिताः. २५. ब्रह्माणं कपिलमित्यत्र—कपिलं कपिं कपिभूत्वा ? लसतीति व्युत्पत्त्या कपिलं मुख्यवायुम्. "तौ विवेश स्वयं वायु" रिति वायोर्वक्ष्यमाणत्वात्, अत्रापि कपिलो वायुः. पारश्रेष्ठीत्यत्र—पारः संसारसमुद्रस्य पारे विद्यमानः—श्रेष्ठी—श्रेष्ठाः, मुक्ता एव सेवकतया वर्तन्त इति श्रेष्ठी देवदेवो नारायण इति पूर्वेण सम्बन्धः. ३१॥. भूमिं बद्ध्वेत्यत्र—भूमिं स्वकरचरणाद्यङ्गेषु बद्ध्वा. कर्णस्रोतोद्भवावित्यत्र—स्रवत्यत्र वायुरिति व्युत्पत्त्या स्रोतानि ? नवद्वाराणि. ३६. आसीदादावित्यत्र—स्वयंजन्म, स्वयं पङ्कादिकारणं विना केवलं स्वतः स्वस्वभावादेव जन्म यस्य तत् स्वयंजन्मेति पङ्कजस्य विशेषणम्. ४४. आवां जहीत्यत्र—उर्वी अस्मन्मरणभूमिः. ५१. रूपद्वयेन वायोः दैत्यद्वयेन सन्निधानात् हतौ च तव पुत्रत्वमित्युक्तम्. ५२.

## ॥ पञ्चत्रिंशोऽध्यायः ॥

एष पौष्करिक इत्यत्र—पौष्करिकः पुष्करसम्बन्धी प्रादुर्भावः. ३. जपोपवासैरित्यत्र—तस्य—प्रागुक्तपसः, जपो-

पवासैः तपोनिमित्तजपोपवासैरित्यर्थः. स्थाणुः स्थाणुवन्निश्चल आसीत्. मौनव्रतश्चाभवदिति क्रियाद्वयसम्बन्धः. २०. तैः सृष्टानित्यत्र—शरानिति योग्यपदाध्याहारः. ७९. महदादि-समेदिनीमित्यत्र—महदादिलोकैस्सहितमेदिनी ? उदकृन्तत— "कृ(न्त)ती—छेदन" इति धातोः परशुना चिच्छेद. १५५॥. चतुर्दश सहस्राणि—उक्तविधया सहस्रन्यूनचतुर्दशसहस्राणि. कणधूमं—तृणकणैः मृत्तिकाकणैश्च सहकृतं धूमं इत्यपभ्रंशभाषा. तमपाययत्—एकवारं कृतशिक्षां त्रिसहस्रामप्यपाययदिति वा चतुर्दशसहस्राणि. १५६॥. राम रामेत्यत्र—अभिक्रुष्टैः अभितः क्रुष्टमाक्रोशनं येषां ते तथोक्ताः. १५७॥. जीवञ्जीवनिभस्य चे त्यत्र—"जीवञ्जीवश्चकोरक" इति वचनात् रक्तवर्णचकोराख्यपक्षिसादृश्यम्. १६३॥. तस्याग्रेणेत्यत्र—तस्य भूप्रदानस्य, अग्रेण अवसानकालेन, भूमिं विगताः पांसुलाः पापिष्ठाः यस्यां सा ताम्. १६६॥. वेदिमष्टादशोत्सन्धामित्यत्र— अष्टादशोत्सन्धां. सप्तद्वीपाः, सप्त समुद्राः, मेरुः काञ्चनभूमिः, वज्रलेपः, लोकालोकश्चेति अष्टादशोत्सन्धाः. उत्कृष्टाः सन्धयो यस्यास्सा. तामतिपौरुषीं. बहुशः क्षत्रियाणां संवृतत्वात् हिरण्यस्य क्षत्रियकुलादार्जितनानासुवर्णराशेः सम्बन्धिनीं वेदिं. "वेदिः परिष्कृता भूमि" रिति वचनात् अलङ्कृतभूमिं कश्यपाय ददौ. १६८॥. नग्निकानां कुमारीणामित्यत्र

—"नग्निकाऽनागतार्तवे"ति वचनात्, नग्निकानां रजोदर्शनरहितानां. १७१. आदिकाल इत्यत्र—कालं किञ्चित्कालपर्यन्तं प्रकृष्टतपआदिसत्कर्माणि. विभजन्—विशेषेण भजन्. श्रद्धया—कुमारीणां वाक्येषु श्रद्धया. १७७. सोऽस्य भाग इत्यत्र—अस्य कृष्णस्य, भागः—स्वरूपांशभूतः. १७८. तिथौ नावामिक इत्यत्र—नावमिके नवमीसम्बन्धिनि. १८०. कर्मार्थमेवेत्यत्र—कर्मार्थमेव, राक्षसहननाख्यकर्मार्थमेव. १८१॥. भग्नं माहेश्वरमित्यत्र—"हेला लीलेत्यमी भावाः क्रियाः शृङ्गारभावजाः" इत्यभिधानात्, आ ईषत् लीला शृङ्गाररसजातमन्दहासक्रूपिमुखनिरीक्षणादिलीला यस्यां सा, तया क्रीडया. १८५. भर्तारमनुशोचतीत्यत्र?—लोकविडम्बकं भर्तारमनुसृत्य शिलाकण्टकादिपु गमने सति, शोचती शोकं दर्शयन्ती. १८९॥. दशाश्वमेधानित्यत्र—जारूधिर्नाम सरयूतीरदेशविशेषः. निरर्गलान्—निष्प्रत्यूहान्. २०६. पर्यदेवमित्यत्र—परितः अदेवं देवरहितगृहम्. २०८. ननाकृष्टकरक इत्यत्र—सकृष्टे अकर्पणे सति, आ समन्तात् करः द्रव्यदानं यस्य सः अकृष्टांकरकः. तादृशो जनो ना नास्ति? २०९॥ नासीदित्यत्र—योगे योगाभ्यासे. अपगता कृषिः प्रयत्नं यस्य स तथोक्तः. २११. तपः धर्मश्च अभवतामिति सम्बन्धः. २१५. शक्रोऽर्जुनेत्यत्र—स्थानानि प्रीतिस्थानानि?

## ॥ षट्त्रिंशोऽध्यायः ॥

अभियू रण इत्यत्र—"बहुलं छन्दस्यमाङ्योगेऽपि" इति वचनात्, अभि आभिमुख्येन,युः अयुः, इति लङि रूपम्.१२. न्युब्जः पयोधराकाङ्क्षीत्यत्र—"न्युब्जं विद्यादधोमुख"मिति-निघण्टोः, अधोमुखो न्युब्जः. ७८. शूरसेनान्यमित्यत्र—शूर-सेनानीः कंसः, तत्कृतं कर्म शूरसेनान्यं. अद्भुतं शकटादिरूपेण दैत्यप्रेषणपक्षी कंसपक्षपातान्? ७९॥. अरविन्दकृतापीडावि-त्यत्र—आपीडं शिरोऽलङ्कारः. सशिक्यस्तुम्बुरुकरावित्यत्र—पाथेयस्थापनाय कम्बलतन्तुकृतशीलविशेषाः सिक्यं. दारुकृत-तन्त्रीवाद्यविशेषः तुम्बुरु. सिक्यसहिततुम्बुरुकरे? ययो-स्तौ. ९२॥.

## ॥ सप्तत्रिंशोऽध्यायः ॥

श्रीवत्सोनोरसेत्यत्र—श्रीः वसत्यस्मिन्निति श्रीवत्सं. २. पर्णवाद्यान्तरे वेणुमित्यत्र—तुंबवीणा—अलाबुकृतवीणा. १२. मृगरूपेण गोविन्द इत्यत्र—मृगरूपेण सिंहरूपेण इति. ३०. पुनरपि प्रागुक्तबाललीलाविशेषं वर्णयति,ततः कदाचिदित्यादिना. ३४॥. प्राक् सङ्कोचेनोक्तं कंसयुद्धं पुनर्विस्तरेणाह, कश्च ना-रायणादन्य इत्यादिना. एवं च प्रक्रान्तकथाभ्यन्तरे कथान्तरम-प्यारभमाणो भीष्मः, सरससुन्दरीभिरितस्ततो विकृष्यमाणः कामुक इव, कृष्णकथायाः पदे पदे स्वादुतां स्वस्य हरिकथा-

रसिकतां च दर्शयन्नास्ते. ४९॥. गदापरिघेत्यत्र—पाठीनो मत्स्यः "मीनः पाठीन एव च" इत्यमरः. ६५. सरस्वत्यां जरासन्धमित्यत्र—सरांसि अस्यां वर्तन्त इति सरस्वती यमुना. ७१॥.

॥ अष्टात्रिंशोऽध्यायः ॥

स भूम्यामित्यत्र—मूर्ध्नि लिङ्गं स्थितः यस्य सः मूर्ध्निलिङ्गस्थितः? ५. औदकायामित्यत्र—औदकायां परितः उदकेनावृतत्वात् औदकेति च तां पुरीं वदन्ति. १३. आदेवयानम्—देवविमानपर्यन्तम्. १८. अतिवैराज्यमित्यत्र—वैराज्यं पाताललोकम्. २२. प्रवृत्तचक्रामित्यत्र—प्रकर्षेण वर्तमानं सेनाचक्रं यस्य तम्. ५१. सुतं—तत्सुतं भगदत्तम्? सृष्ट इत्यत्र—मधु(म)हन् मधुकुलह(प)न्. ५४. ततो म इत्यत्र, मे मया. ५६॥. विस्तारकल्पेत्यत्र—विस्तारेण, कल्पः कल्पना येषां ते तथोक्ताः? अर्कमणयः सूर्यकान्तमणयः. ६१. प्रवालविकृता इत्यत्र—कुथाः गजास्तरणकम्बलविशेषाः. ६६॥. यान्यैः—यानवाहकैः. ६८॥. आ(पि)विकानीत्यत्र—आ समन्ताद्वसन्ति येषु तानि. चित्रकम्बलादिकृतमन्दिराणि. ६९॥. चक्रुर्धाराञ्जलिमित्यत्र—मोदाश्रुधारया सह अञ्जलिम्. ८३. मारुतः स्वयमित्यत्र—इत्युवाचेति क्रियाध्याहारेण योजना. ९०॥. न्यङ्कुश्चेत्यत्र—न्यङ्कुः कृष्णसारमृगः. न्यङ्कुस्तथा न्यङ्कुरिति प्रसिद्धा? "वातप्रमीशम्बरकृष्णसारा"इति हलः. १०१॥

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

समुच्छ्रितपताकानीत्यत्र—परितः प्लवन्तीति परिप्लवाः मेघाः. २५॥. स्वनिर्यूहैः सदन्तुरैरित्यत्र—“दन्त उन्नत उरच्” इति वचनात्, दन्तुराः उन्नतदन्ताः गजाः. तत्सहितैः. २७॥. हेमनाभः—पद्मनाभः? शिशुमायामयावाहो? इत्यत्र शिशुमेति कृष्णमहिष्या नामान्तरम्. १२७॥.

## ॥ चत्वारिंशोऽध्यायः ॥

आरथ्यमाहरेत्यत्र—आसमन्ताद्रथिनो यत्र गच्छन्ति सा वीथी आरथी? ४९॥. नेमिहंसपदेषु ५४॥. प्राप्य लोहितकूटानीत्यत्र—लोहितकूटानि हेममयगिरिशृङ्गाणि ५६॥. वक्रारयानेत्यत्र—रैवताचले वक्रीभूय अनुयाने जात्येकवचनम्. स्वस्वानुकूलरथेषु सहितान् पुञ्जीभूतान्?

## ॥ द्विचत्वारिंशोऽध्यायः ॥

युक्तमेतदित्यत्र—तृती(यस्यां)यायां, तामस्यां प्रकृतौ. २. यत्र कुत्सेत्यत्र—“कुत्सा निन्दा च गर्हणा” इत्यभिधानात्, कुत्सा निन्दा. ६. शकुनिः—बकपक्षी. ७. अर्कप्रमाणावित्यत्र—अर्कः अर्कतरुः. ९. आत्मानमात्मनेत्यत्र—आत्मानं चित्तमाधातुं सन्धातुं. साधु—शोभनं कर्म.—अकामयन्तं तं कृष्णं साध्विति कथं पश्यसि. १८॥. न गाथा गा (थ) थिनमित्यत्र—गाथा केनचिदुक्ता, अबद्धं वा सुबद्धं वा

वर्णयन्ती कथा गाथा. गाथिनं गाथावन्तं. गाथागायकमित्यर्थः. न शास्ति—न शिक्षति, पठति—गाथां पठतीति कृत्वा, कारणं-श्रैष्ठ्यस्य कारणं न. भूतानि प्रकृतिं—स्वस्वप्रकृतिं यान्ति. यावती प्रकृतिरस्ति तावतीमेव यान्ति. स्तुत्या उच्चाः निन्दया नीचाश्च न भवन्तीत्यर्थः. कुलिङ्गशकुनिः—कुलिङ्गाख्यः पक्षी. अस्य कथा उपरि स्पष्टा भविष्यति. १९॥. दारेषु यस्य चेत्यत्र—(तप)? मिषतः सतः. २६॥. यं धारयसीत्यत्र—मोहात्. नापुत्रस्य लोकोऽस्तीति शास्त्रार्थस्याज्ञानात्. २७॥. न हि ते सेविता—इत्यत्र, ते त्वया. २८॥. धर्माधर्म इत्यत्र—धर्मेण सहितः अधर्मः धर्माधर्मः. ३७॥. अन्तरात्मनीत्यत्र—अन्तः रौषि आत्मनि मुख्यादिदेहे हृद्यः. पत्ररथः पक्षी हंसः?. ५५.

## ॥ त्रिचत्वारिंशोऽध्यायः ॥

येन धर्मात्मनेत्यत्र—दुरात्मने अस्मै दातुमिषितं पाद्यं अनेनेषितं इच्छितम्?. ४. स्त्रीसधर्मेत्यत्र—स्त्रीसधर्मा, स्त्रियः समानधर्मा. स्त्रीसदृश इत्यर्थः. ९. त्रिशिखामित्यत्र—कोपादुद्बुद्धमध्यग्रन्थिरेका, शिखाप्रान्तयोर्द्वे, एवं त्रिशिखामित्यर्थः. १२. महासेनमिवेत्यत्र—"कार्तिकेयो महासेन" इत्यभिधानात्, ईश्वरः षण्मुखमिव जग्राह. १४. गुरोः—भीष्मस्य. १५. समुद्भूत इत्यत्र—वर्षासु समुद्भूतः महोदधिः, घनापाये शरदि वेलामिव नातिचक्राम. १६. न स तमित्यत्र—स

भीमः, तं शिशुपालम्. १८. कृष्णस्यैव विनिश्चय इत्यत्र— विनिश्चयः विपत्त्वातनिश्चयः? अयं शिशुपालः कृष्णस्यैव वध्य इति योग्यपदाध्याहारः. २२. प्राञ्जलिस्तामित्यत्र—महत् बलं यस्य तम्. महांश्चासौ भूतश्च महद्भूतः. तं नमस्यामि. स पुनः वचः ब्रवीतुमिच्छामि? २९-३०.येनोत्सुग? इत्तत्र–अभ्यधिकौ सहज भुजद्वयादधिकौ उभौ भुजौ सभगौ? भविष्यतः. सोऽस्य मृत्युः. ३१॥. तौ दामघोषामित्यत्र—दमघोष एव दामानां? मध्य इत्यर्थः. ३८. एष ह्यस्येत्यत्र—"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भव"मिति वचनात् एष ईशैश्वर्यदायी हरेस्तेजोंऽशः. अस्य शिशुपालस्य वर्तते. ५०॥.

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

संस्तवाय मन इत्यत्र—तर्हि त्वत्कृतसंस्तवाय मम मनः रमते इति सम्बन्धः. ३. कृष्णाग्रपूजाधिकाराय प्राक् प्रस्ताविताने्व राज्ञः प्रशंसाधिकाराय पुनः प्रस्तावयति–वरदं(दा)स्तुहि बाह्लीकमित्यादिना, तेनापौनरुक्त्यं, अत एव तव कथं कृष्णोऽर्चितस्त्वयेत्युक्तम्; अत्र किं प्रशंससि माधवमित्येवोच्यते. ४. सर्वाङ्गविषय इत्यत्र—समस्ताङ्गराज्याधिपतिम्. ५. यस्य ते कुण्डले इत्यत्र—यस्य कर्णस्य, ये कुण्डले स्तः, यत् कवचं च अस्ति स कर्णः. ते कुण्डले तत्कवचं च, तदा ना न? काले प्राप्ते,

ददौ. ६. शारदं शुभमित्यत्र—शारदं विशारदम्? यद्वृद्धानां मयेत्यत्र—कृतमिति शेषः. १६. केशवं तच्च ते इत्यत्र—हे भीष्म, तत् तस्मात्, ते स्तुतिनिन्दे, किञ्चिदपि न मन्यसे. स्तुतिनिन्दादोषं न जानासीति भावः. १८. कथं भोजस्येत्यत्र—कथनकाम्यया, वृत्तिकथनेच्छया, भवान् सर्वं जगत् ईदृशे कृष्णे कथं समावेशयते. सर्वं जगदेतदाश्रयमिति कथं स्तौषीति भावः. १९. न चैषां न च ते भक्तिः प्रकृतिं याति भारते-त्यत्र—एषां पाण्डवानां, भक्तिः कृष्णे क्रियमाणा भक्तिः. प्रकृतिं वस्त्वस्वभावं? न याति—गत्यर्थानां ज्ञानार्थत्वात् न जानाति. ते भक्तिश्च प्रकृतिं न याति. श्रुतं—भवदीयैरेव श्रुतम्. अन्येन भवद्भ्योऽन्येन न श्रुतम्. कृष्णवन्दिवत् स्तौषीति योजना. २०. कुलिङ्गशकुनिः—कुलिङ्गाख्यः पक्षी. २१. सा हि मांसार्गल-मित्यत्र—मांसार्गलं मांसाख्यस्वबाधकवस्तु, इच्छतः क्षुद्र-तया तदहिंसनमिच्छतः. २४. पशुवत् साध्वसं नृपैरित्यत्र—साध्वसं भीतिर्यथा भवति तथा. ३०॥. आन्तम्—अन्तेति विद्यमानं कार्यम्. ३३. यावदस्यैवेत्यत्र—यावदस्य देवस्य कृष्णस्य कृष्णस्य? निपातितः भवदङ्गे निपातितः, स एव देहं भवद्देहं विशति. ३६. अपेतेति—लोटि मध्यमपुरुषवचनम्. ४९. सौवीराप्रतिपत्तौ चेत्यत्र—प्रतिपत्तौ पद् गतावितिधातोः द्वारकाप्रत्यागमने सति. बभ्रोः—बभ्रुनामकस्य

यादवस्य. ५४. करूशार्थे—दन्तवक्रार्थम्. मातुलस्य—वसुदेवस्य. नृशंसकृत्—निष्ठुरकारी. ५५. जिहीर्षया—कन्यापहारेच्छया. ५७. परमानृजुरित्यत्र—परमश्चासौ अनृजुः वक्रश्चेति विग्रहः. ५९. मातुलेयोऽस्य सङ्गर इत्यत्र—अस्य मातुलेयः अहं सङ्गरे प्राप्ते सति वधार्हाणामागसां शतं—क्षन्तव्यमिति घोरैः समयैर्बद्धोऽस्मीति योजना. ६०. वासुदेवेन विश्रुता इत्यत्र—विश्रुताः विशेषेण श्राविताः इत्यर्थः. ६७. तदा तद्वृष्णिवीरेणेत्यत्र—स चासौ वृष्णिवीरश्च तद्वृष्णिवीरः. तेन. ६९.

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

पराक्रमं च मार्गं चेत्यत्र—परस्याक्रमणं पराक्रमम्. एकग्रहदशासमाप्तौ ग्रहान्तरदशावाप्तिः मार्गम्. वक्रावक्रगतिरूपमार्गं. सन्निपातं—पञ्चषडादिग्रहयोगम्. समुच्छ्रयम्—केन्द्राद्युच्चस्थानस्थितिम्. आरोहणं—दी(य)नस्थानादुच्चस्थानारोहणं .अन्योन्यप्रतिसर्पणम्—ग्रहयोः परस्परयुद्धं. ५. रश्मीनां व्यतिसंसर्गम्—नीचोच्चग्रहयोरेकराशौ मेलनं. व्यायामम्—कालक्षेपेण फलदानं. पीडनं—सद्यः पीडनं. दर्शनादर्शनानां—दृश्यन्त इति व्युत्पत्त्या दृश्यादृश्यग्रहाणां दर्शनादर्शनं दृश्यस्य बृहस्पत्यादेः अदर्शनं मौढ्यसंज्ञितं, अदृश्यस्य राह्वादेः चन्द्रोपरागादौ दर्शनं. ६. हानिं—हान्याख्य-

फलदत्वं, वृद्धिं—वृद्धिफलदत्वं. ह्रासं—व्ययफलदत्वं, वर्णस्थानं—बृहस्पतियोगे ब्राह्मणानां, अङ्गारकयोगे क्षत्रियाणां, शनैश्चरादिग्रहयोगे वैश्यशूद्राणां, फलं उपरागादेः श्वेतिम्नि ब्राह्मणानां, रक्तिम्नि क्षत्रियाणां, पीतिम्नि वैश्यानां, नीलिम्नि शूद्रादीनां फलं वा, कस्यचित् ग्रहस्य श्वेतवर्णं वस्त्रपुष्पादिकं, कस्यचित् रक्तं, कस्यचित् पीतं, कस्यचिन्नीलमिति वा वर्णस्थानं. बलाबलं—ग्रहाणां प्राबल्यं दौर्बल्यं च. ७. उत्पाद्यन्ते च लोकेऽस्मिन्नित्यत्र—अरिष्टकाले, अकस्मादुत्पद्यन्त इत्युत्पाताः इत्यर्थः. ८. अच्छाये विमलच्छायेत्यत्र—यत्र चैत्यकवृक्षाणामच्छाये छायाया अयोग्ये स्थले. विमलच्छाया प्रतिच्छाया सूर्यादीन् प्रत्येव छाया. १०. शीर्णपर्णप्रवाला इत्यत्र—शीर्णपर्णाः पतितपर्णाः प्रवालाः पल्लववच्छोभमानाः. चैत्यगाः वृक्षगाः पर्णाश्च. अपहृष्टप्रवालाः—अपगतप्रवालाः शुष्कवर्णा एव दृश्यन्ते. तत्र भावं उत्पातसद्भावं. हीयमानाः क्षीयमाणा वृक्षाः स्निग्धपत्रप्रवाला दृश्यन्ते. ११—१२. वनस्पतिः पूज्यमान इत्यत्र—अपूजितः पूजार्थं सङ्कल्पितः पूजामप्राप्तश्चेत्यर्थः. १५॥. न तं वृक्षं निपातयेदित्यत्र—तं वृक्षं वृक्षान्तरे शिलया वा प्रतिरुद्धं दण्डरज्ज्वाद्युपायेन पुनर्निपातयेदित्यर्थः. १७॥. अथैनं छेदयेदित्यत्र—एनं वृक्षं छेदयेत् पातार्थं मध्ये छेदयेत्, इन्धनार्थं वा छेदयेदित्यर्थः. १८॥. दैवतानां

च पतनमित्यत्र—उत्सवे उदूह्य ये मानना देवानां पतनं दैवताः देवालयान्तस्थितदेवाः. १९॥ .अन्यद्वारिभयमित्यत्र—वारि उदके, अन्यत् किञ्चित्, भयं भयङ्कररक्तबुद्बुदादिकम्? विकृतं यदि दृश्येतेत्यत्र—विकृतं रावणहस्ताद्याकारेण जायमानो मृद्विकारः. ३० .श्रेणीपदानित्यत्र—श्रेणीभूतबाहुपादयुक्ताः प्राणिनः एणी इत्यपभ्रंशभाषा. दीपकान्—तमसि दीपाकारेण ज्वलमानान् खद्योतान सरीसृपप्राणिविशेषान्. वासण्णजिरीत्यपभ्रंशभाषा. ३५. अभिन्नं वाऽप्यपक्वं वेत्यत्र—अभिन्नं वा पाकेन तण्डुलेषु विदारणरहितं वा. अपक्वं वा पाकरहितं वा. यत्र भाण्डे अन्नमुपचीयते अभिवर्धते ते तण्डुलाः जीवन्ते वा तण्डुलीभावेनैव तिष्ठन्ति वा. म्रियन्ते वा तण्डुलीभावं त्यक्त्वा हस्तेन स्पर्शे सति चूर्णीभवन्ति वेत्यर्थः. ३६. उदपाने च यत्रेत्यत्र—"पुंस्येवान्धुः प्रहिः कूपं उदपानं तु पुंसि वे" त्यभिधानात् उदपाने कूपे. ततः कूपान्निर्गच्छेयुः स्थावरेषु भूप्रदेशेषु प्रवर्तन्ते च. ३७. विकृतानि प्रजायन्त इत्यत्र—विकृतानि यथा भवन्ति तथा प्रजागरेण जायन्ते. ४०. योऽसौ चेदिपतेस्तातेत्यत्र—विनश्यत्यनेनेति विनाशो गोविन्दः. तद्विनाशसूचकं दुर्निमित्तम्. ४५. रराास च मही कृत्स्नेत्यत्र—रराास "रसी उद्वेग"? इति धातोः तत्रास त्रासा? जाता. ५०॥.

## ॥ षट्चत्वारिंशोऽध्यायः ॥

द्वैरथं कांक्षितमित्यत्र—द्वौ रथौ ययोस्तौ द्विरथौ, तयोर्भावः द्वैरथम्. द्वन्द्वयुद्धमित्यर्थः. ३. अद्य त इत्यत्र—ते मामका बाणाः. नेष्यन्ति—यमलोकं प्रापयिष्यन्ति. १६. अन्तर्धामथ चक्रुरित्यत्र—अन्तर्धां अन्तर्धानं "अन्तर्धा व्यवधा पुंसि त्वन्तार्धिरपवारणम्" इत्यमरः. १९॥. अपसन्नवेत्यत्र? अवसन् सुनीथं विहाय शिशुपालं प्रत्यागच्छन्? रुधिरं परिसुस्रावेत्यत्र अति अतिशयेन, रुधिरं परिसुस्रावेव. ४१. नैषु चिन्मयि तास्थिर? इत्यत्र—ये शराः मयि तास्थिरे तेषां मध्ये, चित् कश्चिदिषुः, असुरजनमोहनार्थं शराविद्ध इव अहमभवम्, वस्तुस्थित्या ममाङ्गे एकोऽपि शरः न लग्न इति भावः. ४८॥. चिच्छेद च सुनीथस्येत्यत्र—सुनीथस्य पश्यतः सतः चैद्यस्य शिरश्चिच्छेदेत्यर्थः. ५०॥. तेजः—ज्योतिर्मयस्य जयस्य देहात्मकं तेजः. ५२. सुवान्तादित्यत्र—सुवः स्वर्लोकस्य, अन्तात्—मध्यात्? हस्तैर्हस्ताग्रामित्यत्र—प्रत्यविक्षन्? पेषणं कृतवन्तः. ५७॥. प्रजापतिगणा इत्यत्र—प्रजापतिगणाः, ब्रह्मादिप्रजापतीनां गणाः ६१.

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

शान्तविघ्नार्हणक्षोभइत्यत्र—अर्हणात् क्षोभः शिशुपालस्य क्षोभः, विघ्नश्चासौ अर्हणक्षोभश्च. स शान्तो यत्र स तथोक्तः.

१. वागीशाः?—विद्याधीशाः. २ उपेन्द्रस्यैवेत्यत्र—देवैः सह वर्तमानः सहदेव इन्द्रः. तेन उपेन्द्रस्य विहितं कर्मैव. ३. पर्यवीविषन्नित्यत्र—अतिशयेन परिवेषयामासुः. १७. शृङ्गचर्णाम्बुजा इत्यत्र—अम्बुजाः शङ्खाः. वर्णाः वाद्यविशेषाः. ४२॥.

## ॥ अष्टचत्वारिंशोऽध्यायः ॥

तेऽनुव्रजतेत्यत्र?—ते यूयम्. १५॥.

## ॥ एकोनपञ्चाशोऽध्यायः ॥

अनुसंसाद्य नृपतीनित्यत्र—अनुसंसाद्य अनुप्राप्य. १.

## ॥ पञ्चाशोऽध्यायः ॥

तत्र स्फाटिकतोयामित्यत्र—स्फाटिकवच्छोभमानशुभजलां, स्फाटिकवच्छोभमानशुभाम्बुजयुक्तां. ३. प्रलम्भान्—वञ्चनादि. ११॥. जगाम स्वगृहामित्यत्र—स्वगृहमृते अन्यत् गृहं जगामेति सम्बन्धः. १२॥. स तु गच्छान्नित्यत्र—अनेकाग्रः एकाग्रचित्तरहितः. १६॥. क्षान्तं ततोऽपराधमित्यत्र—ततः कारणात् क्षोभितं तं चैद्यवधाख्यमपराधं. क्षान्तं क्षमाविषयं कर्तुं नार्हसि ॥ २७॥.

## ॥ एकपञ्चाशोऽध्यायः ॥

आच्छादयसीत्यत्र—आव्रियते एभिः पुरुष इत्यावाराः—वस्त्राणि. १३॥. आजानेया वहन्तीत्यत्र—आजानेयाः सद-

श्वाः । "आजानेयाः कुलीनाः स्युः विनीताः साधुवाहिनः" इत्यमरः. १४. अधीताः कृतवानित्यत्र—येन त्वया विद्याः अधीताः, कृतवान् नैमित्तिककर्मवान्. १९. भ्रातुः—मम भ्रातुः. पाण्डोः राज्ये स्थितः स त्वमिति सम्बन्धः. २०.

सन्तोषो वै श्रियमित्यत्र—यावल्लब्धं तावतैव परितोषः सन्तोषः. पुनर्द्रव्यार्जने अलसत्वात् श्रियं हन्ति. अभिमानः—पुण्यकर्मण्येवाभिमानः. सोऽपि श्रियं हन्ति. अनुक्रोशः सर्वप्राणिषु दया. सोऽपि श्रियं हन्ति. सन्तोषः तावुभौ अभिमानानुक्रोशौ. २६. उभे अनुत्थानभये. अनुत्थानं अनुत्साहः, भयं कस्मिन् सति किं स्यादिति भयं यैः एतैः पञ्चभिर्युतः पुरुषः महत् ऐश्वर्यं नाश्नुते. २६॥. न मामवैहीत्यत्र—भूतां प्रभूताम्. युधिष्ठिरे तां श्रियं दृष्ट्वा, मम मां श्रियं नावैहि. तत्सम्पदः अग्रे मम सम्पदतितुच्छेति भावः. २७॥. सपत्नानृध्यत इत्यत्र—सपत्नानृध्यतः वर्धमानान्. कौन्तेये अदृश्यां द्रष्टुमशक्याम्. वर्धतीं वर्धमानां, श्रियं च निशाम्य. अहं किं किमपि अन्नाच्छादनादिकं न पश्यामि. तद्द्रष्टुमपि मनो नायाति, भोक्तुं नेति किं वक्तव्यमिति भावः. २८॥. कदलीपत्रवर्णानीत्यत्र—चित्राम्बराणीति शेषः. ३२. ब्राह्मणा वाटधाना इत्यत्र—वाट धनाः पुष्पवाटादिना धानाः धानवन्तः. ३८. त्रैखर्वा इत्यत्र—त्रयः धर्मार्थकामाः खर्वाः तुच्छाः यस्मात् पुरुषार्थात् सर्व

मोक्षस्त्रिखर्वः. तत्सम्बन्धिनः त्रैखर्वाः, मुमुक्षवः इत्यर्थः. त्रिखर्वविषयस्था वा त्रैखर्वाः. अस्मै—धर्मराजाय, प्रतिपद्य—निवेदयित्वा. ३९. धृतराष्ट्रं नरव्याघ्रमित्यत्र—अपदान्तरं—न विद्यते पदान्तरं वाक्यान्तरं यथा भवति तथा. ६९॥. धृतराष्ट्रोऽन्वशात्तदेत्यत्र—अन्वशात् अनुशासनमकरोत्. ७५॥.

## ॥ द्विपञ्चाशोऽध्यायः ॥

के च तत्र सभास्तारा इत्यत्र—सभास्ताराः सभ्याः. "सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते" इत्यमरः. २. अपजीवा इवेत्यत्र—कारस्कराः—कुर्वन्तीति काराः, कराः येषां ते तथोक्ताः. कराभ्यां बहुकार्यकरणसमर्था इत्यर्थः. लोहवत् दृढा जङ्घा येषां ते लोहजङ्घाः. पादाभ्यां बहुदूरगमनेप्यालस्यरहिता इत्यर्थः. एतादृशाः किङ्कराः किङ्करनामकदैत्यगणाः. यद्वा, कारस्करा लोहजङ्घाश्च जातिविशेषा एव. अपजीवा इव—अपगतो जीवो येषां ते अपजीवाः, मृता इव प्रातिकूल्यकरणे असमर्था इत्यर्थः. अपजीवाः—अपहृतं जीवयतीति व्युत्पत्त्या जीवो जीवनधनं यैस्ते त इव धनं दत्त्वा सङ्गृहीतभटा इव युधिष्ठिरनिवेशने निघ्नाः. "निघ्नः परवशो मत" इत्यभिधानात् सर्वोक्तकारिणो भृत्याः सन्तः आसमन्तान्नगरस्योपरि परितश्च आभान्ति प्रकाशन्ते. करणगमनादावतिसमर्था एते दैत्याः धर्मराजभवने दासाः—दासाः

सन्तस्तिष्ठन्तीति भावः. २२. अन्त्याः—भुवः कोणे वर्तमानाः पर्युदस्ताः—परितः उत्कर्षेण अस्तं राष्ट्रं यैस्ते पर्युदस्ताः. गिरिकन्दरादिषु विद्यमानाश्चोराः भूतपिशाचादयश्च युधिष्ठिरनिवेशने निम्ना इवाभान्ति. २३. ज्येष्ठोऽहमिति इत्यत्र—ज्येष्ठः वयोज्येष्ठः. श्रेष्ठः—गुणैः श्रेष्ठः. युक्तः—नियुक्तः. २४. उपस्थितानामित्यत्र—रत्नानां रत्नहारिणां जनानां च पारमन्तं अपरं आदिञ्च न पश्यामि. २६. कृतां बिन्दुसरोरत्नैरित्यत्र—बिन्दुसरोरत्नैः बिन्दुसरसः समीपस्थवृषपर्वसभारत्नैः मयेन कृताम्. २७. शत्रोरत्रेत्यत्र—भवानीदृशं मां यदि ममृषसेहेषु ? पुष्करीं सभां मत्वेति सम्बन्धः. ३०॥. न श्रुतानीत्यत्र—तेषां वाक्यानि न श्रुतानि, मुखानि न दृष्टानि. ३८॥. और्णांश्चैलान् वार्षदंशानित्यत्र ?—"ऊर्णा मेषादिलोम्नि स्या"दित्यभिधानात् और्णान् ऊर्णाकृतचित्रकम्बलादीन्. पार्षदंशान् वृषभदंशनशीलत्वात्? वृषभदंशा व्याघ्रादयः, तत्सम्बन्धिचर्मनखादीन्. ४२॥. अश्वांस्तित्तिरिकल्माषानित्यत्र—तित्तिरिपक्षिवत् कृष्णपाण्डुरान्. त्रिदशान्—त्रिः त्रिवारम् दश वर्षाणि येषां ते तथोक्ताः. त्रिंशद्वयस्थानित्यर्थः. पीलुशमीङ्गुदैः—"पीलुर्गुडफलस्त्रंसी"त्यभिधानात्, द्राक्षाखर्जूरनालिकेरादयः पीलवः. शमी—शमीवृक्षः. इङ्गुदोऽपि पुष्पलताविशेषः. तैः पुष्टानश्वादीन् चतुष्पदः. पुष्टा इति पाठे त्रिगर्तानां विशेषणम्. ४३॥. गोपानसेन गोपानामित्यत्र—

गोपानसेन गोपानामानसेन अनस्सम्बन्धिना नानाभारेण सहिताः. वसान्नयोन्यदूष्या इत्यत्र ? "हृन्मेदस्तु वपा वसे"त्यभिधानात् वसया मत्स्यमृगादीनां हृन्मेदसा अन्नं येषां ते वसान्नाः. तथाऽपि योनितः स्वस्वजातितः अदूष्याः, दूषयितुमयोग्याः. वसान्नाश्च ते योन्यदूष्याश्च वसान्नयोन्यदूष्याः. यद्वा, वसान्ना म्लेच्छविशेषाः, योन्यदूष्याः स्त्रीराज्याधिपतयः ४४॥. त्रिगर्ताः—त्रिगर्तदेशस्थाः ? त्रैखर्वो रथमुख्यांश्चेत्यत्र-त्रैखर्वः त्रिखर्वविषयाधिपती राजा. ४६॥. यश्च स इत्यत्र—यः शङ्खः कुणिन्देन राज्ञा दत्तः स राज्ञश्शङ्खः. द्विजमुख्येन केनचित् ब्राह्मणेन धर्मराजाय निवेदितः. ४७॥. द्विजमुख्याय शङ्खदात्रे ब्राह्मणाय. ५३॥. काश्मीरराजो मार्द्वीकमित्यत्र—शुण्डायातं मदस्थानमित्यभिधानात् शुण्डापानयोग्यत्वान्मदकरत्वाद्वा शुण्डनामकं मधु मधुरं मार्द्वीकं मद्यम्. ५५॥. प्रवालं च परगतमित्यत्र—परं पेषणादिना उत्तमस्वभावं, गतं प्राप्तम् ? ५९॥. दार्दुरं चन्दनमित्यत्र—दार्दुरं, दर्दुरेण क्रूरेण ग्रन्थिकोटरादिना सहितम्. ६१॥. इन्द्रवृष्टैरित्यत्र—इन्द्रवृष्ट्युद्भवैः. नाद्यमुखैः नदीभवानि नाद्यानि. मुखपदेन तटाकजानि गृह्यन्ते. ७७॥. अश्मसारमयं भाण्डमित्यत्र—"गिरिसारमश्मसारं लोहं कालायसं तथा । शस्त्र"मित्यभिधानात् अश्मसारमयं लोहमयम्. शुभ्रदन्ततनूनस इत्यत्र—शुभ्राः दन्ताः, तनूः शरीरं,

नाः नासिका च येषां तान्, शुभ्रदन्ततनूनसः. गजानित्यर्थः. ८२॥. एकपादांश्चेत्यत्र—एकस्मिन् सूक्ष्मपात्रे, पादाः पादचतुष्टयं येषां ते एकपादाः. तान्. शिक्षितानिति भावः.८४. एकपादकाः—एकपादाख्यदेशस्थाः.८६॥.गोशीर्षकमित्यत्र—"तैलवर्णकगोशीर्षहरिचन्दनमस्त्रिया" मित्यभिधानात्, श्रेष्ठचन्दनेष्ववान्तरविशेषः.८७॥.कालेयकञ्च रूप्यं चेत्यत्र—कालेकज्वालामुख्याख्यकालीदेशः.? काश्मीरदेशः. तत्र भवं कालेयकम्. कुङ्कुमम्. ९०॥. दन्ताः गजदन्ताः, जातिफलं, जाजिफलं, जायकायीत्यपभ्रंशभाषा. तक्कोलकं कोशफलसंज्ञितं परिमलद्रव्यम्. ९१॥. चीनान् शूहूणानित्यत्र ? अन्तरवासिनः समुद्रद्वीपवासिनः. मीनान्? हूणान् चीनहूणादिजातिविशेषवतः म्लेच्छविशेषान्. हारिष्ठैरिति? तेषामधिपतिः कश्चित्. ९४॥. उष्णीकं करमित्यत्र—किट्टजं—"गोर्दं किट्टं मलोऽस्त्रिया"मित्यभिधानात्, लोहमलेन कृतं. पट्टजं—पट्टतन्तूद्भवं. प्रमाणेन—तत्तच्छिरसामपेक्षितप्रमाणेन रागस्पर्शेन च आढ्यं. बाह्लिदेशे चीनदेशे च समुद्भवम्. उष्णीषकं शिरोवेष्टनमेव करमुपायनम्. उपलक्षणं चैतत्; तत्कृतकञ्चुकप्रावरणादिकं करं उपायनं प्रशंसन्, चीनहूणादिजातिविशेषांश्च प्रकर्षेण धर्मराजाय शंसन्, स हारिष्ठः द्वारपालैः द्वारमलभ्यत प्राप्यत. अन्तः प्रवेशित इत्ययर्थः. ९६. खर्वटादयोऽपि जातिविशेषाः.

९७. किट्टीकृतं—किट्टवत् पिण्डाकारेण कृतं सुवर्णम्. १०१. वैयाघ्रं—व्याघ्रचर्म. १०४. जतुचेलानित्यत्र—लाक्षारसेन रक्तवर्णचेलान्. १०७. कौशिकं चैवेत्यत्र—"पत्रोर्णं धौत-कौशेयं बहूमूल्यं महाधनमि"त्यभिधानात् पत्रोर्णं धौतकौशेयम्. १३२॥. अभितः कवुकिङ्करानित्यत्र—अभितः कबुधराः किङ्कराः येषां तान्. १३४॥.तुम्बुरुस्तु मुदादत्तेत्यत्र—आदत्त?—आदत्तवान्. १४३. अश्वेनेव युगं नद्धमित्यत्र—अश्वेन विपरीतं यथा भवति तथा नद्धं बद्धं युगमिव. मम च धर्मराजस्य च. त्वया दत्तावदपि? विपरीता दृश्यत इति दृष्टान्तानुसारात् दार्ष्टान्तिकमप्युन्नेयम्. १५१. उच्चावचान् महान् मह्यमित्यत्र—मह्यं राजभिः प्रेषितान् बहून् उच्चावचान्.—महान् "मह उद्धव उत्सव" इत्यभिधानात् उत्सवान्, १५८. मुक्तामुक्तकृतं नैवेत्यत्र—आकुब्जवामनान्—कुब्जः पादयोरेव ह्रस्वः. वामनः सर्वाङ्गेष्वपि ह्रस्वः. तान् मर्यादीकृत्य सर्वं प्राणिजातम्. भावप्रधानो निर्देशः. मुक्ततया अमुक्ततया च कृतं नैव. सर्वे च मुक्ततयैव कृता इति भावः. अमुक्ता न विद्यते मुक्तं भोजनं यस्याः सा याज्ञसेनी द्रौपदी. प्रति प्रति अवैक्षत् दृष्टवती. स्वभोजनात्पूर्वं भोजनरहितः कोऽपि नास्ति खल्विति प्रत्येकं विचारितवतीति भावः. १६५॥. चेकितान उपासङ्गमित्यत्र—"तूणोपासङ्गतूणीरनिषङ्गा" इत्यभिधानात्, उपासङ्गं

तूणीरम्. (झ) "त्सरुः खड्गादिमुष्टौ स्या"दित्यभिधानात् (झ) त्सरुं खड्गमुष्टिं. सन् (झ) त्सरुः खड्गमुष्टिग्रहणप्रदेशो यस्य तम्. दधिदुग्धादिपात्रस्थापनार्थं कृतो रज्जुविशेषः शिक्या. शिक्यानां समूहः शैक्यम्. १७५॥. कलशोदधिः क्षीरसमुद्रः. १७८॥. पराक्षमाण? इत्यत्र—परा सम्यक्, क्षाम्यत इति क्षमाणः. स न भवतीत्यक्षमाणः. असहमान इत्यर्थः. १९०.

## ॥ त्रिपञ्चाशोऽध्यायः ॥

व्युत्पन्नं चेत्यत्र—नः अस्माभिः, व्युप्तं विशेषेण उप्तं? बीजवदिन्द्रप्रस्थे स्थापितम्. २. अनुमेहीत्यत्र? "मिह्—सेचन" इति धातोः सकलेष्टसिञ्चनवती कुरु ६. निर्वर्तिष्व?इत्यत्र-निर्वर्तिषु नितरां वर्तमानेषु. यतः—"यती—प्रयत्न" इति धातोः प्रयत्नवान्. १०. सर्पो बिलशयानिवेत्यत्र—बिले शेरत इति बिलेशयाः मूषिकाः. २३. कुलं—? राष्ट्रम् २५. विनाशितेत्यत्र—विनाशिता विनाशयिता. केवलं तेन चात्मानमित्यत्र—तेन नाशेन, स नष्टः द्विजः राजा वा आत्मानं वंशं भृत्यं सबन्धुकराष्ट्रं च नाशयतीति योग्यक्रियाध्याहारेण योजना? जन्मवृद्धिमिवार्याणामित्यत्र—आर्याणां जन्मवृद्धिं जन्मना वृद्धिं सत्कुलप्रसूतत्वमिव. २८. अनावृत्तस्येत्यत्र—न विद्यते आवृत्तमावर्तनं युधिष्ठिरश्रियः आकर्षणं यस्य स तथोक्तः. ३०.

## ॥ चतुःपञ्चाशोऽध्यायः ॥

अक्षतः—अक्षेषु विद्वानिति सम्बन्धः. २. "पणोऽक्षेषु ग्लहः" इत्यभिधानात् ग्लहः पणबन्धनम्. ३. धर्मतपन इत्यत्र—जयः ? युद्धेन शत्रूणां जयः. धर्मतपनः—धर्ममहिंसाख्यं धर्मं तापयतीति स तथोक्तः. तथैव तद्वदेव धर्मश्च जयतपनः. तस्मात् कारणात् विरोधिनौ तावुभौ धर्मजयौ. विनयतः विनयेन प्रवर्तनात्, जेता भवेत्. विनयेन अक्षशीलायां ? कृतायां तत्सत्वदाहारणाख्यजयोऽपि ? भविष्यति. तेषां हिंसा च न भविष्यतीति भावः. ७. भयं परिहरन् मत्त इत्यत्र—मत्त इति अस्मच्छब्दात् तसिलन्तपञ्चमी. मदाख्यनिमित्तात्, भयं लोकापवादभयं, परिहरन् दुर्योधन एव दुष्टः धृतराष्ट्रः किं करिष्यतीति बहिष्कुर्वन्, आत्मानं विनयेन परिरक्षन्, अत एव वर्षासु क्लिन्नपटवत् तिष्ठन् भवान् नावसीदति. यथा पटः निदाघसमये आपाततः जलासेकरहित इव तिष्ठति, मूलेन जलं पिबति च तथैवेति भावः. १०. वैरं विकोशे सृजतीत्यत्र—विकोशं विगतकोशस्य धनं. १२. दुरोदरं पाण्डवैरित्यत्र—दुरोदरं द्यूतं, कुरुष्व—कारयस्व. १५. तदैवैतदित्यत्र—हे अयशस्येति दुर्योधनं प्रति सम्बुद्धिः. १७. राजा तु देवीत्यत्र—देवा ? देवनं "धूर्तोऽक्षदेवी कितव" इत्यमरः. ४१. द्रौपदीमादिकृत्वेत्यत्र—आदिर्यथा भवति तथा. ४५. ब्राह्मणेभ्यो धनमि-

त्यत्र—गम्यर्थं गमिनः गन्तुः स्वस्य अर्थं प्रयोजनार्थम्. ५१॥. कालस्य समयेनेत्यत्र—कालनामकपरमात्मनः, समयेन सङ्कल्पेन. ७८. समियाय च धर्मात्मेत्यत्र—सं—सङ्गमियाय. ७८॥.

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

अक्षग्रह इत्यत्र—स अक्षग्रहः. अक्षेषु क्रियमाणः पणः अभिभवेत् पराभवं प्रापयेत्. तेनैव पराभवाख्यकारणेनैव, कालः विहारकालः भवति इदं पराभवप्रापणमात्थ. अमार्गेण नाजैषीरिति वदता मार्गेण जयस्य त्वयैवोक्तत्वादिति भावः. प्राणं पणं कुरुष्वेति क्रियावृत्त्या योजना. ५. इमानि शोकद्वाराणीत्यत्र—यः मायया कितवैः सह इदं पापं देवनं सदा सञ्चरते स इमानि शोकद्वाराणि वित्तव्ययपापादीनि सञ्चरते सम्यगाचरति. युद्धधर्मेण जयस्तु जय एव तत्तस्मात् कारणात् तद्युद्धमेव परं उत्तमम्. ६-७. भाषाभिः—म्लेच्छादिभाषाभिः, नेच्छन्ति व्यवहर्तुं नेच्छन्ति ८. शिक्षितुं—दुर्जनान् शिक्षितुं तत् विद्वान् त्वं माऽतिदेवीः अति—धर्ममतिक्रम्य मा देवीः मा जैषीश्च. ९. निकृतेः कापट्यात् कृतेन एतेन देवनेन तव वित्तमस्य दुर्योधनस्य अभ्ययुज्यते? किमिति योजना. १०. अश्रोत्रियः श्रुतितत्त्वमजानानः सुतः पुत्रः. तं यः श्रोत्रियः निकृत्याम-

भ्येति यो विद्वानविदुषः निकृत्यामभ्येति तामेव निकृतिमाहुः. अन्यैः सह निकृतिः न दोषायेति भावः ११.

## ॥ षट्पञ्चाशोऽध्यायः ॥

इमे निष्कसहस्रस्येत्यत्र—भरितं अयुतं यथा भवति तथा निष्कसहस्रस्य. कुण्डिनः निष्कसहस्रक्रयार्हकुम्भवन्तः इमे अर्थाः अयुतायुतद्रव्यपरिपूर्णबहुसंख्याकसौवर्णकुम्भान्तस्थापिता इति यावत्. ११. वहन्ति नैषा मुच्येतेत्यत्र—एते हयाः. यदा भूमिं रणभूमिं पदा उपास्यसन्? तदा एषा भूमिः पदान्न मुच्येत, रणभूमिं परित्यज्य पलायनं न कुर्वन्तीति भावः. १५. हेमकक्ष्या इत्यत्र—हेमकक्ष्या सुवर्णोदरवन्धनोपेताः. कृतापीडाः कृतशिरोलङ्काराः. "इभस्तंबेरमः पद्मी"त्यभिधानात्, पद्मिनो गजाः. १७॥. इष्टाः करेणवो येषां ते तथोक्ताः. १८॥. कञ्जुकेयूर इत्यत्र—कञ्जुः कञ्जुकः. २१॥. प्रदक्षिणानुलोमेत्यत्र—प्रदक्षिणानुलोमाः, प्रकृष्टानि दक्षिणानि दक्षिणावर्तान्यनुकूललोमान्येषां ते? लक्षणावन्त इत्यर्थः. २६. हेमभाण्डाः सुवर्णोपकरणानि. २९॥. एकैकः रथी. सहस्रपरमां सहस्रादुपरितनां, भृतिं—भरणाय कल्पितद्रव्यम्. ३०॥. एवं वर्णस्य वर्णस्येत्यत्र—क्षत्रवैश्यादिवर्णस्य. समुच्चयसहस्रशः—समुच्चयस्य—समुदायस्य, सहस्रशः—सहस्राणि. ३६॥.

## ॥ सप्तपञ्चाशोऽध्यायः ॥

मधु वै माध्विकेत्यत्र—माध्विको मद्यकर्ता. मधुवत् मधुकर्तृवत्. ४. स्वे परे वेत्यत्र—स्वे स्वकीये दुर्योधने, परे धर्मराजे वा. असमञ्जसमन्यां सदोपभुग्नः वक्रीभूतः. ? ५॥. आयतिं च ददत्त्वं चेत्यत्र—ददतो भावः ददत्त्वं.१३ .तथात्वकामः पाण्डूनामित्यत्र—अकामः प(रि)रवित्तेषु कामरहितः १४ .ज्ञाताः प्रिया? इत्यत्र—भैमसेनाः, भयंकरसेना(र)सहिताः. "काम्भोजा-बाह्लीका हया" इत्यभिधानात् सबाह्लीका सहतुरगाः. २०. नावं समुद्र इवेत्यत्र—बालः बालक एव नेता यस्याः तां. २२. ग्लहते—पणं बध्नाति. २३. आकर्षते वाक्यबलप्रणीत इत्यत्र—युधिष्ठिरेण वाक्यबलात् प्रणीतः कृतः. हृदि प्रौढः—प्रौढियुक्तः. मन्त्रपदः—भविष्यत्कार्याणामालोचनस्य स्थानभूतः. सुधन्वा—सुष्ठु तव पुत्रस्य धनवान्. सकलः समाधिः—तूष्णीं स्थितिः. तव चित्तमाकर्षते अङ्गीकारयति. ते सुचिरं सुखप्रदोऽस्तु. कञ्चित्कालमनेन द्रव्येण सुखीभव, पश्चात् भावि कार्यं त्वमेवानुभविष्यसीति भावः.२४.तदानीम् उपरि. तुमुले-युद्धे २६. किञ्चेदं स्यादित्यत्र—वं ? यद्वसु किञ्चित् स्यात् पाण्डवागमनकालेऽपि स्यात् तद्वसु पार्थान् विन्देत इति योजना. २७.

## ॥ अष्टपञ्चाशोऽध्यायः ॥

जिह्वा मनो हृदयमित्यत्र—निजिर् शौचपृथग्भावयोरिति धातोः? तव जिह्वा मनः हृदयं च पृथग्भावं प्राप्नोति. "मनस्यन्यद्वचस्यन्यत्कर्मण्यन्य"दिति वाक्यार्थमनुकरोषीति भावः. ज्यायः अतिशयितं, नवमनसः प्रातिकूल्यं निरीहं निष्फलमिति योजना. २. तेनानुशिष्ट इत्यत्र—"प्रवणः क्रमनिम्नोर्व्यां" मित्यभिधानात् क्रमेण निम्नभूप्रदेशादम्भ इवेत्यर्थः. ८. यो बलादित्यत्र—बलात् भृत्यबलात्. विचार्य तस्य राज्ञः? १०. तस्माच्च न स विन्देतेत्यत्र? तस्मात् भटात्, स राजा, शिष्टमवशिष्टम्, कञ्चन पुरुषार्थम्. ११. परिप्लुतानि—परितः प्लवन्ति चञ्चलानीत्यर्थः. १३. न रोचसे वान्नरोचे? १५. अनुप्रियं चेदित्यत्र—हिताहितेषु कार्येषु अनुप्रियमनुकूलतया प्रियं. हितेप्यनुकूलमहितेप्यनुकूलमित्यर्थः. १६. नाप्रियः साध्वित्यत्र—अप्रियः—यस्य यस्मिन् प्रीतिर्नास्ति स अप्रियः. १९. आशीविषानित्यत्र—आशीविषान्—सर्पान्. नेत्रविषान्—नेत्रयोः कोपाख्यं विषं येषां तान्. शूरपुरुषांश्च न कोपयेत्. २२.

## ॥ एकोनषष्टितमोऽध्यायः ॥

व्याकारं नाभ्यरक्षतेत्यत्र?—व्याकारं विरुद्धाकारम्. ४३॥.

## ॥ षष्टितमोऽध्यायः ॥

दुर्विभाव्यमित्यत्र—दैवमिति शेषः. २. नारुन्तुदः स्यादित्यत्र—"अरुन्तुदं तु मर्मस्पृगि"त्यभिधानात् अरुन्तुदो मर्मस्पर्शी. ६. अजो हि शस्त्रमित्यत्र—अजः परमात्मा. ८. भषन्ति ये वै श्वनराः सदैवेत्यत्र—ये पावमीड्यं? सदैव भषन्ति ते नराः. श्वानश्च ते नराश्चेति नराकाराश्श्वान इत्यर्थः. ९. तमत्येतारः इत्यत्र—तं द्वारसमूहम्. अत्येतारः—अतिक्रम्य गन्तारः बहवः कुरवः सन्ति. १०. तेषां—कुरूणां. सर्वहरः—सर्वान् हरतीति सर्वहरः, सुदारुणः विनाशः अनेन दुर्योधनेन सम्पादित इति योग्य—क्रियया सम्बन्धः. १२. प्रातिकामी—प्रातिकामीति दुर्योधनसूतस्य नाम. १३. मूढो राजेत्यत्र—कैतवं कितवस्य दुर्योधनस्य योग्यं कैतवम् अन्यात्किञ्चिद्वस्तु न स्यात् किमहो. १७. कस्य स्विदित्यत्र—कस्य स्वित् कस्य कार्यस्य अर्थे? २१. एवं द्यूत इत्यत्र-उभौ धीरबलावपि स्पशौं स्पृश्येते इति स्पशौं. अजौ स्पृशतः २६. निपुणोपलक्ष्य इत्यत्र—निपुणैरुपलक्ष्यः निपुणोपलक्ष्यः. ४४. कुरुते सुपूजामित्यत्र—पूजां धर्मस्य पूजाम्. ४५. कटाक्षपातै (त्रै) रित्यत्र—कटाक्षाख्यसन्देशवृत्यैरित्यर्थः? ४९. अस्सोन्यरक्त? इत्यत्र—अस्वः द्रव्यरहितो दरिद्रः गतसकलद्रव्यो वा. ५४. आहूय राजेत्यत्र—नातिकृतप्रयत्नं धर्मराजमाहूय कुशलैरेतैः सह कस्मान्निकृष्टकामः एतादृश-

नीचकार्ये कृतमनाः. कस्मादासीदिति सम्बन्धः. ५७. स शुद्धकाम इत्यत्र—स धर्मराजः, पश्चात् तत् कैतवमभ्युपेतः ज्ञातवान्. ५८. यच्छलेनानुविद्धमित्यत्र—छलेनान्तःकपटेन. ६०.

## ।। एकषष्टितमोऽध्यायः ।।

भवन्ति वेश्या वर्द्धक्य इत्यत्र—स्वगृह एव निवेशनयोग्या दास्या,? वेश्याः.?. बहूनां पुरुषाणां सयोनिं विक्रीय स्वप्रभोर्धनं वर्धयन्त्यो वराङ्गनाः वर्धक्यः १. न सकामा इत्यत्र—समानकामाः सकामाः. धर्मराजं पराभावयितुं शत्रवः कामयन्ते. त्वमपि तद्वन्नकामयेदिति भावः. ८. एवमस्मिन् कृत इत्यत्र—एवं दृश्यमानप्रकारेण, कृते धर्मराजेन कृते सति, अस्मिन् धर्मराजे, विद्यां धर्मबुद्धिं यदि भवानाह स्म—तर्हि तव च तस्य च सहितौ बाहू अग्नौ प्रक्षिप्येयमिति सम्बन्धः. १०. अरणिप्रज इत्यत्र—प्रकर्षेण जातः प्रजः. २७. तृणानि पशव इत्यत्र—तृणानि स्वास्तरणतृणानि. २८. स वै विवदनादित्यत्र—विवदनात् विरुद्धस्य कथनात्. ७१।।. यदि वै वक्ष्यसीत्यत्र—न वक्ष्यासि सत्यं न वक्ष्यसि. ७२।।.साक्षी च विब्रुवन्नित्यत्र—साक्ष्यं साक्ष्यसम्बन्धि वचनं विब्रुवन्—विपरीततया वदन. गोकर्णशिथिलं चरन्नित्यत्र—गोकर्णशिथिलं—गौः आर्तानां प्रश्नवाक्. कर्णात् श्रोत्रात्.

शिथिला विस्रंसिता यथा भवति तथा. चरन्—आचरन्. प्रष्टुः प्रत्युत्तरमवदन्नित्यर्थः. "यो हि प्रश्नं न विब्रूयाद्वितथं वापि निर्दिशेत्" इति प्रागपि अवचनविपरीतवचनयोरुक्तत्वात् अत्राप्ययमेवार्थः ७७॥. न चास्य शल्यमित्यत्र—अस्य—धर्मस्य. विद्धाः—पापविद्धाः. ७९॥. एनो गच्छतीत्यत्र—कर्तारं—निन्दार्हप्राचीनपापकर्तारम्. निन्द्यं एनः निन्दकानां श्रेष्ठादीनामेनः पापम्. ८१॥. स्वार्थाद्भ्रष्टस्येत्यत्र—स्वार्थात्—स्वारब्धप्रयोजनात्. ८४॥. अध्यूढाः—अधिकया सपत्न्या सह ऊढाः. ८५॥. समक्षदर्शनादित्यत्र—इति समक्षदर्शनं यथा तथा, श्रवणात् धारणात् पत्रशिलादिषु शासनरूपेण धारणात्. ८७. मन्यध्वं यत्रेत्यत्र—यत्र, कृष्णायाः प्रश्ने. ९१.

॥ द्विषष्टितमोऽध्यायः ॥

पुरस्तात्करणीयमित्यत्र—कार्यं दुश्शासनहस्तच्छेदाख्यं कार्यं. विह्वला कृताऽस्मीति सम्बन्धः. १. यत्—यस्मात् इदं द्यूतम्. २ .धर्मं स्त्रियः सभापूर्वमित्यत्र—"स्याद्धर्ममस्त्रिया"मित्यभिधानात्, धर्ममिति नपुंसकम्. नयन्तीति नयः सम्बन्धः. ९. पार्थिवानां सभामिमामित्यत्र—कथं नीतेति योग्यक्रियया सम्बन्धः. १०. कार्यस्यास्य च गौरवादित्यत्र—अस्य भविष्यतः भूभारहरणाख्यस्य १६. कुले जात इत्यत्र—भृशं व्य-

सनाभ्यागतः. एते धर्माः मार्गान्न च्यवन्ते. "वधूर्जाया स्नुषे" त्यभिधानात्, त्वं नः अस्माकं सर्वेषां बन्धुः. स्नुषा यथा तथा भवतीति योजना. १८.

## ॥ त्रिषष्टितमोऽध्यायः ॥

अनीश्वरमित्यत्र—राज्यस्य ईश्वरो न भवतीत्यनीश्वरः, तम्. ४. साचीकृताननेत्यत्र—साचीकृताननाः तिर्यक्कृतवदनाः. ८॥. न हि मुच्येत जीवन्नित्यत्र—पाञ्चाल्या इमान् मूर्धजान् उपस्पृशन् अयं दुश्शासनः. मे पदा पादेन भूमिमुपस्पृशन् पादघातेन भूमौ निपातित इत्यर्थः. जीवन्न मुच्यते हि मर्त्यधर्मात् परामृश्य मुच्येत. १३॥. एवमुक्त्वेत्यत्र—विष्फुरन्तं ओष्ठविष्फुरणं कुर्वन्तम्. १७॥. त्रयः किलेम इत्यत्र—न विद्यते धनं येषां ते अधनाः. गृहस्थितसर्वधनेषु स्वातन्त्र्यरहिता इत्यर्थः. त्वं दासपत्नी—दासस्य धर्मराजस्य पत्नी. अस्य धर्मराजस्य धनं च एतद्गृहस्थितधनानां मध्ये त्वमप्येकमस्यैव जीवद्धनमित्यर्थः. अत एव हीनेश्वरा त्वं दुर्योधनस्य दासी दासधनं च अभूः. सेवाकर्मण्यौचित्याद्दासीत्वं. साक्षादेवोपभोगानर्हत्वात् धनत्वं दासद्वारैवेति सूचनाय दासधनमित्युक्तम्. १९. प्रविश्य साऽन्तः परिचारैरित्यत्र—अन्तर्वेश्मेति सम्बन्धः. परिचारैः सहेति योग्यपदाध्याहारः. २०. नित्यं दास्य इत्यत्र—विहिता प्रवृत्तिः. २१. दासीभूतेत्यत्र—भव-

तीति योग्यपदाध्याहारः. २२. परं भयं पश्यतीत्यत्र—पश्यति दुर्योधनः. ३४. इदं धर्ममित्यत्र—अजानतेति लङात्मनेपदे प्रथमपुरुषबहुवचनम्. ज्ञातवन्त इत्यर्थः. दुर्दृष्टे अन्यबलात्कारेणापि दृष्ट इत्यर्थः. इमां च पूर्वमित्यत्र—इमां द्यूतलीलाम्. कितवः दुर्योधनः. यस्मादग्रहिष्यत् तस्माद्दोषोऽप्यभविष्यत्. अत एव पराजितात्मानः पराजित आत्मा मनो येन स तथोक्तः. जितमनस्को नेत्यर्थः. ३६. गान्धारपुत्रस्येत्यत्र—हे कुरव इति सम्बोधनम्. ३७. युधिष्ठिरश्चोदित्यत्र—विवदति—विशेषेण वदति. ३८. यदुच्यते पापमतिः कृतघ्न इत्यत्र—धिक्कृतः सद्भिः धिक्कृतः सूनुः यस्य, तेन राज्ञा धृतराष्ट्रेण सहैव पापमतिः सुयोधनः त्वया उच्यमानं महद्वाक्यमाक्रन्दनरूपवचनं यदि न श्रोष्यते, तर्हि तेन यदुच्यते तदेव वाक्यं प्रियार्थं दुर्योधनप्रियार्थं कुर्विति योजना. ५०. मा क्लिश्यतामित्यत्र यथा सतीति योग्यपदाध्याहारः ५२. तस्मात्तद्वाप्यधार्मिष्ठेत्यत्र—"वा विकल्पापमानयो"रित्यभिधानात्, तद्वा तत् ऊरुदर्शनमिव मृत्युर्भविष्यति. मृत्योर्दर्शनमपि तव भविष्यतीत्यर्थः ८०. क्षुद्रकर्मन्—दुर्योधन. ८३.

## ॥ चतुष्षष्टितमोऽध्यायः ॥

एष वै दासपुत्रेतीत्यत्र—एष दुर्योधनः. ते कुमारकाश्च दासपुत्रेति मा ब्रूयुरिति सम्बन्धः. ३२. पापीयांस इमे भूत्वे-

त्यत्र—पापो दुर्योधनः, तस्य इमे पापिनः, अतिशयेन पापिनः पापीयांसः. सम्यग्दुर्योधनदासतां प्राप्ता इत्यर्थः. ३९॥.

## ॥ पञ्चषष्टितमोऽध्यायः ॥

दाराणां वर्तनमित्यत्र—दाराणां सकाशात् औपासनाग्नौ अग्निहोत्रादिसद्धर्मप्रवर्तनम्. ५॥. अमेध्ये वै गतप्राण इत्यत्र—द्वाराख्ये तृतीयज्योतिस्साधने, अमेध्ये—अपवित्रे, गतप्राणे मृते, शून्ये—सद्धर्मशून्ये, ज्ञातिभिरुज्झिते जातिरहिते च जाते सति एतत् तृतीयं ज्योतिः पुरुषस्यैव देहे उपजायते कुण्डस्थितं तज्ज्योतिः देहान्तस्समारोप्य ध्यानार्चनादिना तत्रैव सेवां कुर्यात्. न तु बहिरित्यर्थः. ७. न चैवोक्ता इत्यत्र—हीनतः—हीनेष्वपि जनेषु, न चैवोक्ताः—प्राक् केनाप्यनुक्ताः कैश्चिदुक्ताश्च वाच्यावाच्यरूपा इत्यर्थः. परुषा गिरः—निष्ठुरोक्तीः. उत्तमपुरुषा न भवन्तीत्यनुत्तमपुरुषाः. भारताः—भरतकुलोत्पन्नाः दुर्योधनादयः सदा प्रतिजल्पन्तीति योजना. ९. सन्तः प्रतीत्यत्र—प्रतिविजानन्तः—प्रतिकर्तुं जानन्तोऽपि सन्तः,आत्मनः परमात्मनः, प्रत्यक्षं—ज्ञानम्. १०. परिघं—परितो घातयतीति परिघः, स्थूलस्तम्भः. १३. यतो नु बुद्धित इत्यत्र?—यती—प्रयत्न इति धातोः यतः प्रयत्नात्?. नादारौ क्रमते शस्त्रमित्यत्र—अदारौ—दारुव्यतिरिक्ते शिलादौ,शस्त्रं—परशुः. २३. यदाचरित-

मार्येणेत्यत्र—आर्येण—उत्तमपुरुषेण. यथा आचरितं—पूर्वमाचरितं, तथा अस्मिन् सत्समागमे त्वयाऽप्याचरितम्. २८.

## ॥ षट्षष्टितमोऽध्यायः ॥

शत्रुसाद्गमयन्नित्यत्र—"तदधीनकार्त्स्न्ययोर्वा सात्" इति वचनात्, शत्रुसात्—शत्र्वधीनं, गमयन्—प्रापयन्. ४. पुरा युद्धात्—पुरा उपायैरित्यर्थः. हितं यथा भवति तथा कुर्वन्तीति योजना. ८. परिहास्यति—"ओ हाक्-त्याग" इति धातोर्लृट् त्यक्ष्यतीत्यर्थः. ९. विवर्त्य—विशेषेण वर्तयित्वा अलङ्कृत्येत्यर्थः. विभज्येति पाठे भुजद्वये विभक्तौ कृत्वेत्यर्थः. १२.

## ॥ सप्तषष्टितमोऽध्यायः ॥

अज्ञातसात् पुनर्द्यूतमित्यत्र?—तथा पूर्वोक्तप्रकारेण एकं वर्षम् अज्ञातसात्—सर्वे अज्ञाता भूत्वा निवसेम. अतः पुनर्द्यूतं प्रवर्ततामिति योजना. ९५॥. त्वन्नेत्रा इत्यत्र—त्वन्नेत्राः त्वमेव नेता प्रेरको येषां ते तथोक्ताः. जीर्णाः—नष्टाः, ते पुत्राः. त्वां मा प्रहासिषुः. "ओ हाङ्-त्याग" इति धातोर्लुङि बहुवचनम्. मा त्यजन्त्वित्यर्थः. ११०. प्रध्वंसिनीत्यत्र—क्रूरसमाश्रिता, क्रूरेषु मर्त्येषु समाश्रिता श्रीः सम्पत् प्रध्वंसिनी तस्यैव नाशकरी. मृदुप्रौढा—मृदुभिः शान्तैः प्रकर्षेण ऊढा अङ्गीकृता, श्रीः—सम्पत् पुत्रपौत्रपर्यन्तं स्थिरीभवतीत्यर्थः. १११.

## ॥ अष्टषष्टितमोऽध्यायः ॥

ततो व्यध्वगतामित्यत्र—विशेषेण अध्वगतं व्यध्वगतं बहुदूरगतमित्यर्थः. १. अहो धिक् बान्धवानित्यत्र—महद्भयं यथा भवति तथा एतान् पाण्डवान्, बुद्ध्या—कुबुद्ध्या बोधयन्ति धिक्. भरतर्षभा वयं च बुद्ध्यन्ते ? कुबुद्धेरवसाने अबुद्ध्यन्त—तैरज्ञायन्त. वयं सर्वे एतेषां दुर्जनानां दृष्टिगोचरा जाताः. न तु पूर्वमिति भावः. यद्वा एतद्दुर्वाक्यफलमेते दुर्योधनादयः प्रागबुद्ध्यन्त अजानन्. अन्वभवन्नित्यर्थः. उपरि बुद्ध्यन्ते अनुभविष्यन्ति, भरतर्षभा वयं च बुद्ध्यामहे परिपाकसमये द्रक्ष्याम इत्यर्थः. १४. एप वै ग्लह एवैक इत्यत्र—एषः गजाश्वादीनां त्यागः एको ग्लहः. एकः वनवासाय गमनं (?) एकेन सर्वक्षयेण एकेन वनवासाय गमनेन चेति पणद्वयेन दीव्यावेति पूर्वेणान्वयः. १८॥. भीष्मद्रोणैर्वार्यमाण इत्यत्र—यौ भीष्मद्रोणौ ताभ्यां वार्यमाणः. २१. वार्यतेऽतीव सततमित्यत्र—पूर्वोक्तैर्विदुरादिभिर्धर्मराजः, अतीव वार्यते हितकाम्यया एवं संवार्यमाणोऽपि कौन्तेयो राजा दैवकार्यार्थसिद्ध्यर्थं न नियच्छति द्यूतगतं. मनो न नियमयति. २३॥. वनवासाय दीव्यते—शकुनये २५॥. तत् वनवासाय गमनमेव पार्थः प्रतिजग्राह. तदा शकुनिः ग्लहं—ग्लाह्यतेऽनेनेति ग्लहमक्षं जग्राह. २६॥.

## ॥ एकोनसप्ततितमोऽध्यायः ॥

धार्तराष्ट्रान् प्रहासिषुः इत्यत्र—"हसे–हसन" इति धातोः प्रकर्षेण हासिषुरहासिषुः.? अहसन्नित्यर्थः. "बहुलं छन्दस्यमाङ् योगेऽपी"ति सूत्रात् अडागमाभावः. ६. षण्डतिलाः—स्नेह-रहिततिलाः. ८. स चाकार्षीद् दुष्कृतमित्यत्र—दुष्कृतं, कर्तुमयोग्यम्, अकार्यमित्यर्थः. याज्ञसेन्याः पतयः क्लीबा इति ते तेषां द्रौपदी न दत्ता त इमे जना हसन्ति. १०. अजिनानितोषितानित्यत्र—उषितान् देशान्तरं गतान्. भिक्षुकानिव, अजिनान्, "अर्श आदिभ्योऽजि"ति वचनात् अजिनं रौरवाजिनं, तद्वत इत्यर्थः. ११. यथा काकयवा इत्यत्र—काकयवाः—काकभजनीभूतयवाः. यवाकारतृणविशेषा वा. १३. गौर्गौरिति स्माह्वयन्नित्यत्र—गौः गोरूपपशुः, गोपालैः क्रियमाणशब्द-विशेषो वा गौः माहस्म?. १९. सुकृतां लोकानित्यत्र—सुष्ठु कुर्वन्तीति सुकृतः. पुण्यकृतः तेषाम्. २१. ततः स राजे-त्यत्र—भीमसेनस्य रोषात् रोषं दृष्टान्तीकृत्य, सरोषात् तद्रो-षसमानरोषं स्वयमप्यनुकृत्य, पाण्डवानां निर्गच्छतां सताम्. २३. यन्नो बुद्धमित्यत्र—बुद्धं—बुद्धिस्थम्. २७. अस्य निरस्य? २९. गृहेषु स्वान् सुखिनः मत्वा. ३०. न वै वाच्यमित्यत्र—सतां सज्जनानां, व्यवसितं स्वमनसि निर्णीतं प्रमेयं वाच्यं न वै, किन्तु स्वयमेव विज्ञायताम्. फलकाले दृश्यताम्. ३१. असूनृतानां वक्तार-

मित्यत्र—"अश्लीलं सूनृतं प्रिये" इत्यभिधानात्, असूनृतानां—न विद्यते सूनृतं येषां ते तथोक्ताः. संहृष्टानां दुरात्मनां वक्तारम्. कुमार्गवक्तारम्. ३३. अक्षाणि मूढेत्यत्र—ते तव एतान्यक्षाणि अक्षाणि न, किन्तु समरे त्वया वृताः एते मया प्रयुक्ताः बाणा एव अक्षाणीति योजना. ४०. द्रौपद्याः पदवीं चरन्नित्यत्र—द्रौपद्याः पदवीं, केशाभिमर्शकरस्पर्शकर्षणादिपदवीं, चरन्–उलूकेऽप्याचरन्, सन्तुष्टाः सम्भवः (?) वर्तध्वम्. ४७ इह—भवत्सु को वा अन्योन्यं न स्पृहयेत्, स्पृहामिच्छां न कुर्यात्, सर्वेप्यन्योन्यमनोनुकूला इति भावः. इह भवत्सु न स्पृहयेत् इच्छां न कुर्यादिति सम्बन्धः. ५९. हिमवतीत्यत्र—हिमवति शतशृङ्गे, पुरा–बाल्ये, मेरुसावर्णिना–मेरुसावर्ण्याख्यमनुना. ६१. असितस्य–असिताख्यमहर्षेः सकाशादपि. ६२. महर्षिः साम्पराय इत्यत्र—"साम्परायस्तु सङ्ग्राम आपदागामिकालयो"रित्यभिधानात्, साम्पराये आपदि, धौम्यः ते बुद्धिं वक्ष्यतीति योग्यक्रियया सम्बन्धः. ६३. आत्मप्रदान इत्यत्र—सौम्ये–सोमसम्बन्धिनि आत्मप्रदाने–स्वकलादानवत् स्वस्यैव दाने आत्मजीवने–प्राणिनां जीवने. ६५॥. सामग्र्यं–समग्रस्य पूर्णस्य भावः सामग्र्यं सदा एकप्रकारेण स्थितः. भूतेभ्यः—

पृथिव्यादिपञ्चमहाभूतेभ्यः. ६६॥ अगदम् आरोग्यम्. ६७॥ आपृष्टः—आसमन्तात् पृष्टं प्रश्नः यस्य स तथोक्तः. ६८॥.

## ॥ सप्ततितमोऽध्यायः ॥

सस्त्रीकाः—स्त्रीभिः सहिताः. बाला वृद्धाश्च. ? उदासीना व्यलोकयन्नित्यत्र—उदासीनाः उच्चस्थानेष्वासीनाः. २॥. न हि रथ्यास्ततः शक्या इत्यत्र—यतः ता रथ्याः—रथवीथ्यः, स्वजनैः—बन्धुजनैः, आकुलाः, ततः स्त्रीबालवृद्धानां गन्तुं शक्या न. ३. तेन कारणेन ते सर्वे आरुह्य पाण्डवं पश्यन्ति. ४. अन्यत्र न? निकृत्या—नितरां कृतिः कार्यं, यथा उपरि बहुकार्यमस्तीत्युक्त्वा बद्धकार्मुकौ भीमार्जुनौ वारयिता इदानीं किमपि न कार्यमिति वारयिता पुरोधाश्चेति सम्बन्धः. ७. सर्वतोदकधूमानीत्यत्र—"तुद्-व्यथन" इति धातोः सर्वान्—तुदतीति सर्वतोदको धूमो येषां तानि. २०॥. अनाक्रान्तम् अस्माभिरनाक्रान्तम्. २४॥. प्रासादजालानि—प्रासादगवाक्षान्. २८. गुरुधर्माभिगुप्ता–गुरुः श्रेष्ठः, धर्मः, तेन अभिगुप्ता. ३८॥. सुहृद्भिः सह अनुशोचतः. ४२॥. शतशृङ्गात् गजाह्वयं नागमिष्यम्. ४८॥. यमपुत्राधिमप्राप्येत्यत्र—यमौ यमलौ नकुलसहदेवौ, पुत्रौ यस्याः सा माद्री. ४९॥. मे जीवितमेव प्रियं यस्याः सा जीवितप्रिया, तस्याः भावः जीवितप्रियता, तां, धिक्. क्लेशभागिनीं मां च धिक्. ५१॥. अभिसान्त्व्य—

अन्तर्नीतो णिच्. अभिसान्त्वय्य. ५७. आर्तातुराश्शनैरित्यत्र ? —"आतुरो भ्रामितो भ्रान्त" इत्यभिधानात् आर्ताश्च ते आतुरा भ्रान्ताश्च आर्तातुराः. ५८.

॥ एकसप्ततितमोऽध्यायः ॥

एवं कस्मादित्यत्र—अहं ते ब्रवीमि तन्निमित्तं ममाचक्ष्वेति योजना. ८. निकृतस्यापीत्यत्र—निकृतविषयतया कृतः. निकृतः तस्यापि. ९. असक्ताः (दा) शरवर्षाणीत्यत्र—स्वमुक्त-शराः, असक्ताः अन्योन्यमसक्ताः यथा स्युः तथा इदं च उपलक्षणम्. असंख्याताश्चेत्यपि द्रष्टव्यम्. १५॥. हतपत्या इत्यत्र—पत्या जात्येकवचनम्. स्वस्वपतिभिः वैधव्यं प्रापयित्वा मृतप्रायाः कृताः. १९॥. रजस्वलाः—रणभूमौ स्वस्वपति-शवालिङ्गनेन धूलीधूसरिताङ्ग्यः. २०॥. कुरूणां कुरव इत्यत्र—कुरवः प्रे(र)तकर्मकरणशीलाः पुरोहिताः. २२॥. निश्शेषस्ते भविष्यतीत्यत्र—ते वंशः. रौद्रान् याम्यानि गायतीत्यत्र—रौद्रान्—भयङ्करमन्त्रान्. याम्यानि—सूक्तानि. २३॥. प्रव्याहरन्त इत्यत्र—प्रकर्षेण व्याहरन्तः. स्वस्वध्वनिं कुर्वन्तः. "व्याहारोदीरणकथनादयश्च तद्भेदाः" इति हलः. २७॥. द्रोणं दीपमित्यत्र—भयान्धकारपरिहाराय दीपस्था-नीयं दीपं द्रोणम्. ५०. मर्त्यधर्मतयेत्यत्र—अस्माकं मृत्यु-भूतादिति योग्यपदाध्याहारः ?. ५८. सृष्टप्राण इत्यत्र—भृशतरं

सम्यक् यस्मात् सृष्टप्राणः ततः धनदानेन सृष्टः प्राणनं जीवनं यस्य. ५९॥. पर्ययो विपर्ययः. ६०॥. गुरुर्द्रोणः. ६४.

## ॥ द्विसप्ततितमोऽध्यायः ॥

सानुबन्धः—अनु अनन्तरं, नाशानन्तरमित्यर्थः, बन्धः याम्यपाशैः बन्धनादिनिर्बन्धः. तेन सहितः सानुबन्धः. ५. अपनीतानीत्यत्र—अपनीतानि नीतिविरुद्धानि कर्माणि. ८. कुलजां तां त्रिभावरीमित्यत्र—विभावरीं विभावः विरुद्धं भावयन् खलः रीयते नाशं प्राप्नोति यस्याः सकाशात् सा विभावरी. "भा—दीप्ता"विति धातोः विशेषेण प्रभावती वा. तां परिहूय, परितः आह्वानं कृत्वा. १३. दुर्द्यूतदेविनः शकुनेः द्यूते. १३॥. अविशेषं भवेदित्यत्र—अविशेषं विशेषेण शेषरहितं कुलम्. १८. आसीन्निष्ठातप इत्यत्र—नितरां स्थितः आसमन्तात् तपः तपनं यस्य स सूर्यः तथोक्तः. २०॥. अन्वज्ञासिषम्—आज्ञामकरवम्. २६॥.

मङ्गलमहाश्री "ग्रन्थाग्रं सप्तके याते व्याप्तौ चाष्टसमाख्यया। श्लोकानां द्वे सहस्रे तु पञ्चश्लोकशतानि च"त्यत्र व्याप्तौ श्लोकानां सम्भूतौ विचार्यमाणायां सत्यां अष्टसमाख्यया शतानामष्टसमाख्यया सह सप्तके याते सति पञ्चदशात्मकशतश्लोकेषु गतेषु

सात्त्वित्यर्थः. उपरि श्लोकानां द्वे सहस्रे द्वे द्वित्वसंख्यायुक्ते यथा भवतः तथा गणितानि पञ्चश्लोकशतानि पञ्चशतद्विकं चेति यावत्. मिलित्वा "चतुस्सहस्रं श्लोकानां पञ्चश्लोकशतानि चे"ति प्रागनुक्रमणिकाध्यायोक्तप्रकारेण पञ्चशतसाहिता श्लोकानां चतुस्सहस्री ग्रन्थाग्रम्. "अग्रं पुरश्शिखामानश्रेष्ठादिषु फलादिषु" इत्यभिधानात् श्लोकप्रमाणं ज्ञातव्यमित्यर्थः. इति सङ्ख्याकथकश्लोकस्यार्थः.

इति श्रीमत्कविकुलतिलकवादिराजतीर्थपूज्यचरणविरचितायां
लक्षालङ्काराख्यायां महाभारतटीकायां
सभापर्व समाप्तम् ॥

॥ श्रीः ॥

एकां मातृकामालम्ब्य लक्षालङ्कारटीकाया मुद्रणानन्तरं उडुपिक्षेत्रादपरा सम्पूर्णा मातृका समागता. तत्स्थपाठभेदा अधः प्रदर्श्यन्ते ॥

| पुटम् | पङ्क्तिः | मुद्रितटीका | उडुपिटीका |
|---|---|---|---|
| ५९७ | १६ | अभी(हिं)शून् | अभीशून् |
| ५९८ | १८ | विबाधसे | न विबाधसे |
| ५९९ | ३ | सर्वोपायान् | सप्तोपायान् |
| | ५ | सन्धायीति | सन्धायीनि |
| | ६ | भरत | भारत |
| | ८ | विरुद्धः अवसायः | विरुद्धः अवसा अवसायः |
| | ११ | परवैरिण | परे वैरिण |
| | १८ | मन्त्रयन्नित्यत्र | मन्त्रयस इत्यत्र |
| ६०० | ८ | बन्धशिक्षणादिकं | बन्धनशिक्षणादिकं |
| ६०१ | २ | यात्रापूर्वमेव | यात्रातः पूर्वमेव |
| | १९ | कामयमानं | कामयानं |
| ६०२ | १६ | अयो वा (?) | अन्यो वा |
| ६०३ | १ | त्रिविधं | समीक्ष्य त्रिविधं |
| | १० | लकुटेन (?) | लङ्कुटेन |
| | १२ | अभिधाय | अभियाय |

| पुटम् | पङ्क्तिः | मुद्रितटीका | उडुपिटीका |
|---|---|---|---|
| ६०३ | १३ | निहंसि | विहंसि |
| ६०४ | ८ | कच्चित् | बाह्या जना न प्रतिजानन्ति कच्चित् |
| | १० | व्यवहारा | व्यवहारा वा |
| ६०५ | १८ | नाडिपरीक्षा | नाडीपरीक्षा |
| ६०६ | ११ | शोधन | शोधने |
| ६०७ | १४ | सभानित्यत्र | सभानित्य इत्यत्र |
| ६०९ | ४ | स्वशे (?) | स्ववशे |
| | ८ | डिभिता | डिभिका |
| ६१० | १५ | प्रस्थको | प्रस्थक |
| | २० | अत्यस्पष्टम् (?) | अन्यत् स्पष्टम् |
| ६११ | ५ | पर्राक्षस्या (?) | परोक्षस्या |
| | १३ | परापरा | परपरा |
| | १६ | ज्ञातःकार्यं | ज्ञातकार्यं |
| ६१२ | १२ | नावस्थानमिव | नावसानमिव |
| | १३ | अवसानम् | अन्तं अवसानम् |
| ६१३ | २ | जरासन्धसंक्षये | जरासन्धस्य क्षये |
| | ९ | प्रजायेथमुभे | प्रजायेतामुभे |
| | १० | प्रजायेथं | प्रजायेतां |
| | १४ | हेतोरुपेक्षित | नीतिहेतोरुपेक्षि |

| पुटम् | पङ्क्तिः | मुद्रितटीका | उडुपिटीका |
|---|---|---|---|
| ६१३ | २० | आयामुदुत्तिन्नतेः (?) | आयामादुन्नतेः |
| ६१४ | ७ | कार्यकारि (?) | कार्याकारि |
| | १२ | सत्त्व | स्वसत्त्व |
| ६१५ | २ | मणैः (?) | मणेः |
| | ५ | माषादरूपको | माषादनामको |
| | ८ | भवति | भवन्ति |
| | १४ | दामभिः | मालादामभिः |
| | २० | ह्येत इत्यत्र | ह्येतादित्यत्र |
| ६१६ | १० | प्रसृजति | प्रसृजति - आगसि प्र- |
| | ११ | यस्मात् | यस्मात् स [सृजति |
| | १८ | सम्यगालम्भः | सम्यगालभनम् |
| ६१७ | १ | हिंसनं न कुर्यादिति | हिंसनं न कुर्यात्— सवर्णानां हिंसनं न कुर्यादिति |
| | २ | ते पर्यायं | ते वयं |
| | १९ | जरासन्धसेनापती | जरासन्धस्य सेनापती |
| ६१८ | ७ | प्रबल | तदर्थं प्रबल |
| | ९ | याम्यानां | याम्येनमायया— |
| | १५ | तं | तत् [याम्यानां |
| ६१९ | १९ | ककुभेन (?) | कुम्भेन |

| पुटम् | पङ्क्तिः | मुद्रितटीका | उडुपिटीका |
|---|---|---|---|
| ६२० | ९ | कल्माषान्-कृष्ण | कल्माषान्-तित्तिरि-पक्षिवत् कल्माषान् [कृष्ण |
| | १३ | परमा | परा |
| | १८ | प्रविश्य | बलात् प्रविश्य |
| ३२१ | ७ | योग्यायोग्यसर्वस्वं | योग्यायोग्यञ्च सर्वं |
| ६२२ | ५ | ऊढा | ऊढ्वा |
| ६२३ | ७ | वैवाहिकाद्याः | वैवाहिकाख्याः |
| | १२ | शालान्तरालङ्कृता | शालान्तरलङ्कृता |
| | १४ | वितण्डानाः | एवमेतत्-एतद्देवं नेत्याद्याकारेण वितण्डानाः |
| | १७ | पूजायोग्यम् | इज्यं-पूजायोग्यम् |
| ६२४ | ४ | प्राक् आययौ | प्राक् यः आययौ |
| | १४ | सम्प्रयात् (?) | सम्प्रायात् |
| | १६ | उपायात् | उपायात्- सभामध्यमुपायात् |
| | १७ | संयुक्तं | संयुक्तमित्यत्र |
| ६२६ | १ | असृजत् | उपादिशत् |
| | ४ | सङ्कल्पाः | सकल्पाः |
| | ५ | सङ्कल्पाः | सकल्पाः |

| पुटम् | पङ्क्तिः | मुद्रितटीका | उडुपिटीका |
|---|---|---|---|
| ६२६ | ६ | कपिभूत्वा | कपिर्भूत्वा |
| | १० | वर्तन्त इति | अस्य वर्तन्त इति |
| | २० | प्रादुर्भावः | प्रादुर्भावः-पद्मनाभा - ख्यः प्रादुर्भावः |
| ६२७ | ६ | सहस्रन्यून | त्रिसहस्रन्यून |
| | ७ | इत्यपभ्रंश | सुडुमण्णु इत्यपभ्रंश |
| | १२ | सादृश्यम् | सदृशस्य |
| ६२८ | १ | तिवचनात् | त्यभिधानात् |
| | २० | प्रीति (?) | प्रति |
| ६२९ | ७ | पक्षपातान (?) | पक्षपातवान् |
| | ९ | विशेषाः | विशेषः |
| | १० | तुम्वुरु | तुम्बुरुः |
| | | तुम्वुरुकरे (?) | तुम्बुरू करे |
| | १४ | पर्णवाद्यान्तरे | पुनर्वाद्यान्तरे |
| ६३० | ६ | लिङ्गं स्थितः | लिङ्गं स्थं स्थितः |
| | ७ | स्थितः (?) | स्थः |
| | ८ | आदेवयानम् | आदेवयानमित्यत्र आ- |
| | २० | न्यङ्कुस्तथा | रङ्कुस्तथा [देवयानम् |
| ६३१ | ९ | नेमिहंसपदेषु | नेमिहंसपदेषु देशेषु |
| | ११ | वक्रारयानेत्यत्र | वक्रानुयानेत्यत्र |

| पुटम् | पङ्क्तिः | मुद्रितटीका | उडुपिटीका |
|---|---|---|---|
| ६३१ | १४ | तृती(यस्यां)यायां | तृतीयायां |
| | १९ | गा(थ)थिन | गाथिन |
| | ६ | तप (?) | तव |
| ६३२ | १४ | इच्छितम् (?) | नेच्छितम् |
| | ५ | येनोत्सुग (?) | येनोत्सङ्ग |
| ६३३ | ६ | सभगौ (?) | संभग्नौ |
| | ७ | दामानां (?) | दाम्नां |
| | १५ | वरदं(दा)स्तुहि | वरदं स्तुहि |
| | १६ | तेन।पौनरुक्त्यं | तेन न पौनरुक्त्यं |
| | २० | ना न (?) काले | दानकाले |
| ६३४ | ५ | वृत्ति | कृष्णकीर्ति |
| | ९ | वस्त्वस्वभावं (?) | वस्तुस्वभावं |
| | १७ | कृष्णस्य कृष्णस्य (?) | कृष्णस्य |
| | | स एव | शर एव |
| ६३५ | १ | वक्रार्थम् | वक्त्रार्थम् |
| | १४ | दी(य)नस्थान | नीचस्थाना |
| ६३६ | १३ | शुष्कवर्णा | शुष्कपर्णा |
| ६३७ | १ | ये मानना। | नीयमानानां |
| | ५ | बाहु | बहु |
| | ६ | एणी | घरगे |

| पुटम् | पङ्क्तिः | मुद्रितटीका | उडुपिटीका |
|---|---|---|---|
| ६३७ | ७ | विशेषान्-वा | विशेषान्वा |
| | १६ | प्रजागरेण | प्रजाकारेण |
| | १९ | त्रासा (?) | त्रस्ता |
| ६३८ | १० | असुर | मयि न-असुर |
| | १५ | प्रत्यविक्षन् (?) | प्रत्यपिक्षन् |
| ६३९ | १२ | वञ्चनादि | वञ्चनानि |
| ६४० | १० | र्युतः | वृतः |
| | १४ | वर्धमानान् | वर्धमानान् - अस्मान् हीयमानान् |
| ६४१ | २० | दासाः-दासाः | दासानुदासाः |
| ६४२ | ९ | मम्रृषसेहेषु (?) | मम्रृष——सेहे |
| | १७ | स्थानित्यर्थः | स्कानित्यर्थः |
| ६४३ | १३ | पर | परं |
| ६४४ | ७ | कालेकज्वाला (?) | कालेयकं ज्वाला |
| | १० | भूहूणा (?) | हूणा |
| | ११ | मीनान् (?) | चीनान् |
| ६४५ | ५ | कबु | कम्बु |
| | | कबु | कम्बु |
| | ९ | दत्तावदपि (?) | दत्ता पदवी |
| | १० | मह्यं | मह्यां |
| | ११ | मह्यं | मह्यां |

| पुटम् | पङ्क्तिः | मुद्रितटीका | उड्डपिटीका |
|---|---|---|---|
| ६४६ | १ | (झ)त्सरुः | त्सरुः |
| | | (झ)त्सरुं | त्सरुं |
| | २ | सन् (झ)त्सरुः | सन् त्सरुः |
| | ११ | बिलेशयाः | बिलशयाः |
| | १४ | सबन्धुकराष्ट्रं | सबन्धुकं राष्ट्रं |
| ६४७ | ३ | धर्म | जयश्च धर्म |
| | ५ | तापयतीति | तापयति-नाशयतीति |
| | ८ | तत्सत्वदाहारणा- | तत्सम्पदाहरणा |
| | १३ | क्लिन्नपट | क्लिन्नवट |
| | | पटः | वटः |
| | २० | तथा | तथा-आदि. |
| ६४८ | १८ | अभ्ययुज्यते | अद्य युज्यते |
| | १९ | निकृत्यामभ्येति | निकृत्या अभ्येति |
| ६४९ | १ | निकृत्यामभ्येति | निकृत्या अभ्येति |
| | ७ | स्थापिता इति | स्थापितार्था इति |
| | १५ | लक्ष्णावन्त | लक्ष्णवन्त |
| ६५० | १७ | किञ्चेदं | किञ्चिद्वं |
| ६५१ | ८ | भृत्यबलात्-विचार्य | भृत्यबलमविचार्य |
| | ११ | नरोचसे वान्नरोचे(?) | न रोचे-सेवां न रोचे |
| ६५२ | ५ | पाव | पाप |
| | | ते नराः | ते श्वनराः |

| पुटम् | पङ्क्तिः | मुद्रितटीका | उडुपिटीका |
|---|---|---|---|
| ६५२ | १४ | धीरबलावपि | धीरबालावपि |
| | १६ | सुपूजा | स्वपूजा |
| | १८ | अस्सोऽव्यरक्त(?) | अस्वोप्यशक्त |
| ६५३ | ७ | स योनिं | स्वयोनिं |
| | ८ | वराङ्गनाः | वाराङ्गनाः |
| | १० | कामयेदिति | कामयेति |
| ६५४ | २ | प्रष्टुः | औद्धत्यात् तत्प्रश्न-वाक्यमेवाश्रृण्वन्नित्य-र्थः. यद्वा गोकर्णशिथि-लं—गोः प्रष्टुर्वचनस्य—कर्णः. कर्णनमाकर्णनं यस्मिन्. जातेऽपि शि-थिलः— प्रत्युत्तराच्छि-थिलो भ्रंशितो यथा भवति तथा—चरन् आचरन्—प्रष्टुः. |
| | ११ | यत्रेत्यत्र-यत्र | तत्रेत्यत्र-तत्र |
| ६५५ | १ | धर्माः मार्गान्न | धर्मान्मार्गान्न |
| | ३ | भवतीति | भवसीति |
| | १० | मर्त्यधर्मात् | सत्यधर्मान् |
| ६५६ | ६ | पराजितात्मानः | पराजितात्मा न |

॥ श्रीरस्तु ॥

## महाभारतसभापर्वविषयाणाम्

## अक्षरमातृकाक्रमेण सूचनम्



अध्यायः-पुटम्

---

॥ श्रीः ॥

# महाभारतसभापर्वस्थानामशुद्धानां शोधनम्

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १२ | १ | देवंदत्तः | देवदत्तः |
| ३० | १७ | भिषकं | भिषक् |
| ५४ | १२ | स्सार्वम् | स्सार्धम् |
| ७१ | १४ | पालयनं | पालयन् |
| ८२ | १६ | समुपक्रात | समुपक्रान्ते |
| ८५ | ६ | अष्टादशाकुलै | अष्टादशकुलै |

८५ पुटे १७-१८ पङ्क्त्योः प्रमादपतितार्धद्वयम्

अशुद्धम्

वसुदेवोग्रसेन जिच्छ यमलो राजराजगुणान्वितः ।
प्रसेन जिच्य यमलो राजराजगुणान्वितः ॥

शुद्धम्

वसुदेवोग्रसेनौ च सप्तैते मन्त्रिपुङ्गवाः ।
प्रसेनजिच्च यमलो राजराजगुणान्वितः ॥

| | | | |
|---|---|---|---|
| ८९ | ७ | वंशाननुभृशं | वंशाननुमृशन् |
| ९० | ९ | प्रतियुद्धन्त | प्रतियुध्यन्त |
| ९५ | ११ | स्पृष्टाऽग्नि | स्पृष्ट्वाऽग्नि |
| १०४ | ९ | शस्त्रारण्यस्य | शस्त्राण्यस्य |

B.—44

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १२३ | १६ | वैशम्पायनं | वैशम्पायन |
| १२७ | १ | राजन् उग्र | राजन्नुग्र |
| १३० | ९ | अविश्वान्तं | अविश्रान्तं |
| १३३ | १० | मंही | मही |
| १६८ | ९ | महैजसम् | महौजसम् |
| १८२ | ११ | क्वचित् | काचित् |
| ,, | १३ | क्वचित् | काचित् |
| १८५ | १० | सङ्काशश् | सङ्काशस् |
| २०० | १ | मार्गावित् | मार्गवित् |
| २१४ | ३ | चार्चनं | चार्चनम् |
| २२५ | ५ | कौसलेन्द्रे | कोसलेन्द्रे |
| २२७ | ९ | त्वं | त्वम् |
| २२९ | १७ | क्तुं | वक्तुं |
| २५१ | १४ | महातेजा | महातेजाः |
| २५६ | १४ | पर्यचस्त् | पर्यचरत् |
| २६० | ९ | ब्रह्य | ब्रह्म |
| ,, | १८ | राजेद्रान् | राजेन्द्रान् |
| ३०५ | १३ | पाण्डेरण | पाण्डरेण |
| ३११ | ८ | स्वयं | स्वयम् |
| ,, | १४ | यच्छृङ्गं | यच्छृङ्गम् |
| ३१९ | ७ | भूतानां | भूतानाम् |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| ३२९ | १४ | बृंहुभि | बेंहुभि |
| ३४६ | १० | मवगच्छसि | मवगच्छति |
| ४०८ | ३ | हि स्थितघृद्धयः | ह्यस्थिरवृद्धयः |
| ४०९ | ५ | निवर्तयिष्यंति | निवर्तयिष्यति |
| ४२९ | १५ | प्रणीयमाण | प्रणीयमान |
| ४३० | ९ | सत्यसम्धा | सत्यसन्धा |
| ४७१ | १९ | राजन् तेन | राजंस् तेन |
| ५०६ | १७ | समामिमाम् | सभामिमाम् |
| ५१९ | ३ | पांप | पापं |
| ५२४ | १३ | विव्यधुः | विव्यथुः |
| ५३६ | १५ | राजंस् चक्र | राजंश् चक्र |
| ५३७ | ९ | सुबहून् जित्वा | सुबहूञ् जित्वा |
| ५८१ | १० | पोराश्च | पौराश्च |

PRINTED AT THE "VAVILLA" PRESS, MADRAS.—1932.